श्रीभानुदत्तविरचिता

# रसमञ्जरी

व्याख्याद्वयोपेता

कुलपतिश्रीविद्यानिवासमिश्रप्ररोचनया
समलङ्कृता

सम्पादकः
श्रीजनार्दनपाण्डेयः



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ
[ Vol. 134 ]

# RASAMAÑJARĪ

OF

ŚRĪ BHĀNUDATTA

With the Commentaries

## SAMAÑJASĀ

BY

ŚRĪ VIŚVEŚVARA

&

## SUKHĀVABODHĀ

BY

ŚRĪ JANĀRDANA PĀṆḌEYA

FOREWORD BY

DR. VIDYANIWAS MISRA

VICE-CHANCELLOR

EDITED BY
ŚRĪ JANĀRDANA PĀṆḌEYA
EX-Cataloguer,
SARASVATIBHAVANA LIBRARY
Sampurnanand Sanskrit University
Varanasi




VARANASI
1991

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
**Publication Officer,**
**Sampurnanand Sanskrit University**
**Varanasi—221 002.**



**[ Published under the Rare Texts Publication scheme of Sarasvati Bhavana Library with financial assistance Provided by University Grants Commission ]**

**Available At—**
**Sales Department,**
**Sampurnanand Sanskrit University**
**Varanasi—221 002.**

**First Edition, 1000 Copies**
**Price Rs. 50. 00**



**Printed by—**
**Hindi Sahitya Sammelan Press**
**Prayaga.**

सरस्वतीभवन-ग्रन्थमाला

[ १३४ ]

श्रीमद्भानुदत्तविरचिता

# र स म ञ्ज री

श्रीविश्वेश्वरकृतया
'समञ्जसा'-व्याख्यया

श्रीजनार्दनपाण्डेयकृतया
'सुखावबोधा'व्याख्यया च

विभूषिता

कुलपति-श्रीविद्यानिवासमिश्रप्ररोचनया

समलङ्कृता

सम्पादकः
**श्रीजनार्दनपाण्डेयः**
भू० पू० सूचीकारः,
सरस्वतीभवनपुस्तकालयस्य,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी




वाराणस्याम्

२०४८ तमे वैक्रमाब्दे    १९१३ तमे शकाब्दे    १९९१ तमे ख्रैस्ताब्दे

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

[ सरस्वतीभवनपुस्तकालयस्य प्रकाशनसम्बन्धिविशेषयोजनान्तर्गतः
विश्वविद्यालयानुदानायोगतः प्राप्तवित्तीयसाहाय्येन प्रकाशितम्।]

□

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— ५० = ०० रूप्यकाणि

□

मुद्रकः—
हिन्दी-साहित्य-सम्मेलन-प्रेस,
प्रयाग।

# प्ररोचना

प्रकाश्यमानो **रसमञ्जरी**-ग्रन्थः पूर्वं स्वीकृतायां विश्वविद्यालयानुदानायोगयोजनायामधिकृत्य पुस्तकालयस्य तदानीन्तनसूचीकारेण **श्रीजनार्दनपाण्डेयेन** मातृका अवलोक्य सम्परीक्ष्य च सम्पादितः। भूयांसं कालं पुस्तकमिदं भूमिका विना मुद्रितमासीत्। अस्मिन्नेव मासे अहं सुहृद्वर्येण **श्रीप्रभातशास्त्रिणा** विज्ञापितो यदेष ग्रन्थो हिन्दीसाहित्यसम्मेलनमुद्रणालये मुद्रितं प्रकाशनमुखं प्रतीक्ष्यमाणं स्मृतिमानीतः। तन्मया मुद्रितानि पत्रकाणि तस्मान्मुद्रणालयात् समानीय प्रस्तुतया संक्षिप्तया भूमिकया ग्रन्थः प्रकाशनार्हः कृतः।

रसमञ्जरीग्रन्थकारः सुप्रसिद्धो विद्वान् **श्रीभानुदत्तः, भानुकरमिश्रा**-पराभिधानश्च त्रयोदश-चतुर्दशशताब्द्योरन्तराले समभवत्। रसमञ्जर्यामेव तेन स्वजन्मभूः **'विदेहभूः'** निगदिता। अयमेव **रसतरङ्गिणी-अलङ्कारतिलक-चित्रचन्द्रिका-गीतगौरीश-मुहूर्त्तसार-रसकल्पतरु-कुमारभार्गवीय**-प्रभृतिग्रन्थानां रचनाकार इति प्रसिद्धिः। **शृङ्गारदीपिका**ऽपि अस्यैव ग्रन्थ इति केश्चनैर्मन्यते। अस्य कृतिकारस्य प्रसिद्धिः प्रधानतो रसतरङ्गिणी–रसमञ्जरीकारत्वेन संस्कृतसाहित्ये वरीवर्तते।

अस्य ग्रन्थस्य मुख्याष्टीकाः **'विवेकः'** आचार्यगोपालकृतः, **'सुरभिः'** आचार्यबदरीनाथशास्त्रिकृता। अन्येषामपि टीकाकाराणां नामानि श्रूयन्ते। रसमञ्जर्या वर्ण्यविषयो नायक-नायिकाभेदः। रसमञ्जरीग्रन्थो भानुदत्तवृत्त्या समुपेतः प्रकाशितश्च, तथापि **श्रीविश्वेश्वरकृत-समञ्जसया** टीकया, **श्रीजनार्दनपाण्डेयकृत-सुखावबोधया** टीकया समुपेत इत्यस्य परमो विशेषः। श्रीविश्वेश्वरविदुषां टीका तर्कसम्पुष्टा, श्रीजनार्दनपाण्डेयविदुषां च टीका रसपेशला।

इमानि वत्सराणि स्थगितस्य प्रस्तुतस्य ग्रन्थस्य उन्मीलनवेलायां मुदमावहामि। श्रीपाण्डेयविद्वद्भ्यः, बन्धुवर**श्रीप्रभातशास्त्रि**भ्यश्च भूयोभूयः साधुवादान् वितरामि।

मन्ये, अयं ग्रन्थः साहित्यशास्त्रस्याध्येतॄणां कृते महदुपकारकं भवेदिति शम्।

**वाराणस्याम्**
मकरसङ्क्रान्तिपर्वणि,
वि० सं० २०४८
(१५।१।१९९२ खैस्ताब्दे)

**विद्यानिवासमिश्रः**
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणिका

श्रीमद्भानुदत्तविरचिता

# रसमञ्जरी

समञ्जसा सुखावबोधेति

टीकाद्वय-संवलिता

।। श्रीमन्महागणपतये नमः ।।

# रसमञ्जरी

**आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि**
**स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया ।**
**तल्पे किं च मृगत्वचाविरचिते निद्राति भागैर्निजै-**
**रन्तः प्रेमभरालसां प्रियतमामङ्के दधानो हरः ।।१।।**

---

## समञ्जसा

हेरम्बमम्बुजाक्षं त्र्यम्बकमम्बरमणिं च जगदम्बाम्।
प्रणमामि प्रकृतार्थप्रत्यूहसमूहहानाय ।।१।।
प्रणम्य सम्यक्प्रतिपत्तिरम्यं लक्ष्मीधराख्यं धिषणं धरायाः।
विश्वेश्वरेण क्रियते समासात् समञ्जसार्था रसमञ्जरीयम् ।।२।।

प्रारीप्सितसमाप्तिप्रतिवन्धकदुरितविदलनाय कृतं मङ्गलं शिष्यशिक्षायै निवध्नाति—आत्मीयमिति। अनेन स्नेहविषयत्वं सूच्यते। चरणमित्येकत्वेन तदतिशयद्योतनम् । पुरत इति वैषम्य-

## सुखाववोधा

**विश्वेश्वरं प्रणम्यादौ गिरिजां च गजाननम्।**
**विवरीतुं प्रवृत्तोऽहं भानुजां रसमञ्जरीम् ।।१।।**
**समञ्जसा तु संग्राह्या प्रौढधीभिर्विचक्षणैः।**
**सुखाववोधा क्रियते मया स्वल्पधियामपि ।।२।।**

शिष्टाचारानुरोधेन मङ्गलमारचयन् ग्रन्थकृदर्द्धनारीश्वरस्वरूपवतो भगवतश्चेष्टाः स्मरति—आत्मीयमित्यादि। अन्तर् मनसि **प्रेमभरेण स्नेहाति**

प्रत्यक्षेऽपि चरणनिधानात् प्रेमातिशयसूचनम्। तच्च निपातान्तरम्। "इयं च तेऽन्या पुरतो विडम्बना" इति कालिदासः, "पश्यामि तामत इवः पुरतश्च पश्चात्" इति भवभूतिः। एतेन "मुखस्य पुरतश्चन्द्रो निःप्रभ" इति चित्रमीमांसाप्रयोगोऽसाधुरितिरसगङ्गाधरोक्तमपास्तम्।

केचित्तु "दक्षिणोत्तराभ्यामतसुच्" इत्यत्र तसुचैव पुंवद्भावेन सिद्धेरतसुचो विधानमन्यतोऽपि तद्विधानार्थम्, तेन पुरधातोः क्विबन्तादप्यतसुच्। नच "र्वोरुपधायाः" इति दीर्घापत्तिः भसंज्ञत्वात्। न च चित्त्वात्प्राप्तमन्तोदात्तं बाधित्वा पाक्षिकाद्युदात्तार्थं तदिति वाच्यम्; लक्ष्यानुरोधेन यथोक्तज्ञापनस्यैव युक्तत्वादित्याहुः। 'पुर अग्रगमने' इत्यस्माद् भावे कप्रत्यये सार्वविभक्तिकस्तस् इत्यन्ये।

निम्नोन्नतेति कर्मधारयः। न च पदार्थतावच्छेदकद्वयसामानाधिकरण्याभावात् कथं स इति वाच्यम्; अवच्छेदकभेदेन भूमावेव तयोः सामानाधिकरण्यसम्भवात्। तरोरिति तत्संयुक्तत्वसूचनम्। पुष्पमिति स्वल्पप्रयासावचेयत्वं सूच्यते। कर्षणं वृन्तावधिकविभागः। वस्तुतस्तु तरोरिति पञ्चम्यन्तम्। पुष्पनिष्ठो यो वृक्षावधिकविभागस्तदनुकूलकृतिमानित्यर्थः। तथा च लतापेक्षया वृक्षावयवानां काठिन्यात्तदाकर्षणस्य श्रमविशेषजनकत्वं व्यज्यते। श्रमस्य गौरीनिष्ठस्य। आशङ्कनया सम्भावनयेत्यर्थः। इदं च सर्वत्रान्वीयते। तया पुष्पाकर्षणे श्रमप्रसक्तिरिति भावः। एतेन पुष्पाकर्षणे श्रमप्रयोजकत्वोक्त्या तस्याः सौकुमार्यातिशयः सूच्यते।

शयेन प्रियविषयकेणेति शेषः। **अलसां पूर्णां प्रियतमाम्** बहुषु प्रियेषु पदार्थेषु (न तु प्रियासु) अतिशयेन प्रियेति प्रियतमा, ताम्। **अङ्के** स्वदेहार्धभागे **दधानः** धारयन् **हरः** हरतीतिविग्रहवशाद्विघ्नव्यूहनिवारक इति साभिप्रायोक्तिः। **श्रमाशङ्कया** श्रमस्य खेदस्य प्रियाविषयकस्य आ ईषच्छङ्कया वितर्केण, प्रियेयं खिन्ना मामूदिति सम्भावनया, करणत्वेन सर्वत्रान्वेति। **निम्नोन्नतायां** निम्ना चेयमुन्नता चेति कर्मधारयः, उच्चावचायामित्यर्थः। **भुवि** भूमौ **पुरतः** अग्रतः, तौदादिकात् 'पुर् अग्रगमने' धातोर्बाहुलकादतसुच्, "स्यात्पुरः पुरतोऽग्रतः" इत्यमरः। **आत्मीयं** आत्मनोऽयमात्मीयः वृद्धाच्छः, तं निजं पुरुषार्धभागात्मकं

केचित्तु[1] "आशङ्का ईषत्संशयः। तत्राप्येवङ्करणे श्रमनिर्णये किं न कुर्याद्" इत्याहुः, तच्चिन्त्यम्; श्रमस्यावश्यभावित्वनिर्णयादेव प्रकृते उत्कर्षलाभात्, उभाभ्यामाकर्षणेऽपि प्रत्येकस्य कर्त्तृत्वसम्भवात्। प्रियाकरव्यावृत्त्यर्थमेवकारः। किं चेत्यधिकोक्तौ। मृगेति लोमशत्व-सूचनार्थम्। त्वक्पदेन निम्नोन्नतत्वसूचनम्। तेनोभयथाप्यास्तरणे गौर्या दुःस्पर्शत्वं सूचितम्। तल्पपदमास्तृतत्वसूचनार्थम्। विशब्देन यथासम्भवमुच्चावचत्वाभावसूचनम्। एकदेशावच्छेदेनापि प्रियाङ्ग-सम्बन्धो यथा तल्पे न स्यात्तथा स्वपितीतिभावः। निद्रापदं तादृशस-न्निवेशपरं तेन देवानां निद्राविरहेऽपि न क्षतिः। यद्वा, इच्छया तत्सम्भवो बोध्यः। एतेन भूमिस्पर्शो व्याख्यातः। महाभारतादाविन्द्रादीनां तथा दर्शनात्।

"देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे।
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये॥"

इति तत्र दमयन्त्युक्तेः। एतेन स्वप्नेऽपि परावृत्त्यभावव्यञ्जनम्। अन्तःपदं बाह्याभिनयमात्रवारणार्थम्। अलसां पूर्णामितियावत्। एतेन गौर्या हरविषयकानुरागवर्णनम्। अलस इति प्रथमान्तपाठपक्षे तु हरस्यैव विशेषणं हेतुगर्भम्। नचोक्तानुरागालाभः; अर्थात्तल्लाभ-सम्भवादनुपयोगाच्च। वस्तुतो ह्युभयनिरूपितत्वं रतेरपेक्षणीयम्। न तूभयनिरूपितत्वेनैव रतिर्वर्णनीयेति नियमः। सकलसम्प्रदायविरो-धात्। अतएव पुरुषनिष्ठरतेरालम्बनत्वेन प्रथमं नायिकानिरूपणमप्यग्रे सङ्गच्छते। अन्यथा "पाणिग्रहे पुलकितं वपुरैशं भूतिभूषितं जयति"

दक्षिणमित्यर्थः। **चरणं** पादं **दधाति** निक्षिपति, **तरोः** वृक्षात् **स्वीयेनैव** स्वस्यायं स्वीयः तेन पुंभागप्रयुक्तेनैवेत्यर्थः, **करेण** हस्तेन **पुष्पं** कुसुमं **कर्षति** चयनयोग्यां दशामानयति नत्ववचिनोति, कर्षणे श्रमाशङ्का न तु चयने। किं च **मृगत्वचा** एणाजिनेन **विरचिते** निर्मिते **तल्पे** शय्यायां "तल्पं शय्याट्टदारेषु" इत्यमरः।

---

१. व्यङ्ग्यार्थकौमुदीकाराः।

विद्वज्जनमनोभृङ्गरसव्यासङ्गहेतवे ।
एषा प्रकाश्यते श्रीमद्भानुना रसमञ्जरी ॥२॥

---

इत्यादेरप्याभासत्वापत्तेः। अत्र कविनिष्ठः परमेश्वरविषयको रतिभावः प्रधानम्। "रतिर्देवादिविषया व्यभिचारी तथाञ्जितः। भावः" इतिकाव्यप्रकाशोक्तेः। ईश्वरनिष्ठस्तु शृङ्गारस्तदङ्गम्। तथा च रसवदलङ्कारः। तथाचास्माकमलङ्कारकौस्तुभे—"रसभावतदाभासेऽङ्गे रसवत्प्रेय ऊर्जस्वीति"। हरपदेन विघ्ननिवर्तकत्वसूचनम्। न च हरस्य प्रियान्तराभावात् तमप्प्रत्ययानुपपत्तिः; प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकोत्कर्षस्य तमवर्थतया स्वान्यविषयकरतित्वावच्छिन्नापेक्षयाऽतिशयस्याऽन्यदीयरतिमादायैव प्रतीतिसम्भवात्, उत्कर्षस्य रतावन्वयात्। 'यदीयरतावुत्कर्षान्वयस्तदीयरत्यपेक्षयैवोत्कर्षः प्रतीयत' इतिनियमाभावात्। पण्डिततम इत्यादौ तथैव व्युत्पत्तेः। "मोभूमिस्त्रिगुरुःश्रियं दिशति" इति भामहः। "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति वृत्तरत्नाकरः।१।

कर्तव्यमाह—**विद्वज्जनेति**। कुलेति पाठान्तरम्। मन एव भृङ्गः, सूक्ष्मतमार्थग्राहकत्वात्। व्यासङ्गो रसावगाहनप्रयुक्त-

**निजैः** स्वीयैः दक्षिणैरेवेत्यर्थः, **भागै**रवयवैः **निद्राति** शेते। तस्या मृदुतरेष्ववयवेषु कथमपि श्रमाशङ्का माभूदिति हरस्य प्रेमातिशयत्वं द्योत्यते।

"अत्र प्रियतमासाधारणस्य हेतोश्चरणत्रयपदार्थत्वेन काव्यलिङ्गमलङ्कारः" इति अनन्तभट्टाः, वस्तुतस्तु कविनिष्ठस्य परमेश्वरविषयकरतिभावस्यात्र प्रधानतया हरनिष्ठस्य च शृङ्गारस्य तदङ्गतया रसवदेवाऽत्रालङ्कारः, शार्दूलविक्रीडितं च वृत्तम् ॥१॥

ग्रन्थनिर्माणे प्रवृत्तिं प्रतिजानीते—**विद्वदिति**। **विद्वज्जनस्य** विपश्चिद्वर्गस्य **मनः** चित्तमेव **भृङ्गः** मधुलिट् तस्य यो **रसव्यासङ्गः** रसस्य (मधोः

---

१. ० कुलमनो० पा०।

**तत्र रसेषु शृङ्गारस्याभ्यर्हितत्वेन तदालम्बनविभावत्वेन नायिका तावन्निरूप्यते।**

---

विषयान्तरव्यावृत्तिः। स एव हेतुः कार्यं तदर्थमिति यावत्। "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति वार्तिकाच्चतुर्थी। श्रीः प्रतिभाविशेषः। रसस्य मञ्जरीव। सा हि मधुनो जनिका भवति। अत्र प्रतिपाद्यप्रतिपादकभावः सम्बन्धः। उदाहरणानां रसजनकत्वाद्वा। भानुनेति स्वनामकीर्तनम्, भीम इतिवदेकदेशप्रयोगः। तथाच भाष्यम्-"विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपः" इति। "रूपकस्य कवेराख्यां गोत्राद्यपि च कीर्तयेत्" इति भरतः। रूपकपदं चोपलक्षणम्, कीर्तिद्वारा ग्रन्थस्य स्वर्गादिहेतुत्वात्; तस्याश्च तद्विशेष्यकगुणवत्त्वप्रकारकज्ञानरूपत्वात् सामान्यधर्मप्रकारकतद्विशेष्यकज्ञानसम्भवेऽपि विशेषप्रकारकस्याभ्यर्हितत्वात्॥२॥

'तत्र रसमञ्जर्याम्' इति केचित्। वस्तुतस्तेष रसेषु। रसमञ्जरीपदे रसपदजन्यबोधप्रकारीभूतं यद्रसत्वं तदवच्छिन्नानां रसानां मध्ये, इत्यर्थः।

"शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः।
उत्तमप्रकृतिप्रायो रसः शृङ्गार उच्यते॥"

---

शृङ्गारादेश्च) प्राप्तिः स एव **हेतुः** कारणं तस्मै। **श्रीमता** शोभासम्पन्नेन प्रतिभासम्पन्नेन च **भानुना** रविणा कविना च **एषा रसानां** मञ्जरीव **मञ्जरी प्रकाश्यते** स्फुटीक्रियते।

यथा रविणा विकाश्यमाना मञ्जरी मृङ्गस्य रसास्वादाय भवति तथैवेयमपि भानुकविना प्रकाशं नीयमाना विद्वन्मनांसि शृङ्गाराद्यास्वादप्रवणानि करोतीति भावः। श्लेषानुप्राणितकाव्यलिङ्गोऽत्रालङ्कारः। अनुष्टुब् वृत्तम्।

यद्यपि 'मृजुत्वमृच्छति' इति विग्रहे 'अच इः' इत्यौणादिक इ प्रत्यये शकन्ध्वादित्वात् सिद्धे मञ्जरिरिति ह्रस्वेकारान्तः पाठः साधु "वल्लरिर्मञ्जरिः स्त्रियौ" इत्यमरः, ङीपि कृते दीर्घान्तोऽपीति मुकुटः॥२॥

वर्ण्यविषयं प्रारभते—**तत्रेति**। **तत्र** पूर्वोक्तरसमञ्जरीपदे **रसेषु शृङ्गारादिषु** (ग्रन्थकर्त्रा स्वीयरसतरङ्गिण्यां पूर्वं प्रतिपादितेषु) **शृङ्गारस्य** तन्नाम-

तस्याभ्यर्हितत्वं च रसानां न्यूनाधिकत्वांशे विवादेऽपि शृङ्गारस्य सर्ववादिसम्प्रतिपन्नत्वात् ।

"शृङ्गारहास्यकरुणाद्भुतवीररौद्रवीभत्सवत्सलभयानकशान्तनाम्नः ।
आम्नासिषुर्दशरसान् सुधियो वयं तु शृङ्गारमेव रसनाद्रसमानमामः ॥"

इति भोजराजोक्तेः। अत एव भरतेनापि प्रथमं शृङ्गार एवोद्दिष्टः। अत एव च रसतरङ्गिण्यां ग्रन्थकृतैवोक्तं "तेन सकलाकाङ्क्षाविषयत्वेन मुख्यतया प्रथमं शृङ्गारोपन्यासः" इति।

यत्तु "पुरुषोत्तमाश्रयत्वादिति हेतुः। एवं च तच्छब्देन विशिष्टपरामर्शात् पुरुषोत्तमाश्रयशृङ्गारालम्बनविभावत्वेन नायिकायाः प्रथमं निरूपणम्",[१] इति। तच्चिन्त्यम्; पुरुषाश्रयत्वस्याभ्यर्हितत्वं प्रत्यहेतुत्वात्, "आदौ वाच्यः स्त्रिया रागः" इत्यादिशास्त्रविरुद्धत्वाच्च। अग्रे नायकनिरूपणस्यासङ्गतत्वप्रसङ्गाच्च। तस्य पुरुषसमवेतरतिं प्रत्यनालम्बनत्वात् । आलम्बनत्वं विषयतासम्बन्धावच्छिन्नरतिनिष्ठकार्यताप्रतियोगिकतादात्म्यसम्बन्धावच्छिन्नकारणताशालित्वम्। एतद्विशिष्टं स्त्रीत्वं पुंस्त्वं च क्रमान्नायिकाया नायकस्य लक्षणम्। तथा चालम्बनविभावत्वेन द्वयोर्निरूपणे कर्तव्ये, इति शेषः। तावदादौ नायिका निरूप्यते लक्षणादिभिः प्रतिपाद्यते, तस्या भेदबाहुल्येन व्युत्पन्नानां प्रथमं तत्रैव जिज्ञासोदयात्। सूत्रकृता भरतमुनिनापि

कस्य रसस्य, शृणाति चरमदशाप्रापणेन हिनस्ति कामुकान् इति शृङ्गं मन्मथोद्भेदः, 'शॄ हिंसायां' 'शृणातेर्ह्रस्वश्च' इत्यौणादिका गुन्नुड्ह्रस्वाः, शृङ्गमृच्छति प्राप्नोतीति 'कर्मण्यण्' 'अचोञ्णिति' वृद्धिः। शृङ्गम् आसमन्तात् राति ददातीति वा। **अभ्यर्हितत्वेन** प्रधानतया **तदालम्बनविभावत्वेन** तस्मिन् शृङ्गारे यदालम्ब्य रसो विभाव्यते स आलम्बनविभावः, तस्य भावः तेन, **नायिका तावन्निरूप्यते** अस्माभिरिति शेषः। उभयोरेवान्योन्यं प्रत्यालम्बनत्वात्, साहित्यदर्पणादौ च पूर्वं नायकस्यैव निरूपणदर्शनाद् ग्रन्थकृदिच्छाया एवात्र प्रथमं नायिकानिरूपणे बलीयस्त्वम्।

---

१. व्य० कौ०।     २. व्य० कौ०।

**सा च त्रिविधा—स्वीया, परकीया, सामान्या चेति। तत्र स्वामिन्येवानुरक्ता स्वीया। न च परगामिन्यामतिव्याप्तिः, अत्र पतिव्रताया एव लक्ष्यत्वात्, तस्याश्च परगामितया परकीयात्वमपि समायाति॥**

---

प्रथमं नायिकाभेदानामेवोक्तत्वादितिभावः। तथा च नायिकाभेदानां विप्रतिपत्तिविषयत्वादादौ व्युत्पादनमिति तात्पर्यम्। उपमानादेस्त्वनुमानापेक्षयैवाधिक्यस्यान्तर्भावस्य वा निरूप्यत्वात्प्रथममनुमाननिरूपणमिति वैषम्यम्। "पूर्वं रक्ता भवेन्नारी पुमान् पश्चात्तदिङ्गितैः" इतिरागक्रमवर्णनस्य प्रसिद्धत्वात् तत्समवायिनोरपि निरूपणक्रम इत्यन्ये। एवं च क्वचित्पूर्वं नायकनिरूपणेऽपि न क्षतिः। जिज्ञासाया अनियततया कस्यचिल्लघावेव प्रथमं तदुत्पत्तेः। एतेन प्रतापरुद्रीयसाहित्यदर्पणादौ प्रथमं नायकनिरूपणं व्याख्यातम्। नायिकेत्येकवचनं तु नायिका त्रिविधेति विभागे विशेष्यस्य तथैव निदेशानुरोधात् पृथिवी द्विविधेत्यादौ तथैव क्लृप्तत्वात्। विभाजकोपाधेर्विशेष्यतावच्छेदकसामानाधिकरण्यस्य तावतैव निर्वाहात्।

त्रिविधा उपाधित्रयावच्छिन्ना। तत्र तासां मध्ये। स्वामिन्येवेति। स्वामी विवाहजन्यसंस्कारविशेषवान्। विषयत्वं सप्तम्यर्थः। अनु-

तस्याः प्रकारान् दर्शयति—**सा चेति**। **सा** नायिका। **प्रथमं त्रिविधा** त्रिप्रकारा भवति। **स्वीया परकीया सामान्या चेति**। तत्र स्वीयां निर्दिशति-**स्वामिन्येवेति**। **स्वामिनि** परिणीते भर्तरि **एव अनुरक्ता** रतिविषयकानुरागवती **स्वीया**। यदि स्वभर्तर्यनुरागवत्यपि परस्मिन्नप्यनुरक्ता स्यात्तदा स्वीयात्वं भवेन्नवेत्याशङ्कते—**न चेति**। **न च परिणीतायां** स्वपतिविषयकानुरागवत्यामपि **परगामिन्यां** परानुरागवत्याम्, **अतिव्याप्तिः** व्यापनं-लक्षणस्य लक्ष्यमात्रसत्त्वं-व्याप्तिः, सा अतिरिच्यते लक्ष्यातिरिक्तेऽपि व्याप्यते। समाधत्ते—**अत्रेति**। **अत्र** स्वीयाविषये **पतिव्रताया** पतिर्व्रतं यस्या एवं भूताया **एव लक्ष्यत्वात्**। तर्हि का गतिरुभयानुरागवत्या इत्यत्राह—**तस्याश्चेति**। **तस्याश्चोभयानुरागवत्याः परगामितया** परानुरागवत्त्वेन **परकीयात्वमपि**। अपिरत्रावधारणे, परकीयात्वमेवेत्यर्थः। **समायाति** प्राप्नोति।

रागस्य सविषयकत्वात्। एवकारोऽन्ययोगव्यवच्छेदार्थः। अन्यत्वं स्वामिप्रतियोगिकं, योगश्च विषयित्वम्। समभिव्याहाराद्भासते। अनुरागाभावश्च समवायसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। तेन सम्बन्धान्तरमादाय नाव्याप्तिः, समवायित्वरूपमाश्रयत्वं क्त-प्रत्ययार्थः, तेन भर्तरि नातिव्याप्तिः। तथा च पतिभिन्नविषयकानु-रागाभाववत्त्वे सति पतिविषयकानुरागवत्त्वं वाक्यार्थः। पृथिव्यामेव गन्ध इत्यादौ पृथिव्यन्यसमवेतत्वाभावपृथिवीसमवेतत्वयोर्गन्धे बोधात्। लक्षणं तु सत्यन्तविशिष्टमनुरागवत्त्वमेव। अन्यविषयकानुरागस्य सत्यन्तेनैव व्यावृत्तौ पतिविषयकेतिविशेषणस्य वैयर्थ्यात्। स्यादेतत्; पतिभिन्नमात्राद्यनुरागवत्यां मुग्धादावसम्भवः।

यत्तु "अनुरागपदं रतिपरम्" इति, तन्न, मात्राद्यनुरागस्यापि रतिरूपतया दोषानुद्धारात्। तथा च सत्यन्तमपहाय पतिविषयका-नुरागवत्त्वमेव लक्षणं वाच्यम्।

अतः पति-तद्भिन्नोभयानुरक्तायां व्यभिचार इत्याशङ्कते—**न चेति**। समाधत्ते—**अत्रेति**। पतिव्रतायाः पतिमात्रविषयकानुरागवत्या एव। अत्र प्रकृतलक्षणे। तथा च सत्यन्तमावश्यकमेवेति नोक्तव्यभिचार इतिभावः। परगामितया परानुरागचिह्नवत्त्वेन। परगामित्वं परानुरागवत्त्वमप्यायाति। तथा च विशेष्यसत्त्वेऽप्यनुरागाभाव-रूपविशेषणाभावान्न दोष इत्यर्थः। तर्ह्युक्ताव्याप्तेः कुतः परिहार इतिचेत्, उच्यते; विषयताविशेषरूपसम्बन्धावच्छिन्नाया रतेरेवात्रा-नुरागपदार्थत्वात्। न च तत्र मानाभावः, आभासत्वप्रयोजकतया तस्यावश्यं स्वीकार्यत्वात्। तथाहि गोपीनां भगवद्विषयकरतेराभासत्वं, द्रौपद्यादीनां च तस्या अनाभासत्वं सर्वसिद्धम्। भक्तेश्च रतिरूपत्वं सर्वप्रामाणिकसम्प्रतिपन्नम्। रसान्तरत्वस्य भरतमुनिवचनविरुद्धत्वात्। तत्र गोपीनिष्ठरतेराभासत्वे तद्विषयकत्वस्य प्रयोजकत्वे द्रौपद्यादि-निष्ठाया अप्याभासत्वापत्तिः। अतो विषयत्वविशेषः शृङ्गारत्व-प्रयोजकतयाऽवश्यमाश्रयितव्य इतिदिक्।

**अस्याश्चेष्टाः–भर्तुः शुश्रूषा, शीलसंरक्षणम्, आर्जवम्, क्षमा चेति यथा––**

**गतागतकुतूहलं नयनयोरपाङ्गावधि**
**स्मितं कुलनतभ्रुवामधर एव विश्राम्यति।**
**वचः प्रियतमश्रुतेरतिथिरेव कोऽयं क्रमः**
**कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ३ ॥**

---

केचित्तु[1] "सत्यन्तव्यावर्त्यमाह––नचेति। अतिव्याप्तिपदमव्याप्तिपरम्। तस्यालक्ष्यत्वं निषेधति–अत्रेति। तथा च तद्वारणात्सत्यन्तमावश्यकमित्यर्थः। उभयानुरक्तायाः कुत्रान्तर्भाव इत्यत आह––तस्याश्चेति। चस्त्वर्थे। अपिरेवार्थे। परकीयात्वमेव। अतस्तस्या अलक्ष्यत्वात्सत्यन्तं युक्तमेवेत्यर्थः" इत्याहुः। अन्ये तु––"तस्यालक्ष्यत्वमाशङ्क्याह––न चेति, सत्यन्तोपादाने इति शेषः। उत्तरमाह––नचेति। तस्याश्चेति पूर्ववद्" इत्याहुः॥

परकीययोरनुरागतदभावयोः परप्रत्यक्षत्वविरहेण लक्षणज्ञानार्थं तदनुमापकहेतुज्ञानार्थमाह––**अस्याश्चेष्टेति**। शीलं सद्वृत्तहेतुः स्वभावविशेषः। "शुचौ तु चरिते शीलम्" इति तु कार्ये कारणोपचारात्।

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥"

इति मनुना आचारशीलयोः पृथगुपादानात्, इति हेमाद्रिः। तस्य रक्षणं तदपगमहेतुकुलटादिसंसर्गपरिहारः। तथा च स्वीयाधिकारे रतिरहस्यम्––

कथं तज्ज्ञानं स्यादित्याह––**अस्याश्चेष्टेत्यादि**। **अस्याः** स्वीयायाः **चेष्टाः** कार्यव्यापारादयः––**भर्तुः** पत्युः **शुश्रूषा** सेवनं, **शीलस्य** सद्वृत्तहेतुकस्य 'शीलं स्वभावे सद्वृत्ते" इति विश्वः। **संरक्षणं** अनन्यथाकरणम्, **आर्जवम्** ऋजुभावः, अकौटिल्यमितियावत्, **क्षमा** क्षान्तिश्चेति।

---

१. व्य० कौ०।

"सकृदपि कुलटाभिर्योगिनीभिक्षुकीभि–
र्न कपटघटिताभिस्संसृजेन्मेलिकाभिः" इति ।

शङ्खस्मृतावप्युक्तम्––

"न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूल-कुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत्, संसर्गेण हि चारित्रं दुष्यति" इति । "शीलस्य सद्वृत्तस्य संरक्षणमनन्यथाकरणम्" इति केचित् । तथा च स्वीया इतराभ्यो भिद्यते पतिभिन्नविषयकानुरागाभाववत्त्वे सत्यनुरागवत्त्वात्, या नैवं सा नैवं, यथा परकीयादिरितीतरभेदानुमानम् । लक्षणस्य केवलव्यतिरेकिहेतुत्वादिति स्पष्टं शास्त्रे ।।

**गतेति** । भावे क्त प्रत्ययः । कुतूहलपदेन कादाचित्कत्वसूचनम् । "अपाङ्गो नेत्रयोरन्तः" इत्यमरः । एकत्वेन व्यासङ्गान्तरोत्पत्तिभीतिद्वाराभर्तृशुश्रूषाभिव्यञ्जनमित्याहुः । अवधिपदं गतापेक्षयोत्तरावधिमागतापेक्षया च पूर्वावधिं समर्पयति । अनेन कटाक्षवर्णनम् । तथा च शार्ङ्गदेवः––

यद्गतागतविश्रान्तिवैचित्र्येण निवर्तनम् ।
तारकायाः कलाभिज्ञास्तत्कटाक्षं प्रचक्षते ।। इति ।

नन्वनेन कथं सतीत्वप्रतीतिरितिचेन्न, विषयान्तरविषयकविलक्षणदर्शनव्यतिरेकव्यञ्जनद्वारा तदुपपत्तेः । "अपाङ्गोऽनङ्गः नायकमनोविकारपर्यन्तमित्यप्यन्ये ।" "ऊर्मिमत्कुञ्चितं नतम्" इत्यमरः । नते वक्रे भ्रुवौ यासां ता नतभ्रुवः । कुलसम्वन्धेन पातिव्रत्यं लक्ष्यते । तत्सम्बन्धित्वमात्रस्य साधारण्यात् । कुले स्वजने नतभ्रुवो नमद्दृष्टयः किंपुनरन्यत्रेत्यपि वदन्ति ।

ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्टवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ।।

उदाहरति––**गतेति** । **कुलनतभ्रुवां** नते नम्रे भ्रुवौ यासां ताः नतभ्रुवः, कुलस्य सदन्वयस्य याः नतभ्रुवः तासां कुलाङ्गनानामिति यावत्, । **यदि** कदाचित् **नेत्रयोः गतागतकुतूहलं** गतं प्रेरणं च आगतमाकुञ्चनं च गतागते, तयोः कुतूहलं कौतुकं

**स्वीयापि त्रिविधा—मुग्धा, मध्या, प्रगल्भा च। तत्राङ्कुरितयौवना मुग्धा। सा चाज्ञातयौवना ज्ञातयौवना**

---

इति भरतः। अधरेऽधःस्थित ओष्ठे न तूपरितने, दशनप्रकाशप्रसङ्गात्। "एवकारेण कपोलादिव्यावृत्तिः" इति केचित्। विश्राम्यतीत्यनेन विश्रमस्य श्रमोत्तरकालीनत्वनियमात्तत्पर्यन्तं कथंचित्स्मितवशात् परिस्पन्द इति व्यज्यते। अनेनालक्षितदन्तत्वेन शीलसंरक्षणं सूचितम्। "न हसेदपावृतम्" इति शङ्खोक्तेः। प्रियतमेति। व्याख्यातम्। तस्य श्रुतेः श्रवणेन्द्रियस्य अतिथिरेव कदाचिदेव श्रवणात्। अनेन कलहादिनिषेधः। "वचो वक्तुं योग्यमिति न शब्दार्थः, एकवचनेन द्वितीयश्रुतिविषयत्वनिषेधात् सुतरां पुरुषान्तरश्रुतिविषयत्वनिषेधः" इति केचित्। एतेन तत्कार्यव्यावृत्तिः। चेत्पदमभ्युपगम्यवादपरम्। कोपक्रम एव वस्तुतो न भवति, यदि तु कदाचिद् भवति तदा केवलं मनसि चित्त एव मज्जति। तत्कार्यानुदयेन परेषां तत्कोपज्ञानानुदयात् मज्जनेन मनसो रसपूर्णत्वं व्यङ्ग्यम्। तथा च सम्भोगानुकूल एव कोपोऽभ्युदेति न तु तत्प्रतिकूल इति सूच्यते। "केवलं कृत्स्नम्" इति केचित्॥३॥

तां विभजते—**स्वीयापीति**। **अङ्कुरितेति**। तारकादेराकृतिगणत्वादितच्। अङ्कुरस्य वृक्षादिधर्मत्वात् प्रत्यग्रत्वे लक्षणा, शोभाति-

---

भवेच्चेत् तद् **अपाङ्गावधि** अपाङ्गौ नेत्रप्रान्तौ एव अवधिः सीमा यस्य तदेव भवतीति शेषः। "अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः। अप+अगि गतौ+अच्। तासामेव कदाचित् **स्मितं** मन्दहास्यं भवेच्चेत् तत् **अधरे** निम्नोष्ठ एव **विश्राम्यति** समाप्यते न ततो बहिरायातीत्यर्थः। तासां कदाचिदुक्तं **वचः** वाक्यं **प्रियतमश्रुतेः** नायककर्णयोरेव **अतिथिरागन्तुकः**। "आगन्तुरतिथिर्ना" इत्यमरः। भवति, न ततोऽन्यः कश्चिदपि तच्छृणोतीति यावत्। **कोपक्रमः** कोपस्यामर्षस्य क्रम आरम्भः स्याच्चेत् तत् **केवलं मनसि** चित्ते एव **मज्जति** निमग्नो भवतीतिभावः। अत्र स्वभावोक्तिरलङ्कारः। तल्लक्षणं तु "स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्" इति। पृथ्वीवृत्तम्॥३॥

**च। सैव च क्रमशो लज्जाभयपराधीनरतिर्नवोढा। सैव च क्रमशः सप्रश्रया विश्रब्धनवोढा। अस्याश्चेष्टा ह्रिया मनोहरा, कोपे मार्दवं, नवभूषणे समीहा।**

---

शयो व्यङ्ग्यः। स्वीयात्वे सतीति विशेषणं तु द्रष्टव्यम्। उभयत्राविज्ञातत्वं यत्किञ्चिन्निष्ठज्ञानविषयत्वम्। न तु ज्ञानस्य धर्मिविशेषनिष्ठत्वनियमः, तद्विवक्षायां प्रयोजनाभावात्। अज्ञातं ज्ञानाविषयो यौवनं यस्या इति बहुव्रीहिः। एवमुत्तरत्रापि। एतेन प्रथमयौवनं लक्ष्यते, तथा च भरतः—

पीनोरुगण्डजघनस्तनाधरं कर्कशं रतिमनोज्ञम्।
सुरतं प्रति सोत्साहं प्रथमं तद्यौवनं विद्यात्॥

पीनपदं किञ्चिदुपचयपरम्।

गात्रं पूर्णावयवं पीनौ च पयोधरौ नतं मध्यम्।
कामस्य सारभूतं यौवनमेतद्द्वितीयं तु॥

इत्यग्रिमग्रन्थानुरोधात्। केवलकौमारावस्थायां रत्यालम्बनत्वे प्रमाणाभावात्, यौवनविशिष्टस्त्रीत्वस्यैव स्वरूपयोग्यतावच्छेदकत्वात्। ततश्च प्रथमयौवनमेव पूर्वापरावस्थाभ्यामज्ञाततया ज्ञाततया च विवक्षितत्वाद् भेदद्वयमुक्तमिति रहस्यम्।

सैव उभयविधापि। क्रमशः कालभेदेन। लज्जाभये भावविशेषौ तत्पराधीना तदायत्ता रतिर्यस्याः। रतिपदं तज्जन्यव्यापारपरम्। रतेस्ताभ्यामप्रतिरोधात्। सप्रश्रया प्रणयाधिक्यवती। तथा च

स्वीयाविभागमाह—**स्वीयाऽपीति**। **स्वीया** पूर्वोक्तलक्षणा **अपि त्रिविधा** त्रिप्रकारा भवतीति शेषः। प्रकारानाह—**मुग्धा मध्या प्रगल्भा चेति**। मुग्धां लक्षयति—**तत्रेति**। **तत्र** तासु त्रिविधास्वित्यर्थः। **अङ्कुरितयौवना** अङ्कुरा प्ररोहाः सञ्जाता अस्येत्यङ्कुरितं तारकादित्वादितच्। एवंभूतं यूनो भावः यौवनम् तारुण्यं यस्याः सा। अङ्कुरादेर्वृक्षधर्मत्वेऽपि प्रत्यग्रतायां लाक्षणिकः प्रयोगः। **मुग्धा** तदाख्या नायिकेति भावः। तामेव विभजते-**सा चेति**। **सा** मुग्धा च **अज्ञातयौवना** न ज्ञातमवगतं यौवनं यस्याः एवं भूता, **ज्ञातयौवना** ज्ञातमवगतं यौवनं यया सा। **सैव** द्विविधा मुग्धैव क्रमशः कालादिक्रमेण **लज्जा** त्रपा

लज्जाभयरतीनां समप्राधान्ये नवोढा। उभयापेक्षया रतिप्राधान्ये तु विश्रब्धनवोढा। अतो भेदान्तरं नाशङ्क्यमिति भावः। ह्रिया मनोहरा आश्लेषादावप्रवृत्तावपि रतिमत्त्वज्ञानेन स्वविषयकानुरागाभाववत्त्वाननुमानादित्यर्थः। केचित्तु "क्रियाह्रियेति" पठित्वा क्रियाविषयकलज्जयेति व्याचख्युः। यत्तु कामशास्त्रम्——

बाला स्यात्षोडशाब्दा तदुपरि तरुणी त्रिंशतं यावदूर्ध्वम्।
प्रौढा स्यात्पञ्चपञ्चाशदवधि च ततो वृद्धतामेति नारी॥ इति,

तत्तत्र परिभाषामात्रम्।

बाला नूतनसङ्गमे रतिकरी सान्द्रान्धकारे भवे-
दालोके सुखमातनोति तरुणी प्रौढा तमिस्रे गते॥

इत्यादावुपयोगात्। एतेन——

बालेति गीयते नारी यावद्वर्षाणि षोडश।
ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि॥
तदूर्ध्वमधिरूढा स्यात् पञ्चाशद्वत्सरावधि।

अधिरूढा प्रौढेत्यर्थः।

वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्जिता॥
निदाघशरदोर्बाला हिता विषयिणो मता।
तरुणी शीतसमये प्रौढा वर्षावसन्तयोः॥
नित्यं बाला सेव्यमाना नित्यं वर्धयते बलम्।
तरुणी ह्रासयेच्छक्तिं प्रौढोद्भावयते जराम्॥

इति वैद्यकमपि व्याख्यातम्। न त्वत्र तत्संवाद इति बोध्यम्।

अत्रायं निष्कर्षः——लज्जापेक्षापकर्षवद्रतिकत्वं मुग्धात्वम्। अप-

रतेरपरिचयादधाष्टर्यमितियावत्। च **भयं** भीतिश्चेति ताभ्यां **पराधीना** तदायत्तेत्यर्थः, रतिः सम्भोगो यस्याः सा। **नवोढा** नवं प्रत्यग्रं यथास्यात्तथा ऊढा रत्यादिव्यापारं भर्त्रा प्रापिता। **सैव** इयं नवोढैव **क्रमशः** शनैः शनैः **सप्रश्रया** प्रश्रयेण प्रणयेन "प्रश्रयप्रणयौ समौ" इत्यमरः। सहिता। प्रणयाधिक्यवतीत्यर्थः। **विश्रब्धनवोढा** विश्रब्धा विश्वासमुपगता चासौ नवोढा चेति। पूर्वं लज्जाभयाधीनरतिर्नवोढा शनैः शनैः किञ्चिद्विश्वस्ता सती विश्रब्धनवोढेतिभावः।

**मुग्धा यथा—**

**आज्ञप्तं किल कामदेवधरणीपालेन काले शुभे**
**वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः।**
**दृष्ट्या खञ्जनचातुरीमुखरुचा सौधाकरी माधुरी**
**वाचा किं च सुधासमुद्रलहरीलावण्यमामन्त्र्यते ॥४॥**

---

कर्षश्च द्वेधा—स्वरूपेण तत्प्रतिरुद्धव्यापारकत्वेन च, द्वितीयमपि द्वेधा—व्यापारे यावत्त्वयत्किञ्चित्त्वयोर्विवक्षाभेदात्। तत्राद्या ज्ञातयौवना, द्वितीया नवोढा, तृतीया विश्रब्धनवोढेति विभागः। सैवेत्यत्र तच्छब्दोऽपि ज्ञातयौवनामात्रपरामर्शकः। तत्र रतेः स्वरूपेणाधिक्येऽपि तद्व्यापारस्यैव वल्लभदर्शनादेर्लज्जया प्रतिबन्धात्। विश्रब्धनवोढायास्तु दर्शनादिसत्त्वेऽप्याश्लेषादेरेव तथात्वात्, न चैवं मध्यमाया अप्यत्रैवान्तर्भावप्रसङ्गः, तत्र निष्कर्षस्य वक्ष्यमाणत्वात्। केषाञ्चित्त्विष्टापत्तेः। तथा च विद्यानाथः—

"उदयद्यौवना मुग्धा लज्जापिहितमन्मथा।
लज्जामन्मथमध्यस्था मध्यमोदितयौवना ॥
स्मरमन्दीकृतव्रीडा प्रौढा सम्पूर्णयौवना॥ इति दिक्।

**आज्ञप्तमिति**। अनेनानुल्लङ्घनीयत्वसूचनम्। यद्विषयाननुष्ठाने नियोज्यस्य भयं तस्या वक्तुरिच्छाया आज्ञापदार्थत्वात्। एतेन "धरणीपालपदमनुल्लङ्घनीयाज्ञत्वव्यञ्जकम्" इतिव्याख्यानमपास्तम्। "इदं तारुण्यविशेषण" म् इति केचित्। तत्र कर्मणि क्तप्रत्ययः। यद्वा कामेनेत्थमाज्ञप्तमित्यन्वयः। तत्र भावे क्तप्रत्यय इति विशेषः। कामपदेन सर्वानुभवसिद्धत्वं सूच्यते, देवपदेन विजिगीषावत्त्वं, तेन

मुग्धायाः प्रतीतिप्रकारमाह—**अस्या इति**। **अस्या** मुग्धायाश्**चेष्टा** इङ्गितानीति यावत्। **ह्रिया** लज्जया रतिविषयकव्यापारे मनो हरतीति **मनोहरा**। **कोपे** अमर्षे नायकस्थ इति शेषः, **मार्दवं** मृदुभावः। **नवविभूषणे** नूतनालङ्करणे **समीहा** जिघृक्षेतियावत्।

च पूर्वकालीनविजिगीषान्तराणां फलोपहितत्व व्यज्यते। इच्छाविषयसिद्धौ तज्जातीयविषयकेच्छान्तराणां स्वारसिकोत्पत्तेरनुभवसिद्धत्वात्। तेन च ब्रह्मेन्द्रादिभिरप्यनुल्लङ्घनीयत्वसूचनम्।

यत्तु "देवपदस्योपसर्जनत्वेन पूर्वनिपातः प्राप्तस्तथापि विजिगीषायाः प्राधान्यविवक्षणान्न" इति[१]। तच्चिन्त्यम्। सामान्यविशेषयोर्विशेषस्यैव विशेषणत्वमिति शिंशपावृक्ष इत्यादौ महाभाष्यादौ प्रसिद्धत्वात्। अत एव "शब्दशास्त्रसहकारपादपात्" इत्यादिप्रयोगाः सङ्गच्छन्ते। प्राधान्यं च किं वैवक्षिकमभ्यर्हितत्वरूपम्, उत विशेष्यत्वरूपम्? नाद्यः, तस्य द्वन्द्वमात्रविषयत्वात्। नान्त्यः, विशेषणसमासे गुणवचनशब्दभिन्नशब्दस्थले विवक्षानियमस्य महाभाष्यादिग्रन्थसिद्धत्वादसाधुत्वापत्तेः। अन्यथोत्पलनीलादिशब्दानामपि साधुत्वप्रसङ्गात्। निरूपितं चेदं सिद्धान्तसुधानिधावस्माभिः।

एवं धरणीपालपदस्य पूर्वनिपातशङ्कापि मन्दा। रूपकसमासस्थले उपमेयस्यैव पूर्वप्रयोगात्। मुखचन्द्र इत्यादिदर्शनात्। मयूरव्यंसकादित्वात्तत्र समास इति वृत्तिवार्तिककारादयः। उपमितसमासेऽपि प्रथमानिर्दिष्टत्वेन पूर्वप्रयोगात्। अत एव तत्सन्देहे निर्णयार्थं प्रकारान्तरस्य काव्यप्रकाशादावादर इत्यास्तां तावत्। "राजत्वारोपोऽप्याज्ञादानस्यौचित्यव्यञ्जनार्थः। तृतीयया स्वयमुक्तिलाभाद्यौवनस्य कामान्तरङ्गत्वसूचनम्" इति केचित्[२]। तन्न। राजप्रेरितपदातिप्रवर्तितेऽपि राज्ञा प्रेरित इति व्यवहारात्, स्वयमुक्तेरशब्दार्थत्वात्। कालस्य शुभत्वं च स्वावच्छिन्नप्रवेशकर्तुर्जगद्विजयहेतुत्वम्।

अथ वयःसन्धिरूपेण सामान्यतया मुग्धामुदाहरति—**मुग्धा यथेति**। **आज्ञप्तमिति**। **कामदेवधरणीपालेन** कामदेवः मदन एव धरणीपालो नृपः तेन, **एणीदृशः** एण्याः दृशौ इव दृशौ यस्यास्तस्याः, मृगलोचनायाः, **तनौ** वपुषि **वस्तुं** वासं कर्तुम्, **आज्ञप्तं किल** निश्चयेन निर्दिष्टम्। अतएव **तारुण्यं** तरुण्या भावः यौवनमित्यर्थः। **शुभे काले** यथोचितसमये **वास्तुविधिं** वेश्मप्रक्रियां **विधास्यति** करिष्यति। अतः

---

१. २. व्य० कौ०

वस्तुमिति तुमुन्प्रयोगाद्वासस्योद्देश्यत्वलाभात्तच्छरीरावच्छिन्न-कामप्रवेशस्य पूर्वमसिद्धत्वव्यञ्जनम्। वास्तुपदमाश्रयपरम् "वस्तु वास्तुघटनेन भिदानाम्" इत्यादिप्रयोगात्। विधिः संस्कारः। यद्वा वास्तुपदं स्वाश्रयाधारदेशपरम्। "वेश्मभूर्वास्तुरस्त्रियाम्" इत्यमरोक्तेः। भवति हि कामस्य वासयोग्यं नायिकाशरीरम्, तदवयवाश्च दृष्टिमुखादयः। दृष्टिपदस्य लोकप्रसिद्ध्या गोलकादिसमुदायपरत्वात्। अत एवाग्रे तेषामेव संस्कारं वक्ष्यति। युक्तञ्चैतत्, अवयवसंस्कारेणैवावयविसंस्कारात्। वाचस्तु यद्यपि न शरीरावयवत्वं तथापि शरीरावयवावच्छिन्नप्रयत्नसाध्यत्वात्तदतिशयेन शरीरातिशयबुद्ध्युदयाच्चावयवत्वारोप इति बोध्यम्। "वास्तुविधिं वास्तुदेवतापूजनरूपम्" इति केचित्[1]। तन्न। दृष्ट्या खञ्जनेत्यादौ भुक्तवान्तत्वप्रसङ्गात्। उक्तरीत्या तु तत्तदवयवयोग्यसंस्कारार्थत्वेनोपपत्तेः। विधास्यतीति भावित्वलाभादर्थात् साध्यत्वलाभे तत्कर्तव्यविषयकेच्छाव्यञ्जनादाज्ञालाभः। एवं च आज्ञानन्तरं संस्कारस्याविलम्बेन कर्तव्यत्वे संस्कार्यसंस्कारकसम्बन्धाभावे च संस्कारानुपपत्तौ तारुण्यसंयोगस्याचिरसिद्धत्वाक्षेपाद्यौवनस्याङ्कुरितत्वं व्यज्यते। एणीदृश इति पदेन वनरूपत्वप्रतिपत्तिद्वारा दुर्गभूमित्वं व्यज्यते। केचित्तु[2] "स्वभावादेणीदृगियं तत्रापि यौवनमागतम् इति कीदृशलावण्यविशेषशालिनी सेति चित्रीकरणार्थककिलशब्दयोगे विधास्यतीति शेषे लृडपदाविति भूतकालार्थकलृट्प्रत्यये यौवनेन वास्तुविधिपूर्वकं तत्र

**दृष्ट्या** तन्व्या ईक्षणेन **खञ्जनचातुरी** खञ्जनस्य खञ्जरीटस्य चातुरी विदग्धता, आमन्त्र्यते इति सर्वत्रसम्बद्ध्यते। **मुखरुचा** वदनकान्त्या च **सौधाधरी** सुष्ठु शोभनो रसः धीयते यस्यां सा सुधा, तस्याः धरः धारकः सुधाधरश्चन्द्रः तस्येयं सौधाधरी "तस्येदमित्यण् टिड्ढाणञ्० इतिङीप्" चान्द्रमसीत्यर्थः। **माधुरी** मधुरिमा। चातुरीमाधुरीत्युभयोरेव स्त्रियां भावार्थे गुणवचनत्वात् ष्यञ्, षिद्गौरादीतिङीष् हलस्तद्धितेति यकारस्य यस्येतिचेत्यकारस्य लोपः। वक्तुं युक्ता वाक् तया **वाचा** वाण्या

---

१. २. व्य० को०

वसतिः कृतेति भवद्भिरपि तत्रागन्तव्यमित्याकार्यते" इति श्लोकार्थमाहुः। तदशुद्धम्। लृट्प्रत्ययान्तक्रियाजन्यविस्मय एव तत्र लृटो विधानात्। "खञ्जरीटः कणाहीनः खञ्जले खस्तु खञ्जने" इति हारावली।

चतुरस्य भावश्चातुर्यम्। गुणवचनत्वात् ष्यञ्। षिद्गौरादिभ्यश्चेति ङीष्। हलस्तद्धितस्येति यलोपः। एवं माधुरीतिव्याख्येयम्। लावण्यमित्यत्र ष्यञ्मात्रं बोध्यम्। न चैणीदृश इति दृष्टिरामणीयकस्योक्तत्वात् खञ्जनचातुर्यमिन्त्रणं गतार्थं, भिन्नोपमाननिरूपितोपमाया अन्योपमया तदयोगात्। आद्येन दैर्घ्यस्यानेन च श्यामत्वस्य लाभात्। अत एव।

"कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः।"

इत्यादिकं सङ्गच्छते। अन्ये तु "समयविशेषसञ्चारित्वं सूक्ष्मविषयदूरदर्शित्वं खञ्जनस्य निधिमदेकदेशयोगशालित्ववद्गुण-विशेषवदेककान्तविषयप्रेमशालित्वं वानेन व्यज्यते" इत्याहुः। तथा च वराहः—

तस्मिन्निधिर्भवति मैथुनमेति यस्मिन्
यस्मिन् पुनर्वमति तस्य तलेऽस्ति काचः।
अङ्गारमप्युपदिशन्ति पुरीषणेऽस्य
तत्कौतुकाय नयनाय खनेद्धरित्रीम्॥ इति।

यत्तु "एणीदृक्पदं मृगीदृक्पदोपलक्ष्यकम्, मृग्यते गवेष्यते न त्वितस्ततः स्वयं सञ्चरति, तत्समनेत्रतया ह्रिया क्रियामनोहरत्वं व्यज्यते। वस्तुत एतीति एणीति व्युत्पत्त्या यातायातवत्सम्बन्धिवत्कीर्तनेन स्वतस्तदभावेन तदेव व्यज्यत" इति। तच्चिन्त्यम्। उभयत्रापि जातिमात्रप्रकारकबोधोत्पत्त्यावयवार्थानवगमात्।

मुखरुचा चन्द्रमाधुर्यमिन्त्रणं सामानाधिकरण्यसम्बन्धेन बोध्यम्। तेन मुखस्य चन्द्रसादृश्यं सिद्धम्। साक्षात्सम्बन्धेनामन्त्रणे तु मुखशोभाया एव चन्द्रसादृश्यसिद्धिप्रसङ्गात्, यत्र यद्धर्मसम्बन्धो वर्ण्यते तत्र तत्सादृश्यं सिद्ध्यतीत्यस्य निदर्शनायां प्रसिद्धत्वात्।

सौधाधरीत्येकः पाठः। सौधाकरीत्यन्यः।

वाचेत्यल्पभाषित्वम्। समुद्रपदेन नायिकाया व्यङ्ग्यार्थप्रायानेकोक्तिसामर्थ्यं द्योत्यते। लहरीपदेन व्यङ्ग्यार्थप्रायत्वरूपकौटिल्यशालित्वं सूच्यते। अत्र निदर्शनालङ्कारः। अन्यधर्मस्यान्येन धारणानुपपत्त्या सादृश्ये पर्यवसानात्। तदुक्तमलङ्कारकौस्तुभे—

उपमापर्यवसन्नो यत्रार्थोऽन्योन्यमन्वयानर्हः।
यच्च क्रियया कारणकार्यान्वयधीर्निदर्शना सोक्ता॥

यत्तु कैश्चिदुक्तम्—"अत्र निवासोत्सुककामाज्ञप्ततारुण्यचिकीर्षितवास्तुविधानस्येतरवाक्यार्थहेतुत्वात्काव्यलिङ्गमलङ्कारः। स च प्रकृतनायिकादृगादिप्रशंसार्थः। तत्तुल्यगुणाप्रस्तुतखञ्जरीटादि चातुर्यादिप्रशंसनात्तुल्येन तदन्यतुल्याक्षेपरूपाप्रस्तुतप्रशंसाप्राणितः। "अप्रस्तुतप्रशंसा स्याद्या सैव प्रस्तुताश्रया" इति तल्लक्षणात्"। इति। तत्तुच्छम्। वास्तुदेवतापूजाविधानस्य तत्र व्याख्याने तस्य खञ्जनचातुर्याद्यामन्त्रणहेतुत्वस्यासम्मतत्वात्। वाससंस्कारस्य तदर्थत्वे तु, अभेदेन हेतुहेतुमद्भावानुपपत्तेः। सामान्यविशेषरूपत्वात् अप्रस्तुतप्रशंसाप्यनुपपन्ना। अप्रकृतविशेष्यकवाक्यार्थबोधात् प्रकृतधर्म्याक्षेपस्यैव तद्विषयत्वात्। अप्रकृतनिर्देशमात्रेण तथात्वे चन्द्र इव मुखमित्यादेरपि तत्त्वप्रसङ्गात्। निदर्शनालङ्कारविलयप्रसङ्गाच्चेति दिक्॥४॥

**सुधासमुद्रः** पीयूषसागरः तस्य **लहर्यः** लेन इन्द्रेण इव ह्रियते ऊर्ध्वगमनायेति ल+हृ+इन्, लहरिः। पक्षे ङीष् लहरी। ताः तरङ्गास्तासां **लावण्यं** सौन्दर्यम् यद्यपि पारिभाषिको लावण्यशब्दो देहसौन्दर्य एव यथा शब्दकल्पद्रुमे—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इति तथापि सामान्यरूपेण सौन्दर्येऽर्थे प्रयुज्यते। **आमन्त्र्यते** अनुज्ञाप्यते, यथा कश्चिन्नृपः कियत्कालं क्वचिद्वस्तुं वाञ्छति चेत्तत्रत्यानधिकारिण आदिशति ते च इतस्तत उत्कृष्टवस्तून्यामन्त्र्य तद्वासयोग्यं भवनादि कुशलैः कर्मकरैः सज्जयन्ति तथैवात्र कामनृपेण तन्व्यास्तनौ वस्तुमादिष्टं तारुण्यं च दृष्ट्यादिद्वारा खञ्जनचातुर्याद्यामन्त्र्य तं भूषयतीति निदर्शनालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥४॥

**अज्ञातयौवना यथा--**

**नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः,**
**श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति।**
**शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति**
**श्रान्तास्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥५॥**

---

सामान्यरूपेणोदाहृत्य विशेषोदाहरणमुच्यत इत्याह—**अज्ञातयौवना यथेति। नीरादिति।** "नयति नीरमिति व्युत्पत्त्या नितम्वगौरवादागन्तुमशक्यापि तल्लहरीभिरागता" इति केचित्। तन्न। चतुर्थचरणविरोधात्। नीरादित्यपादानपञ्चम्या नीरस्य प्रकृत-क्रियाराहित्यलाभाच्च, नीरविशेषलक्षणादौ च गौरवात्प्रमाणाभावा-च्च। न चेयं हेतुपञ्चम्येवेति वाच्यम्; उपपदविभक्तितः कारकविभक्ते-र्बलीयस्त्वादपादानपञ्चम्यन्ताध्याहारापत्तेश्च।

यदप्युक्तम्--"तीरस्य समीपमेवागता नतु तीरम्" इति। तदप्यसत्। आगमनकर्मत्वाभावे तीरमिति द्वितीयानुपपत्तेः कर्मप्रवचनीयसंज्ञादेरत्र दुर्वचत्वात्। तस्मादुपशब्देन जलस्यात्यन्त-समीपं तीरागमनं सूच्यते। तेन प्रतिविम्वदर्शनान्नेत्रे कमलभ्रमो-त्पत्तिः सङ्गच्छते।

"स्फुरन्नेत्रयोरिति बहुव्रीहिणा श्रवणयोर्विशेषणम्। तत्सीम्नि करं न्यस्यतीत्यन्वयः। श्रवणपदस्य कविवाक्यान्तर्गतत्वात्। श्रोत्रे

विशिष्टामुदाहरति—**अज्ञातयौवना यथेति। नीरादिति। नीरात्** जलात् **तीरं** तटम् **उपागता** प्राप्ता **शशिमुखी** चन्द्रवदना। नीरस्यातिसमीपत्वात्तत्र स्व-प्रतिविम्वं दृष्ट्वा **श्रोत्रे** कर्णे **लग्न**मासक्त**मिदं** दृश्यमानम् उत्पलं कुवलयं **किम्** इति ज्ञातुं **श्रवणसीम्नि** श्रवणयोः सीमा तत्र, कर्णावधौ **स्फुरतः** विकसिते च ते **नेत्रे** तयोरुपरि **करं** हस्तं **न्यस्यति** व्यापारयति। **शैवालस्य** जलनील्या अङ्कुरशङ्कया

---

**१. व्य० कौ०, प्रकाशे च।**

लग्नमित्यस्य च नायिकानिष्ठसंशयविशेष्ये इदंपदार्थे विशेषण-तयोल्लेखान्न पौनरुक्त्यम्। न च श्रोत्रलग्नविशेष्यकभ्रमे तत्समीपदेशे करन्यासानुपपत्तिरितिवाच्यम्; सम्भ्रमविशेषपोषकतया गुणत्वाद्" इति केचित्। अन्ये तु "श्रोत्रयोः स्फुरदिदमुत्पलं श्रवणयोर्नेत्रयोश्च सीम्नि किं लग्नम्, इति ज्ञातुं करं न्यस्यति। सीम्नीत्येकत्वमतन्त्रम्। एकस्यैव करस्य द्रुततरव्यापारकरणात्सम्भ्रमातिशयो व्यज्यत" इत्याहुः।

तदुभयमपि चिन्त्यम्। श्रोत्रलग्नत्वस्य नायिकानिष्ठसंशये विशेष्यतावच्छेदकतया भानकल्पने प्रयोजनाभावात्। अन्वयव्यवधानाच्च। श्रोत्रस्फुरणविशिष्टोत्पलविशेष्यकयथोक्तलग्नत्वप्रकारकविपर्ययस्योपमेयविशेष्यकत्वाभावेनालङ्कारत्वविरहाच्च।

अपरे तु "स्फुरन्नेत्रयोः श्रवणयोः सीम्नि किमुत्पलं लग्नमिति ज्ञातुमित्यन्वयाच्छ्रवणयोरित्यादिकमपि नायिकासंशयान्तर्गतमेव" इत्याहुः। परे तु "नेदं युक्तम्, ज्ञातयौवनात्वापत्तेः" इत्याहुः।

वस्तुतस्तु, इदं किमुत्पलमित्येव नायिकाभ्रान्तिः। स्फुरन्नेत्रयोरिति कर्मधारयात्सप्तमीद्विवचनम्। श्रोत्रे लग्नमिति करविशेषणम्। तथा च, इदं किमुत्पलमिति भ्रमे तज्जिज्ञासायां सत्यामुत्पलत्वत्वव्याप्यस्पर्शविशेषसाक्षात्कारार्थं कर्णावतंसोत्पले करस्पर्शं कृत्वा सविशेषोऽत्रास्ति नवेति निर्णयार्थं श्रवणसीम्नि स्फुरतोर्नेत्रयोरुपरि करव्यापार इति भावः। युगपत्स्पर्शद्वयसाक्षात्कारार्थं च सीम्नीत्युक्तम्। तथा सति तत्तद्भेदयोरवधारणोदयसौकर्यादिति तात्पर्यम्। "शैवालं जलनीलिका" इतिशब्दार्णवः। अङ्कुरः सूक्ष्मावयवः। शङ्कात्र

प्ररोहभ्रान्त्या **रोमावलीं** रोमोद्गमश्रेणीं **प्रोञ्छति** अवचिनोति करेण व्यपसारयितुं प्रवर्तते इतिभावः। **अविदितः** अविज्ञातः **श्रोणीभरः**, "श्रोणृ संघाते" धातोः 'सर्वधातुभ्य इन्' (उ० ४।११८) इति इन्। वा ङीप् श्रोणी तस्या भरः, नितम्बगौरवं यस्या एवं भूता **सखीं** सहचरीं **मुहुः** भूयो भूयः **श्रान्तास्मि** श्रममुपगतास्मि कथमिति शेषः। **इति पृच्छति**। अत्रासम्बन्धे सम्बन्धलक्षणातिशयोक्तिरलङ्कारः सा च नेत्रयोरुत्पलभ्रान्त्या, रोमावल्याः शैवालसंशयेन च संसृज्यते। शार्दूलविक्रीडितं वृत्तम् ॥५॥

**ज्ञातयौवना यथा--**

**स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधरः।**
**नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति।।६।।**

---

भ्रान्तिः। केचित्तु संशय इत्याहुः। तच्चिन्त्यम्। शैवालरोमावल्युभयकोटिकसंशयस्यैवालङ्कारत्वात्। तस्य च ज्ञातयौवनात्वापत्त्या वक्तुमशक्यत्वात्। शैवालं नवेत्यादेश्चानलङ्कारत्वात्। मुहुरिति सख्या अपि तद्यौवनानवगमसूचनम्। अन्यथा तदुत्तरेण जिज्ञासा निवृत्तौ प्रश्नान्तरानुपपत्तेः।।५।।

**स्वयम्भूरिति**। अनेन नायककरपरामर्शपूर्वकालीनस्वाभाविकमात्रोपचयसूचनम्। शम्भुत्वारोपो विशिष्टसंस्थानलाभार्थः। तत्र स्वयम्भूत्वं पौरुषेयप्रतिष्ठानपेक्षपूज्यत्वम्। तेन स्तनस्य स्वभावतो मनोहरत्वव्यञ्जनम्। सम्बुद्ध्या यौवनीयचिह्नान्तरज्ञानं सखीनिष्ठं व्यज्यते। तव पयोधरः स्तनः रूढत्वेनावयवार्थस्यानपेक्षितत्वात्, अवयवार्थस्वरूपयोग्यतावच्छेदकस्तनत्वजातिमत्त्वात्। । अन्यथा वन्ध्यास्तनादौ तत्प्रयोगानापत्तेः।

केचित्तु "पयोधर इव पयोधरो मेघः। यथा तद्दर्शनान्मयूराणामुल्लासस्तथैतद्दर्शनेनास्मदादीनामिति व्यङ्ग्यम्। यद्वा यथा तस्य सन्तप्तचातकाह्लादकारित्वं तथैतस्य कामानलतप्तकान्तसन्तोषकत्वमिति व्यङ्ग्यम्। न च साधारणधर्मत्वेन योगार्थापेक्षायामप्रसूतायां प्रकृतायां बाध इति वाच्यम्–,

क्षीरनाड्यः कुमारीणां जलेन परिपूरिताः।
क्षीरं न भवते तस्मादार्त्तवं चाधिकं ततः।।
प्रसूतासु च नारीषु जलेन सह सूयते।
तेन स्रोतोविशुद्धिः स्यात् क्षीरमाशुप्रवर्त्तते।।

इत्यायुर्वेदवचनादप्रसूतास्तनयोरपि पयोयोगाद्" इत्याहुः।

अथ द्वितीयामुदाहरति--**ज्ञातयौवना यथेति**। **स्वयम्भूरिति**। **अम्भोजलोचने** अम्भसि जातमम्भोजं तद्वल्लोचने यस्यास्तत्सम्बुद्धौ हे सरसिजनयने! **स्वयं भवतीति**

वस्तुतस्तु, एकपदोपादानाद्यत्राभेदारोपस्तत्र साधारणधर्मान्तरस्य नावश्यमपेक्षा, विद्वन्मानसराजहंसेत्यादौ तथैव दर्शनात्। मयूराणामित्यादिकमप्ययुक्तं, रूपकमात्रस्य सावयवत्वापत्तौ तच्छास्त्रविरोधात्। यद्यपि "स्तनादीनां द्वित्वाधिष्ठाना जातिः प्रायेणेति" वामनेनोक्तं, द्वित्वबोधकसुब्विभक्त्यन्तपदोपस्थाप्यविशेष्यकशाब्दबोधे प्रकारत्वमिति च तदर्थः। तथाप्येकवचनान्तत्वमपि प्रामाणिकम्, प्रायेणेत्युक्तत्वात्। तथा च "पयोधरे खेलति कुम्भ एव" इत्यादयः श्रीहर्षादिप्रयोगाः। चन्द्रपदं तत्सदृशे लाक्षणिकम्, नखेन कृत्वा चन्द्रसदृशं क्षतं चूडायां यस्य तादृशो भविष्यति। कस्येत्यज्ञातस्येत्यर्थः।

"को नाम धन्यस्ते पतिः" इति केचित्। तन्न। स्वीयासामान्यलक्षणानाक्रान्तत्वापत्तेः। तस्य पतिघटितत्वेन परिणयगर्भत्वात्। परिणयसत्त्वे च पतिविशेषज्ञानस्य सख्या आवश्यकत्वात्।

अन्ये तु "धन्यस्य भाग्यवतस्तव प्रियस्य कस्य दक्षिणस्य वामस्य वा हस्तस्य नखेन" इति व्याचख्युः।

अपरे तु ज्ञानस्य नायिकासमवेतत्वनियममङ्गीकृत्य व्याचख्युः "करकलितकमलकुड्मले स्वकुचसादृश्यं निरूपयन्तीं कांचित् सखीं प्राह। अम्भोजं लोचयति पश्यतीत्यम्भोजलोचना। बहुलग्रहणात्कर्तरि प्रत्ययः। पयोधर इत्येकवचनेनोदयसमसमयमेवैतादृशनिरन्तरत्वेऽग्रे कीदृशं तदिति व्यज्यते। कस्यचिदगणितगुण-

**स्वयम्भूः** : 'भुवः संज्ञान्तरयोः' इति क्विप्। स्वयमुत्पन्नः, नतु नायककरपरामर्शेणेति भावः। शं सुखं तस्मै भवतीति **शम्भुः** सुखोत्पादकः। अन्तर्भावितण्यर्थात् मितद्र्वादित्वाड्डुः। एवं भूतः **त्वत्पयोधरः** तव कुचः **धन्यस्य** भाग्यवतः **कस्य नखेन** करजेन चन्द्रः चूडायां शेखरे यस्य स **चन्द्रचूडः** अर्धचन्द्राकाराङ्कितचूचुक इतियावत्। **भविष्यति**। को नाम धन्यस्ते नायको यन्नखेनायं चन्द्रचूडतामेष्यतीति भावः। अत्र स्वयम्भूः शम्भुरिति शिवपरकश्लेषेणानुगतो निदर्शनालङ्कारः। पयोधरस्योपमेयस्योपमान (शिव) निष्ठचन्द्रचूडताधर्मेणासम्बन्धात्तत्सदृश इति प्रतिबिम्बकरणात्। वक्त्रं नामानुष्टुप्छन्दः॥६॥

नवोढा यथा--

हस्ते धृतापि शयने विनिवेशितापि
क्रोडे कृतापि यतते बहिरेव गन्तुम्।
जानीमहे नववधूरिह तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥७॥

---

गणपुण्यसम्भारशालिनः, अत एव धन्यस्य सौभाग्यवतः प्रियस्येति यावत्। चन्द्रचूडोऽपि भविष्यतीत्यपिशब्दाध्याहारेणान्वयः। अन्यत्पूर्ववद्" इत्याहुः। तन्न। ल्युट्प्रत्यये अम्भोजलोचनेत्या-वन्तप्रयोगानापत्तेः, टित्त्वान्ङीप आपत्तेः। नन्द्यादित्वाल्ल्युप्रत्यया-नुसरणेऽपि बहुलग्रहणादित्यभिधानानुपपत्तेः। अम्भोजे लोचने यस्या इति तु व्याख्येयम्। पूर्वार्धं पूर्वोपन्यस्तरीत्या, उत्तरार्धं तु एतद्रीत्या व्याख्येयमिति तु रहस्यम्। नखपदं तदीयक्षतपरम्। धान्येन धनीतिवदभेदस्तृतीयार्थः। नखक्षताभिन्नचन्द्रविशिष्टचूड इति भावः॥६॥

हस्त इति। अनेनाञ्चलव्यावृत्तिः। धृता गृहीता। "शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः" इत्यमरः। विशब्दस्तस्याः शयनसंयोगप्रतिबन्धकव्यापारसत्त्वेऽपि स्वव्यापारमात्रजन्यतत्संयोग-सूचनार्थः। क्रोडे वक्षसि कृता निहितापि "घटे कुरु स्थापयेति गम्यते" इति भाष्योक्तेः। बहिर्नायकाधिकारदेशभिन्नदेश एव यतते यत्नं करोति। एवकारः केलीगृहाभ्यन्तरेऽपि पतिसंयोग-राहित्येनावस्थानसम्भवात्तद्वारणार्थः।

नवोढामुदाहरति--**नवोढा यथेति**। **हस्ते इति**। **हस्ते** करे **धृता** गृहीता ऽपि **शयने** तल्पे **विनिवेशिता** स्थापिताऽपि **क्रोडे** भुजयोरन्तराल इत्यर्थः। क्रुडचते "क्रुड बाल्येऽदने" इति तौदादिकाद् घञ्। घनन्तार्थकाद् अच् तु न कुटजादित्वेनाचि गुणासंभवात्। "न ना क्रोडं भुजान्तरम्" इत्यमरः। **कृता** विहिताऽपि **बहिरेव** नायकबाहुपाशात्पृथगेव **गन्तुं** यातुं **यतते** प्रयत्नं करोति। **इह** अस्मिन् विषये **जानीमहे** वयं मन्यामहे **नववधूः**

**विश्रब्धनवोढा यथा—**

**दरमुकुलितनेत्रपालि नीवीनियमितबाहु कृतोरुयुग्मबन्धम्।**
**करकलितकुचस्थलं नवोढा स्वपिति समीपमेत्य कस्य यूनः।८।**

---

केचित्तु "गन्तुमेव यतते न तु वहिरपि स्थातुम्" इत्याहुः। अत्र कामशास्त्रम्—

अपि सामीप्यगां भीरुं नवोढां सन्निधिं नयेत्।
विश्वासछद्मना गाढालिङ्गनात्त्याजयेद् भयम्॥ इति।

स्यादेतत्, स्थिरयितुमिति प्रयोगोऽनुपपन्नः, स्थिरं कर्तुमित्यर्थे "तत्करोति तदाचष्टे" इति णिच् प्रत्यये णाविष्टवत् प्रातिपदिकस्य इत्यतिदेशात् "प्रियस्थिर" इति स्यादेशे च कृते स्थापयितुमित्यस्यैव साधुत्वात्। उच्यते। स्थिरशब्दादाचारक्विबन्ताच्चतृप्रत्ययोत्तरं "तत्करोति" ण्यन्ताट्टिलोपे कृते रूपसिद्धिः। तेन स्थिरसादृश्यकरण-मप्यशक्यं का वार्ता स्थिरत्वस्येति प्रकृतानुगुण्यमपीति दिक्॥७॥

**दरेति**। "ईषदर्थे दरोऽव्ययम्" इति विश्वः। "ईषन्मुकुलिते नेत्रपाल्यौ यत्रेति लज्जिता दृष्टिः।

मनागञ्चितपक्ष्माग्रा त्रपात्रस्तकनीनिका।
सन्त्रस्तोर्ध्वपुटा दृष्टिर्लज्जायां लज्जिते स्त्रियः॥

इति तल्लक्षणाद्" इति केचित्। "दरपदस्य भयार्थत्वमाश्रित्य त्रस्ता दृष्टिः" इत्यन्ये। तच्चिन्त्यम्। "निःकम्पोत्फुल्लतारा स्यात् त्रासे त्रासोद्भ्रमत्पुटा" इति लक्षणविरोधात्। वस्तुतः प्रियस्पर्शानन्दा-न्मुकुला दृष्टिः।

नवोढा तस्य जनस्य **वश्या** वशङ्गता **भवति यः पारदं** चपलं **करेण** हस्तेनैव **स्थिरयितुं** स्थिरं कर्तुं बद्धुमितियावत्। **क्षमते** समर्थो भवति। यथा चपलस्य स्थिरीकरण-मसम्भवं तथा नवोढाया वशीकरणमपीति भावः। अत्र स्वभावोक्त्यनुगतो दृष्टा-न्तालङ्कारः। वसन्ततिलका वृत्तम्॥७॥

शनैः शिथिलितलज्जाभयां विश्रब्धनवोढामुदाहरति—**विश्रब्धेत्यादि**। **दरमिति**। **दरं** मनाक् "दराव्ययं मनागर्थे" इति मेदिनी। **मुकुलिते** मुकुलीभावं

**समानलज्जामदना मध्या। एषैवातिप्रश्रयादतिविश्रब्धनवोढा।**

**अस्याश्चेष्टाः–सागसि प्रेयसि धैर्ये वक्रोक्तिः, अधैर्ये च परुषा वाक्।**

---

स्फुरत्संश्लिष्टपक्ष्माग्रा सुखविश्रान्ततारका।
मुकुला दृष्टिरानन्दे हृद्ययोः स्पर्शगन्धयोः॥

इति शार्ङ्गदेवीयात्। "नीविराग्रथनं नार्या जघनस्थस्य वाससः" इत्यभिधानम्। तत्र नियमितो विशिष्य व्यापारितो बाहुर्यत्र। तच्छैथिल्यहेतुव्यापारासक्तप्रियकरसंयोगप्रतिबन्धार्थमिति भावः। कृत ऊरुयुग्मस्य बन्धः परस्पराश्लेषो यत्र। करेण द्वितीयेन कलितमाच्छादितं कुचस्थलं यत्र। "कलिमली कामधेनू" इति शाब्दिकसम्प्रदायात्। इति चतुष्टयं क्रियाविशेषणम्। स्वभावोक्तिरत्रालङ्कारः। "स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्" इति काव्यप्रकाशे। पुष्पिताग्रा वृत्तम्। "अयुजि नयुगरेफतो नकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति वृत्तरत्नाकरः॥८॥

मध्यां लक्षयति-**समानेति**। समानौ तुल्यौ लज्जामदनौ यस्याः, तुल्यत्वं च परस्परनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताशालि-

प्रापिते, ईषन्मुद्रिते इति भावः। **नेत्रपाल्यौ** नयनकोणौ यस्मिन् कर्मणि तत्। "कोणस्तु स्त्रियः पाल्यश्रिकोटयः" इत्यमरः। 'पाल रक्षणे' चौरादिकात् "अच इः।" **नीव्यां** कटीवस्त्रबन्धे "नीवी स्त्रीकटीवस्त्रबन्धे" इति हैमः। निव्ययति निवीयते वा निविपूर्वकाद् व्येञ् संवरणे धातोः "नौ व्यो यलोपः पूर्वस्य च दीर्घः" इत्युणादिसूत्रादिण्। 'कृदिकारात्—' इति ङीष्। **नियमितः** अवरुद्धः **बाहुः** करः यस्मिंस्तत्। **कृतः** विहितः **ऊरुयुग्मस्य** ऊर्वोः युग्मं तस्य **बन्धः** परस्पराश्लेषः यस्मिंस्तत्। **करेण** हस्तेन **कलितम्** आच्छादितं **कुचस्थलं** स्तनप्रदेशः यस्मिंस्तत्। एवं भूतावस्था यथा स्यात्तथेत्यर्थः। **नवोढा कस्य** भाग्यवत इतियावत् **यूनः** युवकस्य **समीपं** निकटम् **एत्य** आगत्य **स्वपिति** शेते। स्वभावोक्तिरलङ्कारः पुष्पिताग्रा च वृत्तम्॥८॥

लक्षणोदाहरणैर्मुग्धां निर्वर्ण्य प्राप्तावसरां मध्यां निर्दिशति—**समानेत्यादि**। **समानौ** तुल्यौ **लज्जा च मदनश्च** यस्यां सा **समानलज्जामदना** एवंभूता **मध्या** भवतीत्यर्थः।

व्यापारकत्वम्। तथा च लज्जाप्रतिबद्धमदनव्यापारकत्वे सति मदनप्रतिबद्धकिञ्चिल्लज्जाव्यापारकत्वं मध्यात्वमित्यत्र तात्पर्यं:। स्यादेतत्। मुग्धायामतिव्याप्तिः। प्रियसन्निहितदेशानवस्थानरूपलज्जाव्यापारस्य मदनेन प्रतिबन्धात्। "स्वपिति समीपमुपेत्य" इत्यादौ दर्शनात्।

न च तत्सन्निध्यनवस्थानं न लज्जाव्यापारोऽननुरागसाधारण्यात्, किन्तु तत्सन्निधानेच्छाविशिष्टमेवेति वाच्यम्, तत्सन्निधानेच्छाया मदनकार्यतया तद्विशिष्टस्य लज्जाकार्यत्वाभावात्। नचाकार्यस्यापि घटत्वादिवत्कार्यतावच्छेदकत्वं सम्भवत्येवेति वाच्यम्, तस्य नित्यतया तथात्वेऽपि अन्यनिष्ठकारणतानिरूपितकार्यताशालिनस्तदयोगात्। अन्यथा नीलघटत्वादेरपि कार्यतावच्छेदकत्वप्रसङ्गात्। तत्र स्वस्वसामग्रीवशान्नीलत्वावच्छिन्नघटत्वावच्छिन्नयोरुत्पत्त्या तदार्थसमाजग्रस्तमिति चेत्, न, अत्रापि मदनेन तत्सन्निधानेच्छाया लज्जया च तदभावस्य सिद्धेस्तुल्यत्वात्। तत्सन्निध्यनवस्थानस्याननुरागसाधारण्येऽपि लज्जाकार्यत्वानपायाच्च। न हि लज्जानिष्ठकारणतानिरूपितकार्यतावच्छेदकत्वपर्यन्तं विवक्षितम्, असम्भवात्प्रयोजनाभावाच्च। लज्जामात्रकार्यभावस्य भरतादावनुक्तत्वादप्रसिद्धेः।

न चातिविश्रब्धनवोढायां समत्वं प्रतिबध्यव्यापाराणां विवक्षितम्, अत्र तु लज्जाप्रतिबध्यमदनव्यापारापेक्षया मदनप्रतिबध्यव्यापाराणामाधिक्यमिति वाच्यम्; समसङ्ख्यत्वस्य दुरवधारणत्वात् । अत्रोच्यते। व्यापारपदमत्र कार्यज्ञापकसाधारणं तदनु-

लज्जाधिक्ये मुग्धायां मदनाधिक्ये च प्रगल्भायामतिप्रसङ्गः स्यादत उक्तं **समानेति**। **एवैव मध्यैव अतिप्रश्रयात्** अतिप्रणयात् "प्रश्रयप्रणयौ समौ" इत्यमरः। अतिविश्रब्धनवोढा उच्यते इति शेषः। लक्षणज्ञानायास्याश्चेष्टा वर्णयति—**अस्या इति**। अस्या मध्यायाश्**चेष्टाः**—अत्यन्तं प्रियः, प्रेयान्, तस्मिन् **प्रेयसि** प्रियतमे **सागसि** सापराधे "आगोऽपराधो मन्तुश्च" इत्यमरः। सति, **धैर्ये** क्षमाशीलत्वे **वक्रोक्तिः** श्लेषेण काक्वा वार्थान्तरप्रत्यायकं वचनम्, **अधैर्ये** असहनशीलत्वे च **परुषा वाक्** निष्ठुरोक्तिः।

यथा--

स्वापे प्रियाननविलोकन हानिरेव
स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ।
इत्थं सरोरुहमुखी परिचिन्तयन्ती
स्वापं विधातुमपि हातुमपि प्रपेदे ॥९॥

---

मापकमात्रपरम्। तथा च तत्सन्निधानेच्छाविशिष्टतत्सन्निध्यनवस्थानं लज्जानुमापकं, नतु तत्सन्निध्यनवस्थानमात्रम्, उक्तव्यभिचारात्। ततश्च लज्जानुमापकत्वमदनप्रतिवध्यत्वयोर्यत्र तुल्यं पर्याप्त्यधिकरणं तदत्र विवक्षणीयम् । उक्तं च न तथा। प्रियसन्निधानेच्छां प्रति मदनस्यानुकूलतया तत्र तस्याप्रतिकूलत्वात्। एतेनापसारणादिकमपि व्याख्यातम्।

तथा च मुग्धायां लज्जया स्मरव्यापारस्यैव प्रतिरोधो मध्यमायां तु स्मरेण लज्जाव्यापारस्यापीति भेदः। तेन मुग्धायां व्यभिचारवारणाय मदनेति। उभयत्रापि व्यापारे यावत्त्वविवक्षायामसम्भवत्वापत्त्या तदविवक्षासूचनार्थं किञ्चिदित्युक्तम् । प्रौढायां व्यभिचारनिरासार्थं सत्यन्तम् । न च लज्जाविरहादेव तत्र न प्रसङ्ग इति वाच्यम्, अनुभवविरोधात्, स्मरमन्दीकृतव्रीडेत्यादिविरोधाच्च। न च गुर्वादिलज्जया मदनव्यापाररहितायां तस्यामतिव्याप्तितादवस्थ्यम्, पतिनिरूपितलज्जाया एव विवक्षितत्वात्। न च गुरुपत्युभयनिरूपितलज्जामादाय दोषः। पतिविषयकत्वेन प्रतिवन्धप्रयोजकत्वस्य विवक्षणीयत्वात् । समूहालम्वनलज्जायाश्च गर्वादिविषयकत्वेनैव मदनव्यापारप्रतिवन्धकत्वं नतु पतिविषयकत्वेनेति दिक् ॥८॥

**स्वाप इति**। "स्यान्निद्रा शयनं स्वापः" इत्यमरः। प्रियेति प्रेमविषयत्वसूचनम् । आनयति जीवयतीत्याननम् इति व्युत्पत्त्या

तामुदाहरति—**स्वाप इति। स्वापे** निद्रायां सत्यां **प्रियस्याननं** नायकवदनं तस्य **विलोकनं** वीक्षणं तस्य **हानिः** क्षतिः। यद्यहं स्वपेयं तदा प्रियाननवीक्षणं न भविष्यतीति मदनप्राबल्यम्। **स्वापच्युतौ** निद्रात्यागे **प्रियेण** नायकेन **करग्रहणस्य**

दर्शनद्वारा जीवनहेतुत्वव्यञ्जनम् । विलोकनपदेन लज्जावशात् प्रियपराङ्मुखावस्थायित्वद्योतनम्। "विलोकितं पृष्ठतः स्यात्" इति भरतवचनात्। हानिपदेन प्रियदर्शनस्यात्यन्तिकेच्छाविषयत्वसूचनम्, अत्यभीष्टवस्त्वनवाप्तेरेव हानिपदार्थत्वात् । एवकारस्तस्याः स्वानभिमतत्वव्यञ्जनार्थः। हानिरेव भवति स्वापस्य चिरकालस्थायित्वात्। न तु स्वेच्छाधीनानवलोकनवदल्पकालावच्छिन्नत्वमात्रमितिभावः। च्युतिर्निवृत्तिः। प्रियकर्तृकस्य करग्रहस्य प्रसङ्ग आपत्तिः।

केचितु "करो राजग्राह्यभागः, तत्तुल्यं करग्रहणमित्यवश्यदेयत्वं व्यज्यते," इत्याहुः। न च स्वापसत्त्वेऽप्येतत्प्रसङ्गोऽस्त्येवेति वाच्यम्;

विश्रब्धायाः स्त्रियः कार्यमङ्गप्रत्यङ्गवीक्षणम्।
अन्यथा क्रियमाणं तत्तदुद्वेगाय जायते।।

इत्यादि कामशास्त्रविरोधात्।

अन्ये तु "यदि स्वापो न क्रियते तदा प्रियकरग्रहणानिवारणकृतलज्जाहानिरूपानिष्टमापद्येत" इति व्याचख्युः । "विलोकनस्यावश्यकत्व इव करग्रहणस्य निवारणानर्हत्वेऽपि प्रियत्वस्यैव प्रयोजकत्वान्न कथितपदत्वम्" इति केचित्।

स्यादेतत्। उद्देशप्रतिनिर्देशस्थले कथितपदं न दोष इति तावदालङ्कारिकसम्प्रदायोऽनुभवसिद्धः। स च त्रेधा—(१) पूर्वं विधेयत्वेनोपात्तस्य पुनरुद्देश्यत्वेनोपादाने, यथा—"कोदण्डेन शराः शरैररिशिरः" इत्यादौ। (२) पूर्वमुद्देश्यतावच्छेदकत्वेनोपात्तस्य विध्यन्तरेऽपि तथात्वे। यथा—"उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इत्यादौ। (३) किंचिन्निष्ठसम्बन्धनिरूपकत्वेनोपात्तस्य पुनस्तन्निरुपितसम्बन्धवत्तया प्रतिपादने । यथा—"नाथे निशाया नियते-

रत्यर्थं हस्तावलम्बनस्य **प्रसङ्गः** अवसरो भविष्यतीति शेषः। जागरावस्थायां तु प्रियोऽवश्यमेव रत्यर्थं करं ग्रहीष्यतीतिभावः, प्रियत्वेन निषेद्धुमशक्यत्वात्। अनेन लज्जाप्राबल्यं द्योत्यते। **इत्थम्** एवं **परिचिन्तयन्ती** विचारयन्ती **सरोरुहमुखी** कमलवदना **स्वापं** निद्रां **विधातुमपि** कर्तुमपि **हातुमपि** त्यक्तुमपि **प्रपेदे** प्राप्ता।

नियोगादस्तङ्गते हन्त गता निशापि" इत्यादौ चन्द्रनिष्ठभर्तृत्व-निरूपकत्वेन निर्दिष्टाया निशायाश्चन्द्रनिष्ठभर्तृत्वनिरूपितभार्या-त्ववत्त्वेन प्रतिपाद्यत्वात्। प्रकृते च नैकमपि सम्भवति।

न च तदन्यस्थलेऽपि कथञ्चिदुद्देशप्रतिनिर्देशभावः कल्प्यतामिति वाच्यम्;—

अधिकरतलतल्पं कल्पितस्वापलीला-
परिमलननिमीलत्पाण्डिमा गण्डपाली।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥

इत्यत्र लीलापदे कथितत्वोदाहरणस्य काव्यप्रकाशादावुक्तत्वात् तद्विरोधात् । कथितपदस्य दोषत्वाभावप्रसङ्गाच्च। सर्वत्रैव किञ्चित्कल्पनायाः सम्भवात् ।

उच्यते। आननिष्ठसम्बन्धनिरूपकत्वेनोपात्तस्य प्रियस्य करनिष्ठसम्बन्धनिरूपकत्वेनोपादानस्यापि तृतीयप्रकार एवान्तर्भाव-सम्भवात्। न च भेदान्तरापत्तिरनुगतरूपाभावादितिवाच्यम्; सम्बन्धिद्वयनिरूपकैकवृत्तिप्रकृतानुगुणैकधर्मावच्छिन्नत्वस्यानुगतत्वात् । तत्र हि निशानिष्ठं भार्यात्वं चन्द्रनिष्ठभर्तृत्वनिरूपकं गता निशापीत्य-त्रानुगुणम् । अत्र तूभयत्रापि प्रियत्वमेव तथा। तत्सम्बन्धित्वेनैव मुखदर्शनादेरिष्यमाणत्वात् । तदुदाहरणेऽपि तदभावस्य स्पष्टत्वात् ।

अयं तु विशेषः। तत्र भार्यात्वादिकमारोपितमाक्षेपलभ्यं च, प्रकृते प्रियत्वं तु शाब्दबोधप्रकारीभूतमेवेति। स्वापपदस्य तच्छङ्का तु नास्त्येव, यद्रूपेण तस्यैकनिष्ठप्रयोजकत्वमुक्तं तद्रूपावच्छिन्न-प्रतियोगिताकस्यैवाभावस्यानिष्टान्तरप्रयोजकत्वलाभार्थं तदु-पादानादिति दिक् ॥९॥

लज्जात्यागस्य दुष्करत्वाद् स्वापं विधातुं मदनरसरभसतया प्रियाननेक्षणहानेर-निष्टत्वाच्च स्वापं हातुं प्रापेति भाव.। अत्र गूढाक्षेपोऽलङ्कारः "गूढाक्षेपो विधौ व्यक्ते निषेधे चास्फुटे सति" इति लक्षणात्। वसन्ततिलका वृत्तम् ॥९॥

**पतिमात्रविषयककेलिकलापकोविदा प्रगल्भा। वेश्यायां कुलटायां च पतिमात्रविषयत्वाभावान्नातिव्याप्तिः।**

**अस्यास्तु चेष्टा रतिप्रीतिः। आनन्दात्सम्मोहः।**

---

प्रौढां लक्षयति-**पतिमात्रेति**। केलिरनुरागपूर्वकचुम्बनालिङ्गनादिः, तदेकदेशेऽनुरागे पतिमात्रविषयकेत्यस्याभेदान्वयः। कोविदत्वं इच्छापूर्वकप्रयोगोपधायकत्वम्। केलिकलापाविषयतया तदेकदेशेच्छान्वयः। पतिपदस्य प्रयोजनमाह—वेश्यायामिति। मात्रपदकृत्यमाह—कुलटायामिति। परकीयायामित्यजहत्स्वार्था लक्षणा। पदद्वयस्य स्थलद्वये व्यभिचारवारकत्वेऽपि पतिमात्रेति विशिष्टसमुदायस्योभयत्र तद्वारकत्वमित्यभिप्रायेण समुच्चयार्थश्चकारः।

तथा च पतिभिन्नविषयकानुरागरहितत्वे सति पतिविषयकानुरागजन्यचुम्बनादिविषयकेच्छापूर्वकचुम्बनाद्युपधायकत्वं लक्षणार्थः। प्रियचुम्बनं कुर्यामितीच्छाकाले सख्यादिभ्रमेण प्रियचुम्बनादिफलोपधायकत्वस्य मुग्धायामपि सत्त्वात्तत्र व्यभिचारवारणाय पूर्वकेत्यन्तं चुम्बनादिविशेषणम्। तच्च यथोक्तानुरागजन्यत्वम्। न ह्यनुरागसत्त्वेऽपि सख्यादिचुम्बनेच्छायाः पत्यनुरागजन्यत्वम्। तस्या अन्यत्र सिद्धनियतपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतमन्यथासिद्धमित्यन्यथासिद्धिकवलितत्वात्। सखीभ्रमजन्यचुम्बनेच्छादौ सखीविषयकस्नेहस्यैव जनकत्वात्।

मुग्धामध्ये निर्दिश्य तृतीयां निर्दिशति—**पतिमात्रेति**। पतिः परिणेतैव **पतिमात्रं तद्विषयके** तत्सम्बन्धिनि **केलिकलापे** चुम्बनालिङ्गनादिक्रीडावर्गे **कोविदा** निपुणा **प्रगल्भा** रतावभ्यस्ततया क्षीणलज्जामदनप्रचुरा च धृष्टेत्यर्थः। प्रगल्भात्वं परकीयास्वपि भवति, अतो लक्षणेऽतिव्याप्तिः स्यात्तत्राह—**वेश्यायामित्यादि। वेश्यायां** सामान्यवनितायां **कुलटायां** परपरिणीतायां कामुक्यां **पतिमात्रविषयत्वाभावात्** स्वपरिणीतमात्रानुरागराहित्यात् **नातिव्याप्तिः** लक्षणस्य विषयातिरेको नास्तीति भावः। प्रगल्भात्वे सत्यपि तत्र स्वीयात्वाभावात्॥

न च पतिचुम्बनेच्छाजन्यचुम्बनाद्युपधायकत्वमेवास्तु किमिच्छायां पतिविषयकानुरागजन्यत्वविशेषणेनेति वाच्यम्; यत्र सखीचुम्बनपतिचुम्बनयोः समूहालम्बनेच्छया सखीभ्रमेण पतिचुम्बनं जातं तत्र प्रियचुम्बनेच्छाया हेतुतया तदुपहितमुग्धायामतिव्याप्तेः। तद्वारणाय यस्या इच्छायाः प्रियचुम्बनविषयकत्वेन यथोक्तचुम्बने प्रयोजकत्वम्, तदिच्छाया एवात्र ग्राह्यत्वात्। तदर्थप्रदर्शनायैव पतिविषयकानुरागजन्यत्वविशेषणस्योक्तत्वात्। अनेनाप्युक्तव्यभिचारनिरासोपपत्तेः। तथाविवक्षायां तथाविधलक्षणेऽपि दोषाभावात्।

तादृशचुम्बनादियोग्यतामात्रस्य मुग्धादावतिव्याप्तेरुपधायकत्वस्य निवेशः। एतेन "पत्यतिरिक्तकेलिकलाप्रावीण्याभाववत्त्वे सतीति" यथाश्रुतार्थव्याख्यानमपास्तम्, पूर्वोक्तसत्यन्त एव ग्रन्थतात्पर्यादिति दिक्।

अस्याश्चेष्टामाह—**अस्यास्त्विति**। यत्तु "एवं प्रथमा यथेत्याद्यग्रिमग्रन्थविरोधः, नायिकाविभाजकोपाधिभेदानामेवोदाहरणभेदप्रयोजकत्वात्। न च चेष्टाभेदादप्युदाहरणभेद इति वाच्यम्; भर्तुः शुश्रूषेत्यादावपि तद्भेदापत्तेः। तस्मादस्यास्त्वित्यत्र भेदद्वयमितिशेषः। रतौ सम्भोगे प्रीतिरितरापेक्षया यस्या इत्यर्थः। आनन्दात् सुखात् सम्मोहोऽज्ञता, तद्वतीत्यध्याहार" इति तदशुद्धम्। परस्परात्यन्ताभावसमानाधिकरणस्यैवोपाधिद्वयस्य विभाजकत्वप्रसिद्धेः। रतिप्रीत्यानन्दसम्मोहयोश्च विरोधाभावेन मिथः सामानाधिकरण्योपपत्तेः। भवति हि पृथिवी द्विविधा नित्याऽनित्या चेत्यादिरेव विभागो न तु रूपवती रसवती चेत्यादिरपि।

न च चेष्टाभेदादुदाहरणभेदो न दृष्ट इति वाच्यम्; अदर्शन-

अस्याश्चेष्टा वर्णयति—**अस्या इति**। **अस्याः** स्वीयाप्रगल्भायाश्चेष्टा व्यापाराः रतिप्रीतिः **रतौ** सम्भोगे **प्रीतिः** हर्षः "मुत्प्रीतिः प्रमदो हर्षः—" इत्यमरः। संतृप्तिरितियावत्। "प्रीञ्तर्पणे" धातोः भावे क्तिन्। आनन्दात् रतिक्रीडाजन्यसुखात् सम्मोहः सम्मूर्च्छनम्, तदितरज्ञानाभाव इतियावत्॥

**प्रथमा यथा—**

**संस्पृश्य स्तनमाकलय्य वदनं संश्लिष्य कण्ठस्थलं**
**निष्पीड्याधरबिम्बमम्बरमपाकृष्य व्युदस्यालकम्।**
**देवस्याम्बुजिनीपतेः समुदयं जिज्ञासमाने प्रिये**
**वामाक्षी वसनाञ्चलैः श्रवणयोर्नीलोत्पलं निह्नुते ॥१०॥**

---

मात्रस्य युक्त्यभावादप्रयोजकत्वात्।

स्मरान्धा गाढतारुण्या विचित्रसुरता तथा।
भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायिका॥

इति साहित्यदर्पणे प्रगल्भायाश्चेष्टाभेदेनोदाहरणभेदस्योक्तत्वात् "आवयोरङ्गयोर्द्वैते" इति वासकसज्जाप्रकरणे मनोरथरूपचेष्टाया ग्रन्थकृतैवोदाहरणभेदस्य वक्ष्यमाणत्वाच्च। मुग्धाया सामान्योदाहरणानन्तरं विशेषोदाहरणमित्यस्य दृष्टत्वेऽपि तन्नियमाभावादत्र न तथेत्यस्य त्वयापि स्वीकारात्।

**प्रथमेति। संस्पृश्येति।** स्तनमित्येकत्वेन पीनत्वातिशयसूचनम्। संस्पृश्येति मर्दनपरमिति केचित्। आलिङ्गनविशेषो वा व्यङ्ग्यः।

"उरसि कमितुरुच्चैराविशन्ती वराङ्गात्
स्तनभरमुपधत्ते यत्स्तनालिङ्गनं तद्" इति रतिरहस्योक्तेः।

वदनाकलनं चुम्बनार्थं तन्मुखेन स्वमुखसंयोजनम्। यद्वा।

"मुखमभिमुखमक्ष्णोरक्षिणी तस्य हन्या-
दलिकमलिकपट्टेनेति लालाटिकं तत्" इति बोध्यम्।

**संश्लिष्येति।** क्षीरनीराख्यं जघनोपश्लेषाख्यं वाऽऽलिङ्गनमित्याहुः। तदुक्तं रतिरहस्ये—

रतिप्रीतिमुदाहरति—**प्रथमा यथेति। संस्पृश्येति। प्रिये** नायके, **स्तनं** कुचं **संस्पृश्य** उपमर्द्येति यावत्। **वदनं** मुखम् **आकलय्य** परिचुम्ब्य **कण्ठस्थलं** गलप्रदेशं **संश्लिष्य** गलोपलम्बनेन दृढमालिङ्ग्येत्यर्थः। कण्ठपदोक्तेः नीरक्षीरालिङ्गनमेवात्र सम्यक्प्रतिभाति ननु जघनोपश्लेषः। **अधरबिम्बं** बिम्बफलाभं निम्नोष्ठं **निष्पीड्य** दन्तक्षतैरापीड्य **अम्बरं** वस्त्रम् **अपाकृष्य** अपसार्य **अलकं** चूर्णकुन्तलं कुटिलकेश-

अभिमुखमुपविष्टा योषिदङ्केऽथ तल्पे
रचितरुचिरगाढालीनता वल्लभस्य।
प्रसरदसमरागावेशनश्यद्विचारौ
विशत इव मिथोऽङ्गं क्षीरनीरं तदाहुः॥
जघनकलितकान्तश्रोणिरस्योपरिष्टाद्-
व्रजति यदिह नारी स्रस्तकेशोत्तरीया।
करजरदनकृत्यं चुम्बनं वा विधित्सुः
कथयति जघनोपश्लेषमेनं मुनीन्द्रः॥

न च 'न ल्यपि' इतीत्वनिषेधात्पिवतेर्निःपीड्येत्यनुपपन्न-मिति वाच्यम्; 'पीङ् पाने' इति दैवादिकस्य रूपमिति वामनादिभि-रुक्तत्वात्। अधरो बिम्बमिवेत्युपमितसमासः।

यत्तु "अधरमपकृष्टं बिम्बं चन्द्रमण्डलं यस्माद्" इति। तदुपेक्ष्यम्।

"अधरं किल बिम्बनामकं फलमस्मादिति भव्यमन्वयम्।
लभतेऽधरबिम्बमित्यदः पदमस्या रदनच्छदं वद॥"

इति नैषधार्थपहारमात्रत्वात्। अम्बरापकर्षणं नायिकाङ्गात्तद्वि-भागः। अलकपदं केशसमुदायपरम्। उदसनं धम्मिल्लरूपसंस्थान-विशेषोन्मोचनम्। यत् कामशास्त्रम्—

"न विना केशनिर्मोकं न विनाम्बरमोचनम्।
कुर्वन्ति कामिनो भोगं न च वाह्यरतं विना॥" इति।

वाह्यरतं संस्पृश्य स्तनमित्यादिनोक्तम्।

"प्रायोऽङ्गनानां पुर एव तृप्ता भावावसानं पुरुषा लभन्ते।
इदं तु विज्ञाय तथोपचर्याद् यथा द्रवन्त्यग्रत एव नार्यः॥" इति

पाशमिति यावत् **व्युदस्य** उत्क्षिप्य एवं समग्रायां रात्रौ सुरतव्यापारं विधाय मुदिते, ततश्च **देवस्य** भगवतः **अम्बुजिनीपतेः** कमलिनीनायकस्य सूर्यस्येति यावत्। **समुदयं** प्रादुर्भावं **जिज्ञासमाने** ज्ञातुमिच्छति "किं निशा व्यतीता सूर्योदयकाल आगतः" इति पृच्छति सतीत्यर्थः, पूर्वोक्तेन प्रिये इत्यनेनान्वयः। **वामाक्षी** वामे रतिविच्छेद-भयाद् वक्रे अक्षिणी यस्याः सा, **श्रवणयोः** कर्णयोः **नीलोत्पलं** नीलकमलं कर्णावतंसत्वे स्थितमितिभावः। **वसनाञ्चलैः** वस्त्रप्रान्तैः **निह्नुते** पिदधाति। वस्त्राच्छादितं

केचित्तु "आदौ रतं बाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनपूर्वमेव। इति कामशास्त्रात्पूर्वमालिङ्गनौचित्यात्तथैव योजनीयम्" इति व्याचख्युः। तच्चिन्त्यम्। यथाश्रुतेऽप्यालिङ्गनस्य व्याख्यानात्।

शास्त्राणां विषयस्तावद्यावन्मन्दरसो नरः।
रतिचक्रे प्रवृत्ते तु न च शास्त्रं न च क्रमः॥

इति कामशास्त्रोक्तेश्च।

अम्बुजिनीपतिपदसाहचर्याद् देवपदं सूर्यपरम्। जिज्ञासमानेत्यत्र "ज्ञाश्रुस्मृदृशां सन" इत्यात्मनेपदं कर्णावतंसनीलोत्पलनिह्नवश्च तद्विकासस्य दिवसानुमापकत्वाद्दिवसानुमितौ सत्यां "न दिवा मैथुनं कुर्यात्" इति निषेधानुसन्धानात्सम्भोगान्निवृत्तो माभूदित्यभिप्रायेणेति रतिप्रीतिसूचनमिति सम्प्रदायः।

अन्ये तु "देवस्य क्रीडारसिकस्याम्बुजिनीपतेः कमलिनीनायकस्य समुदयं दिनरात्रिविभागज्ञापकं, प्रिये प्रियरतिदातरि।

रजनीसुरतेषु पद्मिनी न सुखं याति निसर्गतः क्वचित्।
दिवसे शिशुयोगतोऽपि सा विकसत्यम्बुजिनी यथा रवेः॥

इत्यादि कामतन्त्रोक्त्या पद्मिन्यादिवच्च सुरतप्रियत्वाद्रात्रिशेषे बाह्यरतं विधायान्तररतार्थं कामतन्त्रनिपुणे प्रिये दिवसज्ञानार्थं सूर्योदयं जिज्ञासमाने सति वसनाञ्चलैरिति बहुत्वेन विकासरभसतया बहुप्रयत्नगोप्यत्वम्। श्रवणयोरिति द्वित्वेनैकस्यैव पर्यायेणोभयभूषणत्वात्प्रियत्वम्। तेन च संनिहितत्वं व्यज्यते। पाण्डुगण्डतटे तदवतंसस्यैव योग्यत्वान्नीलेति। निह्नुते गोपयति। दिवसज्ञाने सत्ययं रतिविरतिं करिष्यतीति भ्रान्त्या दिवसज्ञापककमलस्थगनमकरोदिति प्रीतिव्यञ्जनम्" इत्याहुः।

नीलोत्पलं सूर्योदये सत्यपि न विकासमेष्यति तद्विकासाभावे नाधुनापि सूर्योदयो जात इतिमत्वा पुनरपि रिरंसुना प्रियेण न रतिविच्छेदः क्रियते इति रतावतिप्रीतिस्तस्या द्योत्यते॥ अत्र नायकाशयमवगत्य नायिकाया स्वाभिप्रायप्रकाशनाय नीलोत्पलापलापनात् सूक्ष्मालङ्कारः, स च अधरो बिम्बमिति रूपकानुप्राणितः। शार्दूलविक्रीडितं वृत्तम्॥१०॥

द्वितीया यथा—

नखक्षतमुरःस्थलेऽधरदले रदस्य व्रणं
च्युता वकुलमालिका विगलिता च मुक्तावलिः।
रतान्तसमये मया सकलमेतदालोकितं
स्मृतिः क्व च रतिः क्व च क्व च तवालि शिक्षाविधिः॥११॥

---

यत्तु "नैतन्नीलोत्पलं किन्तु मदक्षिकटाक्षसम्बद्धा वसनच्छटेत्यपलपति। नीलपदं वामाक्षीपदस्वारस्यात्, उत्पलस्यानेकदलवत्त्वादञ्चलैरिति वहुत्वं व्यङ्ग्यम् प्राग्वद्" इति। तन्न। वसनाञ्चलैरित्यस्योक्तानिह नवानुपयुक्तत्वात्। एतेनापह्नुतिरत्रालङ्कार इत्यपि निरस्तम् ॥१०॥

नखेति। स्थूलेति स्तनकृतकाठिन्यव्यञ्जनम्। तेन क्षतस्य वहुविघातसाध्यत्वद्योतनम्। एतेन छुरिताख्यं विवक्षितम्।

तथा च शार्ङ्गदेवः—

"यदङ्गुलीपञ्चकेन सशब्दं नखलेखनम्।
कुचादौ कामसूत्रज्ञास्तदाच्छुरितकं विदुः॥"

उर इति स्वतो मर्मत्वात्तत्रत्यक्षतस्य पीडातिशयजनकत्वसूचनम्। उत्तरोष्ठे क्षतचुम्बनादिनिषेधादधरेति। दलेति कोमलत्वसूचनम्। तलेति पाठान्तरम्। तलमधः प्रदेशः। "तस्योपरिभागापेक्षया किञ्चित्काठिन्यादायासदत्तं दन्तक्षतं व्यथाकरमपि नावगतमिति व्यङ्ग्यम्" इति केचित्। अयं च पाठ उपेक्ष्योऽनुप्रासविरोधात्।

आनन्दसम्मोहवतीमुदाहरति—द्वितीयेति। नखक्षतमिति। आलि हे सखि! "आली सखी वयस्याथ" इत्यमरः। उरःस्थले वक्षःप्रदेशे स्तने इतियावत्, नखक्षतं करजचिह्नम्, अधरदले कोमले निम्नौष्ठे रदस्य दन्तस्य व्रणं नायककृतं दन्तक्षतमित्यर्थः। वकुलमालिका तत्तत्र्याभरणविशेषः वकुलवीजानीव स्वर्णादिनिर्मितानि फलानि यस्यां मालिकायां सा। च्युता पतिता भूमाविति शेषः। मुक्तावलिः हारः 'हारो मुक्तावली' इत्यमरः। विगलिता विकीर्णा एतत् सकलं सर्वं नख-

"गणोऽस्त्रियामीर्ममरुः" इत्यमरः। अत्र कामशास्त्रम्——

"पञ्चमीं गतिमुपेक्ष्य वीक्षते स्थाणुवारिततुरङ्गमो यथा।
कामुकावपि तथा स्मराहवे छेद-घात-करजान्न पश्यतः॥"

एवं च पीडाया अप्यानन्दातिशयेनाभिभवात्तदानीन्तन-साक्षात्कारविषयत्वाभावे परेषां का वार्तेत्याशयेनाह-च्युतेति। मालिकेति कप्रत्ययेन मृदुत्वसूचनम्। अतएव च्युतेत्युक्तम्। अल्प-परिरम्भव्यापारमृदितत्वेन पुष्पाणामेव स्वरूपहानेर्वृत्तत्वात्। "हारो मुक्तावली" इत्यमरः। तस्यास्तु मौक्तिकानां काठिन्याति-शयात्परिरम्भमात्रेण विसम्भवाद् गुम्फनसूत्रत्रुटनादेव गलनमात्रमिति भावः। एवं च मौक्तिकव्यवधानेऽपि तत्सूत्रभङ्गपर्यन्तालिङ्गनादितो ऽतिशयितपीडासम्भवेऽपि तदनवगमादानन्दसम्मोह एवाभिव्यज्यते। रतान्तेत्यत्र कामशास्त्रम्——

धातुक्षये समुद्भूते शान्ते च रतिसङ्गरे।
विरामो जायते जातलज्जयोरुभयोरपि॥ इति।

तस्यानिष्टत्वेऽपि दुर्वारत्वादुपयात इति समयपदेन सूच्यते। आलोकितं ज्ञातमित्यर्थः। अत्र स्मृतिः स्मरणसामान्यं क्व रतिस्तत्स्मरण-मपि क्व? सामान्याभावे तद्विशेषस्याप्यनुपपत्तेः। शिक्षापदमर्थाद्रति-विशेषपरम्, तद्विधिरपि क्व?

"नायकाच्च रतिविशेषेणैव तादृगवस्थोत्पत्त्या स्वयं विशेषान्त-रोल्लासनशक्तिवैकल्याद्" इति केचित्। अन्ये तु "यत्र दुःसह-नखक्षतादिरूपवाह्यरतप्रसङ्गे विस्मृतं क्व तत्र यथोक्तविलक्षणानन्द-प्रतिकूलत्वदीयमानधारणाद्युपदेशस्मरणमिति स्मृतिपदस्यार्थः" इत्याहुः॥११॥

क्षतादिकमित्यर्थः। **रतान्तसमये** सुरतावसाने **मया आलोकितं** दृष्टम्। किन्तु तदानीं **स्मृतिः क्वच** मया किमत्र प्रतिकर्तव्यमिति स्मरणं क्वासीत् इत्यानन्दसम्मोहो द्योत्यते। **रतिः च** प्रकारान्तरेण रमणमित्यर्थः **क्व**। **तव शिक्षाविधिः** अस्यामवस्थायामेवं कर्त्त-व्यमिति त्वदुपदेशपद्धतिः च क्वगतेति शेषः। नायकप्रयुक्तेन नखक्षतादिनाऽऽनन्द-सम्मुग्धया मया सर्वं विस्मृतमिति भावः। स्वभावोक्तिरलङ्कारः। पृथ्वीवृत्तम्॥११॥

**मध्याप्रगल्भे प्रत्येकं मानावस्थायां त्रिविधे––धीरा, अधीरा, धीराधीरा चेति। तत्र व्यङ्ग्यकोपप्रकाशा धीरा, अव्यङ्ग्यकोपप्रकाशाऽधीरा, व्यङ्ग्याव्यङ्ग्यकोपप्रकाशा धीराधीरा । इयांस्तु विशेषः–मध्याधीरायाः कोपस्य गी-**

---

उत्तरोक्तौ द्वौ स्वीयाभेदौ विशेष्यतावच्छेदकीकृत्य विभाजकोपाध्यन्तराण्याह–**मध्याप्रगल्भे इति**। धीरादिभेदानां सम्भवसमयमाह-**मानावस्थायामिति**। यद्यपि विभागवाक्ये विशेष्यतावच्छेदकयावदुपाधिसामानाधिकरण्यं विभाजकोपाधेर्गम्यत एव। विभाजकोपाधीनां परस्परसामानाधिकरण्याभावस्यैव नियतत्वात् । तथापि स्पष्टार्थं प्रत्येकमित्युक्तम्––**धीरेति**। स्वप्रतियोगिकात्यन्ताभावासमानाधिकरणधैर्यवती, चाद्या । प्रतियोग्यसमानाधिकरणधैर्याभाववती द्वितीया। प्रतियोगिसमानाधिकरणधैर्याभाववती तृतीयेति विभागः।

न च धैर्यतदभावयोः कथं सामानाधिकरण्यमिति वाच्यम्, संयोगतदत्यन्ताभावयोरिवानुभवात्तत्सिद्धेः।

वस्तुतस्तु, अत्राधैर्यं न धैर्यात्यन्ताभावः, असम्भवापत्तेः। किन्त्वनभिमतार्थज्ञानसत्त्वेऽपि परुषवचनादिभ्यो निवृत्तिर्धैर्यम्। तत्र प्रवृत्तिर्धैर्यमिति लक्षणे तु प्रतियोगिपदं विरुद्धपरम्। स्वं धैर्यं प्रतियोगिविरुद्धं यस्य स स्वप्रतियोगिकः। आत्यन्तिकोऽभावो यस्य सोऽत्यन्ताभाव इति विरोधप्रदर्शनमात्रम् तृतीयेऽपि धैर्याभावपदमुक्ताधैर्यपरमेव बोध्यम्।

तदेव दर्शयति-**व्यङ्ग्येति**। व्यङ्ग्यो व्यञ्जनावृत्तिमात्रजन्यः कोपस्य प्रकाशो ज्ञानं यस्याः। यत्पदोत्तरषष्ठ्याः समवायित्वमर्थः॥

मध्याप्रगल्भयोर्भेदान्तराण्याह––**मध्येत्यादि**। मध्या च प्रगल्भा चेति ते **मध्याप्रगल्भे** पूर्वोक्ते प्रत्येकं पृथक्पृथगित्यर्थः **मानावस्थायां** नायिकायां मानवत्यामिति यावत्। नायके सागसि, तदभिलाषपूरणासमर्थे वा या तस्याः कोपस्थितिः सैव मानावस्था, तस्याम्। **त्रिविधे** त्रिप्रकारके। तांश्च प्रकारानाह––**धीरा** धैर्यवती, **अधीरा** धैर्यरहिता, **धीराधीरा** क्वचिद्धैर्यवती क्वचिच्चाधैर्यवती। पूर्वं मध्याभेदान्

**व्यञ्जिका। अधीरायास्तु परुषा वाक्। धीराधीराया वचन-रुदिते प्रकाशके। प्रौढाधीरायास्तु रतौदासीन्यम्। अधीराया-स्तर्जनताडनादि। धीराधीराया रतौदासीन्यं तर्जनादि च। एते च धीरादिभेदाः स्वीयाया एव न परकीयाया**

---

तच्च कोपान्वितम्। ज्ञानं च नायकसमवेतम्। तत्र व्यङ्ग्य-पदार्थान्वये तात्पर्यम्। तथा च व्यञ्जनमात्रजन्यनायकनिष्ठ-ज्ञानविषयककोपवत्त्वं लक्षणम्।

अधीरादिवारणाय जन्यान्तं ज्ञानविशेषणम्। तदीयकोपस्यापि व्यञ्जनगम्यत्वाद् व्यभिचारतादवस्थ्यमतो मात्रेति। सख्यादौ प्रकारान्तरेणापि तत्कोपज्ञानोदयात्। नायकनिष्ठेति ज्ञानविशेषणम्।

ननु येन प्रकारान्तरेण सख्यादौ तदीयकोपज्ञानं तेनैव नायकस्यापि यत्र तज्ज्ञानं वृत्तं तत्राव्याप्तिः। यथा सखीं प्रत्येकान्ते नायिकया तदुक्तौ अकस्मान्नायकेन तदुक्तिश्रवणादिस्थले, इति चेन्न; मन्निष्ठकोपो व्यञ्जनामात्रेण नायकज्ञानविषयो जायतामित्याकारकेच्छायास्तत्रावश्यकत्वात्। तथा च मन्निष्ठो यो व्यञ्जनातिरिक्तो व्यापारस्तदजन्यत्वे सति यज्जन्यत्वं तत्प्र-कारतानिरूपिता या नायकज्ञाननिष्ठा विशेष्यता तन्निरूपित-विषयनिष्ठविशेष्यताख्याप्रकारता तन्निरूपिता या मन्निष्ठकोपनिष्ठ-विशेष्यता तच्छालीच्छावत्त्वमेव धीरात्वमिति तात्पर्यम्। नायक-निष्ठशाब्दबोधहेतुभूताकाङ्क्षादि ज्ञानव्यतिरेकेण तस्य नायिका-वाक्याच्छाब्दबोधानुत्पत्त्या तन्मूलकव्यञ्जनव्यापारस्याप्यनु-ल्लासात्।

लक्षयति-तत्रेति। तत्र तेषु प्रकारेषु व्यङ्ग्यः व्यञ्जनागम्यः **कोपस्य** रोषस्य **प्रकाशः** प्रकटनं यस्याः सा। या प्रकारान्तरेण कोपं प्रकटीकरोति सा धीरेइति भावः। **अव्यङ्ग्येना**तनुमेयत्वेन स्पष्टतयेत्यर्थः। **कोपप्रकाशा** रोषं प्रदर्शयन्ती **अधीरा**। व्यङ्ग्यं चाव्यङ्ग्यं **चव्यङ्ग्याव्यङ्ग्ये** ताभ्यां **कोपप्रकाशा धीराधीरा**। सामान्यतो लक्षणमुक्त्वा

**इति प्राचीनलेखनमाज्ञापनमात्रम् । धीरत्वमधीरत्वं तदुभयत्वं वा माननियतम् । परकीयायां मानश्चेत्तेषामप्यावश्यकत्वात् । मानश्च न परकीयायामिति वक्तुमशक्यत्वात् ।**

---

व्यञ्जनातिरिक्तव्यापाराजन्यज्ञानविषयत्वं कोपस्याप्रसिद्धं स्यादतो व्यापारे मन्निष्ठत्वं विशेषणम् । न च मन्निष्ठपदस्य मत्सम्बन्धित्वमात्रतात्पर्यकतया व्यञ्जनातिरिक्तेन शब्दरूपेणोपायेन जन्यत्वात् प्रसिद्धिरेवेति वाच्यम्; व्यञ्जनपदेन तदुपयुक्तस्यापि विवक्षितत्वात्, शब्दस्य तदतिरिक्तत्वाभावात् ।

यत्तु "प्रकाशस्य तेजोधर्मत्वादत्र तेनाविर्भावो लक्ष्यते, कोपानौद्धत्यं च व्यङ्ग्यम् । व्यञ्जनसमधिगम्यः कोपाविर्भावो यस्या इति लक्षणार्थ" इति, तच्छ्लोकार्थव्याख्यानवासनामात्र-विजृम्भितम्, आविर्भावित्यस्य लक्षणे प्रयोजनाभावात् । अधीरादौ व्यभिचाराच्चेतिदिक् ।

**अव्यङ्ग्येति** । लिङ्गानुमेयकोपवत्त्वे तात्पर्यम् । अतएव "केनचिल्लिङ्गेनानुमेय" इति पूर्वलक्षणव्याख्यानान्तरमपास्तम् ।

**व्यङ्ग्याव्यङ्ग्येति** । कोपव्यञ्जकानुमापकोभयव्यापारेच्छा-वत्त्वमित्यर्थः । गीरिति । उभयसाधारणीति शेषः । इदं च नेत्र-व्यापारादेरप्युपलक्षणम् । व्यञ्जनस्य शब्दमात्रवृत्तित्वस्यालङ्कारि-कैरनङ्गीकारात् । तस्य च क्वचिल्लिङ्गविधायकोपगमकत्वम्, क्वचिदन्यथैवेति सहृदयानुभवसिद्धम् । तत्राद्ये धीरत्वं न त्वन्त्ये । इति न दोषः ।

पुनः स्पष्टं प्रत्याययति—**इयांस्त्विति** । **मध्याधीरायाः गीः** वाक् **कोपस्य** रोपस्य **व्यञ्जिका** एवा व्यङ्ग्यवचनैः कोपं व्यनक्तीतिभावः । **अधीरायास्तु** मध्याया इति-शेषः । **परुषा** निष्ठुरा "निष्ठुरं परुषम्" इत्यमरः । कर्कशा इति यावत् । **वाक्** कोपस्य व्यञ्जिका इति शेषः । **धीराधीराया** मध्याया **वचनं** च व्यङ्ग्यपूर्णमिति शेषः । **रुदितं** क्रन्दितञ्चेति वचनरुदिते । "रुदिर अश्रुविमोचने" धातोः भावे क्तः । **प्रकाशके** कोपस्येति शेषः । एवं मध्याधीराभेदानुक्त्वा प्रौढाधीराया भेदाँल्लक्षयति—

धीरिति पाठान्तरम् । परबुद्धेः परायोग्यतयाऽव्यञ्जकत्वाद् व्यापारविशेषो लक्ष्यते, इति व्याख्येयम् ।

यत्तु "एवं निष्प्रयोजनलक्षणा धीराधीराया वचनरुदिते कोपप्रकाशके इत्यग्रिमग्रन्थविरोधः । वचनं चक्रमिति स्वयमपि तद्व्याख्यानात् । अतीन्द्रियस्यापि विशुद्धमातापितृजत्वादेर्व्यञ्जकत्वाङ्गीकारात् तद्विरोधश्च" इति, तच्चिन्त्यम्; तथाहि नाद्यः, निष्प्रयोजनलक्षणायाः काव्य एव दोषत्वात्, प्रकाशपदस्याविर्भावलक्षणायाः स्वयमेवोक्तत्वाच्च । न च तत्र कोपानौद्धत्यं व्यङ्ग्यमिति वाच्यम्; व्यङ्ग्यपदेनैव तत्सिद्धेः, । न द्वितीयः, तत्र हि वचनरूपव्यञ्जकैक्यं वा दोषः ।

व्यापारपदेन रुदितस्यापि सङ्ग्रहो वा । न प्रथमः, गीरितिपाठेऽपि तथात्वात् । नान्त्यः, धीरितिपाठे यावतां सङ्ग्राह्यत्वं व्यापारपदेनापि तावतामेव सङ्ग्राह्यत्वात् ।

अयं तु विशेषः––आद्यपाठे गिरः शक्त्याऽन्येषां लक्षणया सङ्ग्रहः, एतत्पाठे तु गिरोऽपि लक्षणयेति ।

न तृतीयः, शाब्दविषयीभूतस्यैव विशुद्धमातापितृजत्वादेर्व्यञ्जकत्वोपगमात् । न चात्र ज्ञानस्यापि तथैवेति वाच्यम्; नह्यत्र नायिकायाः स्वनिष्ठतादृशज्ञानवाचकः शब्दः, व्यङ्ग्यकोपत्वानुपपत्तेः । नापि सख्यादेः । तस्यापि नायिकानिष्ठज्ञानप्रत्यक्षायोगात्, नायकतुल्यभोगक्षमत्वात् । न च नायिकाशब्देन सख्यास्तच्छब्देन नायकस्य तज्ज्ञानं शाब्दमिति वाच्यम्; तदन्यस्थले गतिविरहादिति न किञ्चिदेतत् ।

---

**प्रौढाधीरायास्तु रतौदासीन्यं** रतं सम्भोगं प्रति **औदासीन्यं** विरक्तत्वमितिभावः। प्रौढा अधीराया **तर्जनताडनादि,** प्रौढाधीराधीराया उभयमेव रतौदासीन्यं तर्जनादि च कोपस्य प्रकाशकं भवतीतिभावः। कस्यचित्प्राचीनस्योक्तिं खण्डयति––**एते चेति, एते च धीरादिभेदाः** केवलं **स्वीयाया** एव **न परकीयाया** इति **प्राचीनस्य** कस्यचिल्लेखनमाज्ञापनमात्रम् एवं भवत्विति बलात्कृतमादेशमिव न युक्तिसहमिति भावः। तत्र हेतुमाह––**धीरत्वमिति** । **धीरत्वं** धीरभावः **अधीरत्वम**धीरभावः

प्रकृतमनुसरामः, परुषवागिति। परुषत्वं च कोपव्यतिरेकेणानुपपद्यमानत्वमित्यर्थः। "इदं रुदितस्याप्युपलक्षणम्" इति केचित्। तन्न। प्रमाणाभावात्, पार्थक्येन कथनानुपपत्तेश्च। एतेनाग्रे "रुदितपदं परुषवचनस्याप्युपलक्षणम्" इत्यपि निरस्तम्।

रतौदास्यमिति। कोपसाधारणव्यापारेण रतान्निवृत्तिरित्यर्थः। तदुक्तं साहित्यदर्पणे —

"ते धीराचाप्यधीरा च धीराधीरेति षड्विधे।
प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा दहेद्रुषा॥
धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः।
प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा॥
उदास्ते सुरते तत्र दर्शयत्यादराद्बहिः।
धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम्॥
तर्जयेत्ताडयेदन्येति।" अन्या अधीरेत्यर्थः। स्पष्टमन्यत्।

प्राचीनलेखनमिति पाठो युक्तः। लिखनमिति त्वयुक्तम्, लघूपधगुणस्य दुर्वारत्वात्। केचित्तु "प्रवृत्तौ वैलक्षात्किमपि लिखितुं दैवहतकः" इत्यादिप्रयोगात् संज्ञापूर्वको विधिरनित्य इति समाधानं कल्पयामासुः।

अयं चात्र प्राचामभिप्रायः—परकीयाया मानसत्त्वेऽपि नायकस्य नायिकान्तरसम्भोगमुपगम्यैव तत्रानुरक्तत्वात्तस्य न भेदप्रयोजकत्वमिति। नवीनानां त्वयमाशयः तथापि तद्भेदानुपपत्तिः। नायिकान्तरसम्भोगस्य कादाचित्कतया निमित्तत्वोपपत्तेः। स्वीयाया अपि अन्यसम्भोगानभ्युपगमेनानुरागोत्पत्तौ प्रमाणाभावात्। स्यादेतत्। कन्यकायां मानसद्भावे तुल्यन्यायतया मुग्धायामपि तत्सम्भवात्तन्नान्तरीयकतया धीरत्वादिसम्भवात्। तत्र धीरादिभेदाः कथं

**तदुभयत्वं** धीराधीरभावश्च **माने नियतम्** नियन्त्रितम् मानाधीनमितिभावः। यदि **परकीयायां मानं** भवति **चेत्तेषां** धीरात्वादीनामपि **तत्राश्यकत्वात्, मानश्च परकीयायां न** भवतीति **वक्तुमशक्यत्वात्** अर्थात् नैवं वक्तुं शक्यते यत्स्वीयैव मानं कर्तुं शक्नोति न तु परकीयेति, परिस्थितिजन्यतया तस्य सर्वत्र स्वाभाविकत्वात्।

तत्र मध्याधीरा यथा--

लोलालिपुञ्जे व्रजतो निकुञ्जे
स्फाराः बभूवुः श्रमवारिधाराः।
देहे समीहे भवतो विधातुं
धीरं समीरं नलिनीदलेन ॥१२॥

---

नोक्ता इति। तन्न। कन्यकात्वस्य पुंप्रतियोगिकसम्भोगध्वंसासमानाधिकरणसम्भोगात्यन्ताभाववत्त्वरूपतया तस्य वयोऽवस्थाविशेषानियमात्प्रागल्भ्यावस्थायां तत्सम्भवात्। मुग्धात्वस्य तु वयोविशेषमात्रनियततया तत्र तादृशसामग्रीविरहात्।

यत्तु "तथापि मुग्धाविशेषस्योक्तभेदसम्भवोऽस्त्येव" इति। तच्चिन्त्यम्। नायिकासाक्षाद्विभाजकोपाध्यवच्छेदेनैव धीरादिभेदानां वाच्यत्वात्। व्यङ्ग्यवचनादितत्कार्याणां मुग्धात्वसामानाधिकरण्येनाप्यसम्भवाच्च। विश्रब्धनवोढादावपि लज्जाप्राधान्यनियमादित्यास्तां विस्तरः।

**लोलेति।** भवदङ्गसौरभ्यलोलुपतया भ्रमराणां लोलत्वम्। नायकसम्बुद्ध्यनुपादानात्कोपो व्यङ्ग्यः। यद्वा लोलेति सम्बुद्धिः। "अलीनां पुञ्जो यत्रेति समासः" इति केचित्, तन्न; व्यधिकरणबहुव्रीहिप्रसङ्गात्। एतेन "आलीनां विरुद्धलक्षणया-असखीनां मत्सपत्नीनां पुञ्जो यत्र" इत्यपि निरस्तम्। सामान्यलक्षणानवच्छिन्नत्वापत्तेश्च। यत्तु "अलीनां पुञ्ज इवालिपुञ्जो ध्वान्तराशिसदृश इतियावत्। एवं चान्यजनानवलोकनीयतया निःशङ्कवकुलकेलिविधानात् खेदातिशयो व्यङ्ग्यः" इति। तदपि चिन्त्यम्;

---

मध्याधीरामुदाहरति--**तत्रेति। लोलालीति। लोलानां** चपलानाम् 'लोडृ उन्मादे" धातोः पचाद्यच्। **अलीनां** भ्रमराणां "षट्पदभ्रमरालयः" इत्यमरः। **पुञ्जा** राशयः, यस्मिन् तस्मिन् 'पुञ्जराशीतूत्करः" इत्यमरः। भ्रमद्भ्रमरसमूहवतीतिभावः। **निकुञ्जे** लतादिभिराच्छादिते क्रीडागुल्मे। कावजनीति विग्रहे जनीप्रादुर्भावे धातोः "सप्तम्यां जनेर्डः" इतिडः, पृषोदरादिः, निरन्त्रोपसर्गान्तर-

"निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरोक्त्या कुञ्जपदेनैव वनत्वलाभात्। तस्माद्भ्रमराणां चञ्चलत्वेन तत्र जनगमनसिद्ध्या तस्य कुञ्जगमनस्वरूपासिद्धिनिरास इति तत्त्वम्।

व्रजतस्तन्निवारणपूर्वकं वेगेन गच्छत इति नार्थः। कुञ्जसम्बन्धिभ्रमरसम्बन्धस्य कुञ्जगमनपूर्वकालेऽनुपपत्त्या तद्वारणपूर्वकत्वस्य गमनेऽनुपपत्तेः। व्रजत इत्यत्र लक्षणहेत्वोः क्रियाया इति हेत्वर्थे शतृप्रत्ययः।

श्रमवारीत्यत्र श्रमजन्यं वारि स्वेदरूपमित्यर्थः। तदाह भरतः—

"अध्वगतिव्यायामान्नरस्य सञ्जायते श्रमो नाम।
निःश्वासदर्शनस्वेदैस्तस्याभिनयः प्रयोक्तव्यः॥"

देहपदेनान्तरग्लानिविरहसूचनम्। नलिनीदलेति जलसम्पृक्तत्वसूचनाज्जलावयवसम्बन्धेन तत्पवनस्य शैत्यव्यञ्जनम्, धीरपदं श्रमबाहुल्यसूचनाय। वायोरिति मन्दत्ववारणार्थम्।

"स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषतः" इति भरतः।

"अत्र लोलालिपुञ्जेत्युपादानान्नायकविलोकनविलोलविलोचननायिकासमूहवत्त्वं कुञ्जस्य व्यङ्ग्यम्। तेन तादृशनिकुञ्जगमनखेदस्य भवानेव सह इति काकूत्थापिता तादृशविलासिनीसमूहकेलिप्रयासेन स्वेदोद्गमः सम्पन्नो न तु निकुञ्जगमनेनेति वक्रोक्तिः" इति केचित्। तच्चिन्त्यम्। एककुञ्जे वह्वीभिर्नायिकाभिरेकस्य नायकस्य सम्भोगोक्तेरसाम्प्रदायिकत्वात्।

यत्तु "भ्रमद्भ्रमरपक्षसमूहजातवातशीतलतरणिकरसम्पर्कशून्यदेशगमनेन स्वेदानुपपत्त्या नायिकान्तरसम्भोगेनैव स्वेदधारोदय इति

व्यावृत्त्यर्थम्। **व्रजतः** गच्छतः **भवतः** नायकस्य **देहे** गात्रे **श्रमवारिधाराः** स्वेदप्रवाहाः **बभूवुः** अभवन्। अत्र लिट्लकारप्रयोगश्चिन्त्यः वारिधाराणामपरोक्षत्वात्। अतः **नलिनीदलेन** कमलिनीपत्रेण **धीरं** मन्दं यथास्यात्तथा **समीरं** पवनं **विधातुं** कर्तुं **समीहे** वाञ्छामीति भावः। एवं तत्र कयाचित्सुरतासक्त इति वाचा कोपस्य व्यञ्जनेति मध्याया धीरात्वम्। अत्रालङ्कारः परिकराङ्कुरः इन्द्रवज्राच वृत्तम्॥१२॥

तत्र मध्याधीरा यथा—

लोलालिपुञ्जे व्रजतो निकुञ्जे
स्फाराः बभूवुः श्रमवारिधाराः ।
देहे समीहे भवतो विधातुं
धीरं समीरं नलिनीदलेन ॥१२॥

---

नोक्ता इति। तन्न। कन्यकात्वस्य पुंप्रतियोगिकसम्भोगध्वंसासमानाधिकरणसम्भोगात्यन्ताभाववत्त्वरूपतया तस्य वयोऽवस्थाविशेषानियमात्प्रागल्भ्यावस्थायां तत्सम्भवात्। मुग्धात्वस्य तु वयोविशेषमात्रनियततया तत्र तादृशसामग्रीविरहात्।

यत्तु "तथापि मुग्धाविशेषस्योक्तभेदसम्भवोऽस्त्येव" इति। तच्चिन्त्यम्। नायिकासाक्षाद्विभाजकोपाध्यवच्छेदेनैव धीरादिभेदानां वाच्यत्वात्। व्यङ्ग्यवचनादितत्कार्याणां मुग्धात्वसामानाधिकरण्येनाप्यसम्भवाच्च। विश्रब्धनवोढादावपि लज्जाप्राधान्यनियमादित्यास्तां विस्तरः।

**लोलेति**। भवदङ्गसौरभ्यलोलुपतया भ्रमराणां लोलत्वम्। नायकसम्बुद्ध्यनुपादानात्कोपो व्यङ्ग्यः। यद्वा लोलेति सम्बुद्धिः। "अलीनां पुञ्जो यत्रेति समासः" इति केचित्, तन्न; व्यधिकरणबहुव्रीहिप्रसङ्गात्। एतेन "आलीनां विरुद्धलक्षणया-असखीनां मत्सपत्नीनां पुञ्जो यत्र" इत्यपि निरस्तम्। सामान्यलक्षणानवच्छिन्नत्वापत्तेश्च। यत्तु "अलीनां पुञ्ज इवालिपुञ्जो ध्वान्तराशिसदृश इतियावत्। एवं चान्यजनानवलोकनीयतया निःशङ्कवकुलकेलिविधानात् खेदातिशयो व्यङ्ग्यः" इति। तदपि चिन्त्यम्;

मध्याधीरामुदाहरति—**तत्रेति**। **लोलालीति**। **लोलानां** चपलानाम् 'लोडृ उन्मादे" धातोः पचाद्यच्। **अलीनां** भ्रमराणां "षट्पदभ्रमरालयः" इत्यमरः। **पुञ्जा** राशयः, यस्मिन् तस्मिन् 'पुञ्जराशीतूत्कराः" इत्यमरः। भ्रमद्भ्रमरसमूहवतीतिभावः। **निकुञ्जे** लतादिभिराच्छादिते क्रीडागुल्मे। कावजनीति विग्रहे जनीप्रादुर्भावे धातोः "सप्तम्यां जनेर्डः" इतिडः, पृषोदरादिः, निरत्रोपसर्गान्तर-

"निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरोक्त्या कुञ्जपदेनैव घनत्वलाभात्। तस्माद्भ्रमराणां चञ्चलत्वेन तत्र जनगमनसिद्ध्या तस्य कुञ्जगमनस्वरूपासिद्धिनिरास इति तत्त्वम्।

व्रजतस्तन्निवारणपूर्वकं वेगेन गच्छत इति नार्थः। कुञ्जसम्बन्धिभ्रमरसम्बन्धस्य कुञ्जगमनपूर्वकालेऽनुपपत्त्या तद्वारणपूर्वकत्वस्य गमनेऽनुपपत्तेः। व्रजत इत्यत्र लक्षणहेत्वोः क्रियाया इति हेत्वर्थे शतृप्रत्ययः।

श्रमवारीत्यत्र श्रमजन्यं वारि स्वेदरूपमित्यर्थः। तदाह भरतः—

"अध्वगतिव्यायामान्नरस्य सञ्जायते श्रमो नाम।
निःश्वासदर्शनस्वेदैस्तस्याभिनयः प्रयोक्तव्यः॥"

देहपदेनान्तरग्लानिविरहसूचनम्। नलिनीदलेति जलसम्पृक्तत्वसूचनाज्जलावयवसम्बन्धेन तत्पवनस्य शैत्यव्यञ्जनम्, धीरपदं श्रमबाहुल्यसूचनाय। वायोरिति मन्दत्ववारणार्थम्।

"स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषतः" इति भरतः।

"अत्र लोलालिपुञ्जेत्युपादानान्नायकविलोकनविलोलविलोचननायिकासमूहवत्त्वं कुञ्जस्य व्यङ्ग्यम्। तेन तादृशनिकुञ्जगमनखेदस्य भवानेव सह इति काकूत्थापिता तादृशविलासिनीसमूहकेलिप्रयासेन स्वेदोद्गमः सम्पन्नो न तु निकुञ्जगमनेनेति वक्रोक्तिः" इति केचित्। तच्चिन्त्यम्। एककुञ्जे बह्वीभिर्नायिकाभिरेकस्य नायकस्य सम्भोगोक्तेरसाम्प्रदायिकत्वात्।

यत्तु "भ्रमद्भ्रमरपक्षसमूहजातव्रातशीतलतरणिकरसम्पर्कशून्यदेशगमनेन स्वेदानुपपत्त्या नायिकान्तरसम्भोगेनैव स्वेदधारोदय इति

व्यावृत्त्यर्थम्। **व्रजतः** गच्छतः **भवतः** नायकस्य **देहे** गात्रे **श्रमवारिधाराः** स्वेदप्रवाहाः **बभूवुः** अभवन्। अत्र लिट्लकारप्रयोगश्चिन्त्यः वारिधाराणामपरोक्षत्वात्। अतः **नलिनीदलेन** कमलिनीपत्रेण **धीरं** मन्दं यथास्यात्तथा **समीरं** पवनं **विधातुं** कर्तुं **समीहे** वाञ्छामीति भावः। त्वं तत्र कयाचित्सुरतासक्त इति वाचा कोपस्य व्यञ्जनेति मध्याया धीरात्वम्। अत्रालङ्कारः परिकराङ्कुरः इन्द्रवज्राच वृत्तम्॥१२॥

**मध्याऽधीरा यथा--**

**जातस्ते निशि जागरो मम पुनर्नेत्राम्बुजे शोणिमा**
**निष्पीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः।**
**भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं त्वया श्रीफलं**
**पञ्चेषुः पुनरेष मां बहुतरं क्रूरैः शरैः कृन्तति॥१३॥**

---

व्यङ्ग्यम्" इति। तदपि चिन्त्यम्। निकुञ्जगमनात्पूर्वं स्वेदोत्पत्तेरसम्भवात्।

किं च व्यञ्जकवाक्यार्थस्योभयसाधारण्यमेव व्यञ्जकताया-मुपयुक्तमिति ध्वनिरहस्यविदः। तथा च काव्यप्रकाशे--"निःशेषे-त्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तर-तोऽपि भवन्ति। यतश्चात्रैव स्नानकार्यतयोपात्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानीति"। असाधारण्ये त्वनुमित्यैव व्यञ्जनं गतार्थं स्यात्। तथा च लोलालिपुञ्जपदेन तद्भीत्या निकुञ्जे विश्रमितुमशक्यत्वाद् गमनजन्यश्रमप्रतीकाराभावः। भ्रमरसम्बन्धा-त्पुष्पितत्वाक्षेपे उद्दीपनविशेषवत्त्वाद्विशृङ्खलरतेनापि तत्सम्भव-श्चेत्युभयसाधारण्ये वक्त्रादिवैशिष्ट्यवशान्नायिकान्तरसम्भोगध्वनि-रित्येव रहस्यम्॥१२॥

**जातस्त इति**। जागरो निद्राभङ्गः। "जागरस्तु विनिद्रत्वम्" इति विद्यानाथः। तथा च भारते--

अभियुक्तं बलवता दुर्बलं हीनसाधनम्।
हृतस्वं कामिनं चौरमाविशन्ति प्रजागराः॥

अत्र चेतरबाधसहकारान्नायिकान्तरसम्भोगस्तद्धेतुतया स्फुटमेव पर्यवस्यतीति पुरुषत्वसिद्धिः। पुनः शब्दो वैयधिकरण्यस्फोरणार्थः।

मध्यामधीरामुदाहरति--**जातस्ते इति**। ते तव नायकस्येतिभावः। **निशि** रात्रौ **जागरः** जागरणम् निद्राभङ्ग इतियावत्। जागृधातोः भावे घञ् "जागर्ते-रकारो वा" इति वाऽकारः। **जातः** अजनि **पुनः** किन्तु **मम** नायिकाया इति भावः। **नेत्राम्बुजे** नयनकमले **शोणिमा** रक्तत्वम्, असङ्गतमेतदितिभावः, यस्य जागरस्तस्यैव

नेत्रमम्बुजमिवेत्युपमितसमासो नेत्रनिष्ठत्वेन शोणिम्नो वर्णनीयत्वात्। "अम्बुजपदं दृशि रुदितव्यञ्जनार्थम्" इति केचित्। एकवचनं त्वदागमनमार्गदर्शनरूपैकव्यापारवत्त्वलाभार्थम्। "प्रविततमिति मनोविशेषणम्, महतोऽपि घूर्णितत्वाद द्रु तत्वसूचनार्थं" इति केचित्। "प्रविततं बहु यथा स्यात्तथा व्याघूर्णितमिति क्रियाविशेषणम्" इत्यपरे।

वस्तुतो मधुनस्तद्विशेषणम्। तेन कारणोत्कर्षे कार्योत्कर्षाद् व्याघूर्णितत्वातिशयो व्यङ्ग्यः। न च कार्यातिशयेनैव मधुन उत्कर्षो व्यज्यतामिति वाच्यम्; व्याघूर्णितत्वस्येर्ष्याद्वारा रतिपरिपोषोपयोगितया तस्यैव तद्व्यङ्ग्यत्वौचित्यात्। अनेन मध्यममदः सूचितः। तथा च भरतः—

"स्खलिताघूर्णितनयनः स्रस्तकव्याकुलितगात्रविक्षेपः।
कुटिलव्याविद्धगतिर्मध्यमदो मध्यमप्रकृतिः।" इति।

"बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि" इत्यमरः। "अवयवे च प्राण्योषधिवृक्षेभ्यः" इत्यण्, "फले लुक्" इति तस्य लोपः। "द्विहीनं प्रसवे सर्वम्" इति क्लीबत्वम्। अनेन स्तनस्य विवक्षितत्वादतिशयोक्तिः। निकुञ्जे भवनत्वारोपः प्रियासङ्गमहेतुत्वव्यञ्जनार्थः। भ्राम्यद्भृङ्गेत्यनेन भ्रमरेषु यामिकव्यवहारारोपः। पञ्चेषुः कामः। तदाहुः—

अरविन्दमशोकं च चूतं च नवमल्लिका।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः॥

यद्वा—

नयने शोणिमाया औचित्यात्। भवता **प्रविततं** प्रचुरं **मधु** मद्यं **निष्पीतं किन्तु मे मनः** मच्चित्तं **व्याघूर्णितं** भ्रान्तम्, वि आ घूर्णभ्रमणे धातोःक्तः। इदमप्यसङ्गतम् मद्यग्रहृदय एव घूर्णनौचित्यात्। **भ्राम्यद्भृङ्गवने** भ्राम्यद्भिः भ्रममाणैश्चपलैरित्यर्थः। "वाभ्राश .." इतिश्यन्। शमामष्टानां दीर्घः भृङ्गैः भ्रमरैः। बिभर्ति कुलमिति 'भृञः किन्नुट् च' इति गन् भृङ्गः घनं निविडं तस्मिन्, **निकुञ्जभवने** लतागृहे **त्वया** नायकेनेत्यर्थः **श्रीफलं** मालूरफलं **लब्धं** प्राप्तम किन्तु **एष पञ्चेषुः** अयं पञ्चबाणवान्

मध्या धीराधीरा यथा--

कान्तानुरागचतुरोऽसि मनोहरोऽसि
नाथोऽसि किं च नवयौवनभूषितोऽसि।

---

पञ्चबाणान्महेशानि वक्ष्यामि शृणु पार्वति।
क्षोभणो द्रावणो देवि तथाऽऽकर्षणसंज्ञकः॥
वश्योन्मादौ क्रमेणैव नामानि परमेश्वरि।

इत्यागमोक्तेः। येन निधिर्लभ्यते राज्ञे तदनिवेदकस्य चौरस्य वा शासनं युक्तम्। अत्र तु वैपरीत्यमिति भावः। असङ्गतिरलङ्कारः। क्रोधजन्यशोणिम्नो जागरजन्यरक्तत्वाभेदाध्यवसायेन जागरजन्यतावच्छेदकवैजात्यवतो रागस्य जागररूपहेतुव्यधिकरणत्वोक्तेः। "हेतुव्यधिकरणं चेत्कार्यं स्यात् सा त्वसङ्गतिः प्रोक्ता" इत्यलङ्कारकौस्तुभे।

यत्तु कैश्चिद्व्याख्यातम्--"नायिकायां जागरादिकारणाकथनेऽपि नेत्रारुणिमादिकार्यकथनान्नायके च जागरणादिकथनेऽपि तत्कार्याकथनाद्विभावनाविशेषोक्ती, ताभ्यां संसृष्टो विरोधालङ्कारः" इति। तच्चिन्त्यम्। असङ्गतेरलङ्कारान्तरत्वस्य सर्वालङ्कारिकसम्मतत्वात्। विभावनायां कार्याधिकरणवृत्त्यभावप्रतियोगित्वं कारणस्योच्यते, असङ्गतौ तु कार्याभाववद्वृत्तित्वम्। किं च तत्र कारणतावच्छेदकावच्छिन्नाभावोऽत्र तु कारणतावच्छेदकसम्बन्धमात्राभावः, एतेन विरोधोऽप्यपास्त इत्यलङ्कारकौस्तुभे विस्तरेण निरूपितत्वात्॥१३॥

कामः हुतवहक्रूरैः हुतवहोऽग्निः, तद्वत् क्रूरैः निर्दयैः शरैः बाणैः मां कृन्तति छिनत्ति। श्रीफलमिति वाच्यार्थस्य विवक्षितानुपयुज्यमानत्वात् कुचरूपार्थान्तरे सङ्क्रमणादविवक्षितवाच्यो लक्षणामूलो ध्वनिः। अत्र च परुषया वाचा कोपस्य व्यञ्जनेति मध्याया अधीरात्वम्। असङ्गतिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥१३॥

**इत्थं निगद्य सुदृशा वदने प्रियस्य**
**निःश्वस्य बाष्पलुलिता निहिता दृगन्ताः ॥ १४॥**

---

**कान्तेति**। अनुरागपदस्य स्नेहपरत्वान्न कान्तेत्यस्य वैयर्थ्यम्। तद्विषयकचातुर्यवानसीत्यर्थः। तदाह भरतः—

दुःखक्लेशसहिष्णुः प्रियवाग् दाता प्रसादने कुशलः।
रत्युपचारे निपुणो दक्षश्चतुरस्तु बोध्यः।

यद्वा प्रकान्तेति सम्बुद्धिः।

अन्यनारीसमुद्भूतं चिह्नं यस्य न दृश्यते।
अधरे वा शरीरे वा स कान्त इति कथ्यते॥

इति भरतोक्तेः। तस्मान्न विरुद्धलक्षणायाः प्रयोगः।

यत्तु "अनुरागवतीं मामीदृगकार्यकारितयाऽननुरागवतीं करोषीति काकुः" इति। तन्न। स्वीयात्वव्याघातत्वात्।

यदपि "कान्तायाः कमनीयायाः यस्याः कस्याश्चिन्नतु परिणीतायाः" इति। तदप्यसत्। परिणीतायामप्यन्यस्यामनुरागे कोपसाम्यात् स्वभिन्नत्वस्यैव व्यावृत्तिप्रतियोगितावच्छेकत्वेन निर्देश्यत्वात्। मनोहरत्वं नायिकासमवेतो यः स्वविषयकानुरागस्तदुपधायकगुणविशेषशालित्वम्। योग्यत्वं नायिकान्तरेण गुणसाम्यम्। नाथोऽसीति पाठे प्रभुत्वादवर्जनीयत्वं व्यङ्ग्यम्।

हितैषी रक्षणे शक्तो न मानी न च मत्सरी।
सर्वकार्येष्वसम्मूढः स नाथ इति कीर्तितः॥

इति भरतः। पक्षे दाम्पत्यसम्बन्धसूचनाद्वक्रोक्तिः। तदुक्तम्—

मध्यां धीराधीरामुदाहरति—**कान्तेति**। सागसं नायकं प्रति नायिकोक्तिरियम्। **कान्तायाः** कस्याश्चिदप्यभीष्टायाः **अनुरागे** प्रेम्णि, विषयसप्तमीयम्, अनुरागविषये इतिभावः। **चतुरोऽसि** दक्षोऽसि, चत्यते इति 'चते याचने' धातोः 'मन्दि वाशि मथि चति—' इत्यौणादिक उरच् प्रत्ययः। 'दक्षे तु चतुरपेशलपटवः' इत्यमरः। **मनोहरोऽसि** रमणीयोऽसि रूपादिभिराकर्षकोऽसीति भावः। **योग्योऽसि** योगार्होऽसि, योगाय प्रभवतीति 'योगाद्यच्च' इतियत् 'योग्यः प्रवीणयोगार्हो' इतिमेदिनी। कामपि रूपगुणादिमतीं भोक्तुं प्रभवसीत्यर्थः। **किंच नवयौवनेन** उन्मदवयोविशेषेण **भूषितो**

**प्रौढा धीरा यथा—**

**नो तल्पं भजसे न जल्पसि सुधाधारानुकारा गिरो**
**दृक्पातं कुरुषे न वा परिजने कोपप्रकाशच्छलात्।**

---

नाथेति परुषमुचितं प्रियेति दासेत्यनुग्रहो यत्र।
तत्प्रेम किमपि यूनोरितरद्दाम्पत्यसम्बन्धः।। इति।

नवेति यौवनस्योन्मादविशेषहेतुत्वव्यञ्जनम्। भूषितपदेनोन्माद-विशेषानुपधायकत्वसूचनम्। पक्षे तेन तादृशचाञ्चल्यव्यञ्जनम्। निःश्वस्येति निरस्ताख्योऽनिलः। तदाह शार्ङ्गदेवः—

सशब्दः स सकृत्क्षिप्तो निरस्तः कथ्यते मरुत्।
दुःखान्विते सरोगे च श्रान्ते चैष विधीयते।।

"निःश्वासोऽनुशयादिषु" इति च तेनोक्तम्। वाष्पमत्रामर्ष-जन्यम्। तदाह भरतः—

आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद्भयाच्छोकात्।
अनिमेषप्रेक्षणतः शीताद्रोगाद्भवेदस्रम्।।

"लुलविमर्दने" इति वोपदेवः। निहितपदेन चिरस्थायित्व-सूचनम्। अन्तःपदमसूयासूचनार्थम्। तथा च शार्ङ्गदेवः—

किञ्चित्कुञ्चत्पुटा गूढपतत्तारा विलोकने।
शनैस्तिर्यङ् निगूढं या सा जिह्मं विनियुज्यते।।
असूयायां निगूढेऽर्थे जडतालस्ययोरपि।।१४।।

**नो तल्पमिति।** भजनफलस्य कर्तृगामित्वाभिप्रायेणात्मनेपदम्। सधेति माधुर्यसूचनम्। तथा च भरतः—

**इति** अलङ्कृतोऽसि। **इत्थम्** एवं **निगद्य** उक्त्वा **निःश्वस्य** दुःखोद्रेकान्निःश्वासं समुत्सृज्य, **सुदृशा** सुनयनया नायिकयेतिभावः। **वाष्पलुलिताः** अश्रुपूर्णाः **दृगन्ताः** कटाक्षाः **प्रियस्य** नायकस्य **वदने** मुखे **निहिताः** निक्षिप्ताः। अत्र विशेषणानां विरुद्धलक्षणया योगादेवंविधस्य तव भूयस्यः कामिन्यः स्युः किं मां गणयसीति वाचा रुदितेन च कोपस्य व्यञ्जनमिति मध्याया धीराधीरात्वम्। व्याजस्तुतिः परिकरश्चालङ्कारः। वसन्ततिलका वृत्तम्।।१४।।

**इत्थं केतकगर्भगौरि दयिते कोपस्य सङ्गोपनम्**
**स्यादेवं न कथं हि ते सहचरी कुर्वीत साचि स्मितम् ।१५।**

---

वहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः।
नोद्वेजयति तस्माद्धि तन्माधुर्यमिति स्मृतम्॥

धारापदेन तादृशानेकोक्तिशक्तिव्यञ्जनम्। केचित्तु "सुधाया आधारः समुद्रः तेन सरसवर्णत्वं गाम्भीर्यं च व्यङ्ग्यम्" इत्याहुः। सुधाधारामनुकुर्वन्तीत्यर्थे कर्मण्यण्प्रसङ्गात्। अनुक्रियत इत्यनुकारः। कर्मणि घञ्। "कस्त्वया दायो दत्त" इतिवत्। सादृश्यप्रतियोगित्वं च तदर्थः। सुधाधारा अनुकारो यासामिति वहुव्रीहिर्व्याख्येयः। उक्तविशेषणदानार्थं गिर इति पृथक्प्रयोगः।

परिजन इत्यस्य कोपेऽन्वयः। विषयत्वं सप्तम्यर्थः। प्रकाशो बोधनं तस्य छलाद् व्याजादित्यस्य पूर्वत्रापि हेतुत्वेनान्वयः। यत्तु "प्रकाशस्य तेजोधर्मत्वात् कोपे बाधातीव्रत्वं लभ्यं, दुःसहत्वं व्यङ्ग्यम" इति, तन्न। ज्ञानार्थकत्वेनापि तस्योक्तत्वात्।

केतकं केतकीपुष्पम्। गर्भपदं तस्यातिगौरत्वार्थम्। तद्वद्गौरि। 'उपमानानि सामान्यवचनैः इतिसमासः। यत्तु "तस्माद्गौरि ततोऽप्यधिकतरगौरवर्णशालिनीत्यर्थः" इति। तन्न। तादृशसमासविधायकाभावात्। दयितविषयकस्य कोपस्येति योज्यम्।

अथावसरप्राप्तां प्रौढामुदाहरति—**प्रौढा धीरा यथेति। नो तल्पमिति**। तल्पं शय्यां 'तल्पं शय्याट्टदारेषु' इत्यमरः। **नो भजसे** न सेवसे सुरतसुखोपभोगाय नारोहसीत्यर्थः। **सुधायाः** पीयूषस्य **धाराः** प्रवाहाः **अनुक्रियन्ते** याभिस्ताः सुधाधारानुकारा अमृतवन्मधुरतरा इतियावत्। **गिरः** वाचः **न जल्पसि** न सम्भाषसे। **वा** अथवा **परिजने** समीपस्थे परिचारकवर्गे **कोपस्य** रोषस्य **प्रकाशनं** प्रकटीकरणं तस्य **छलाद् व्याजाद् दृक्पातं** दृष्टिप्रक्षेपं मयीति शेषः। **न कुरुषे, केतकगर्भगौरि** केतकीपुष्पस्य गर्भ इव कुक्षिरिव 'कुक्षिभ्रूणार्भका गर्भाः' इत्यमरः। गृधातोः 'अतिगृभ्यां मन्' इत्यौणादिको मन्। **गौरी** गौरवर्णा गुङ्धातोः 'ऋजेन्द्र—' (उ० २।२८) इत्यादिना रन्नन्तो निपातितः 'षिद्गौरादिभ्यश्च' इति ङीष्। तत्सम्बुद्धौ। **इत्थं** पूर्वोक्तप्रकारैः **दयिते** प्रियतमे मयीतिशेषः। विषयसप्तमी। यद्वा **'दयिते** वल्लभे' सम्बोधनमेतत् प्रियायाः

प्रौढा अधीरा यथा—

प्रतिफलमवलोक्य स्वीयमिन्दोः कलायां
हरशिरसि परस्यावासमाशङ्कमाना।

"यद्वा दयिते तस्मिन् सङ्गोपनमित्यन्वयः। श्लोकस्य नायिकां प्रति सख्युक्तिरूपत्वात्" इति केचित्। अन्ये तु "दयिते मयीत्यर्थः। यद्वा नायिका-संबुद्धिः। अतो नायकोक्तिरेव" इत्याहुः। युक्तं चैतत्। कोपस्य नायकेन हेत्वन्तराज्ज्ञानेऽपि नायिकानिष्ठ-व्यापारान्तरेणानवगमाद्धीरात्वस्य सुस्थत्वात्। पूर्वं कोपस्य परिजनविषयकत्वं मत्वा तस्य सखीस्मितानन्तरं च स्वविषयकत्व-निर्णयवतो नायकस्येयमुक्तिरिति दोषलेशस्याप्यत्राभावात्। तदित्यस्य तर्हीत्यर्थः। सङ्गोपनं कोपविशेष्यकस्वविषयकत्वप्रकारकज्ञानविषया-भावः। एवकारः स्मितान्यस्य तदभावप्रयोजकत्वव्यवच्छेदार्थः। सहचरीत्यत्र "पचादिषु चरड्"इति पाठाट्टिड्ढाणञ् इति ङीप्। "प्रेक्ष्यस्थितां सहचरीं परिरभ्य देहम्" इति कालिदासः।

यत्तु "सख्याः कथनोत्तरमेव ज्ञानं सहचर्यास्त्वकथनेऽपीति भेदः" इति। तन्न। मानाभावात्। "सखीविश्रम्भपात्रं स्यादाली स्नेहस्य भाजनम्" इत्यभियुक्तोक्त्या रहस्यस्य सखीज्ञेयत्वौचित्याच्च। साचीति वदनपरावर्तनपूर्वकमित्यर्थः। एतेन परावृत्ताख्यं शिरः-कर्मोक्तम्। तथा च शार्ङ्गदेवः—

पराङ्मुखीकृतं शीर्षं परावृत्तमुदीरितम्।
तत्कार्यं कोपलज्जादि कृते वक्त्रापसारणे॥

"नायिका कोपगोपनसंरक्षणार्थं साची" इत्यन्ये॥१५॥

**कोपस्य** रोषस्य **सङ्गोपनम्** निगूहनमितियावत् **स्याद् एव**। **चेत्** यदि **ते** तव **सहचरी** निरन्तरसहचारिणी सखी **साचि** वक्रं वदनविवर्तनपूर्वकमितियावत् **स्मितं** मन्द-हास्यं न कुर्वीत॥

अत्रोपमासंसृष्टकाव्यलिङ्गमलङ्कारः तल्पानाश्रयणादेः कोपगोपनबीजत्वात्। शार्दूलविक्रीडितं च वृत्तम्॥१५॥

गिरिशमचलकन्या तर्जयामास कम्प-
प्रचलवलयचञ्चत्कान्तिभाजा करेण ॥१६॥

---

**प्रतिफलमिति**। स्वस्मिन्नन्यभ्रमान्यथानुपपत्त्या प्रतिफलमिति। पुरुषप्रतिविम्बे स्त्रीत्वभ्रमासम्भवात्स्वीयमिति। प्रतिविम्बोत्पत्तियोग्यत्वार्थमिन्दोरिति। कलायाः प्रभातिशयात् तत्संवलनेन विशेषदर्शनविरहाच्छायायां स्वीयत्वज्ञानविरहः सूच्यते।

केचित्तु "अचलसम्वन्धेनोक्तानभिज्ञत्वम्। जन्यत्वे सति स्त्रीत्वस्यैव कन्यापदशक्यतावच्छेदकत्वात्। वाल्यस्य ततोऽनवगमात्।" वस्तुतस्त्वचलोद्भवत्वेन धैर्यवत्त्वे युक्तेऽपि तदभाव इति सूच्यते।

नायकान्तरसम्वन्धे कोपानुत्पत्त्या हरेति। शिरसीत्यङ्गान्तरनिवृत्तिः। तेन स्वतोऽप्युपरिदेशवर्तित्वे कोपातिशयव्यञ्जनम्। तत्संयोगमात्रनिषेधाय सप्तमीप्रयोगः। आधाराधेयभावप्रतीत्या तस्यां प्रेमातिशयवुद्धिद्वारा कोपाधिक्यव्यञ्जनार्थम्। वासपदं वहुकालपर्यन्तत्वलाभार्थम्। शङ्कमानेति वर्तमानार्थकशानच्प्रत्ययेन भ्रमस्योत्तरमविच्छेदः सूच्यते। आङा भ्रमस्याप्रामाण्यज्ञानानास्कन्दितत्वं सूच्यते।

यद्यपि "गिरौ शेतेर्ड इत्यत्र छन्दसीत्युक्तत्वाद्भाषायां गिरिशशव्दोऽसाधुरित्याहुः" इति कैयटेनोक्तम्, तथापि गिरिं श्यति तनूकरोतीति कप्रत्ययान्तं भाषायामपि। अतएव कैयटेनाहुरित्युक्तम्। "गिरीशो गिरिशो मृडः" इत्यमरः। तदुक्तं वाक्यपदीये—

प्रौढामधीरामुदाहरति-**प्रतिफलमिति**। **अचलस्य** पर्वतस्य **कन्या** पार्वतीत्यर्थः। **इन्दोः** चन्द्रमसः **कलायां** षोडशे भागे 'कलातु षोडशे भागे' इत्यमरः। **स्वीयं** स्वस्यैवेतियावत् **प्रतिफलं** प्रतिविम्वं **अवलोक्य** दृष्ट्वा **हरशिरसि** शिवमूर्ध्नि **परस्या** अन्यनायिकायाः **वासं** स्थितिम् **आशङ्कमाना** काप्यन्यात्र निवसतीति वितर्कयन्तीत्यर्थः। **कम्पेन** रोषजन्येन वेपथुना **प्रचलन्ति** चञ्चलानि यानि **वलयानि** कङ्कणानि तेषां **चञ्चन्त्यः** प्रसरन्त्यः याः **कान्तयः तद्भाजा** एवंभूतेनेत्यर्थः, **करेण** हस्तेन **गिरिशं** शिवं **तर्जयामास** अभर्त्सयत्। तर्जनेनास्या अधीरात्वं व्यक्तम्। भ्रान्तिरत्रालङ्कारः, मालिनी च वृत्तम्॥१६॥

**प्रौढा धीराधीरा यथा—**

**तल्पोपान्तमुपेयुषि प्रियतमे वक्रीकृतग्रीवया**
**काकुव्याकुलवाचि साचि हसितस्फूर्जत्कपोलश्रिया।**

वैरवाशिष्टगिरिशास्तथैवागारिकादयः।
कैश्चित्कथञ्चिदाख्याता निमित्तावधि सङ्करैः॥ इति।

यद्यपि चुरादिषु तर्जेत्यस्य आगर्वीयेषु पाठादात्मनेपदेन भाव्यं तथापि तर्जेति भौवादिकस्य हेतुमत्स्वीदं बोध्यम्। एतेन "तर्जयन्निव केतुभिः" इति व्याख्यातम्।

कम्पेन कोपजन्येन पाणिनिष्ठेन प्रवलातिप्रकर्षेण तरलानि यानि वलयानि तेषां चञ्चन्त्य आश्रयकम्पात्प्रसर्पन्त्यो याः कान्तयः। एतेन वलयानां विजातीयरत्नघटितत्वं व्यज्यते। "चञ्चद्वृहतोरुपसंख्यानम्" इति वार्तिकव्याख्यायाम् "अचञ्चन्नपि यश्चञ्चन्निव लक्ष्यते" इति कैयटोक्त्या चञ्चतेश्चलनार्थत्वम्। वल्गदितिपाठान्तरेऽपि स एवार्थः। "व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावली" इत्यादि दर्शनात्। तथा च भरतः—

वलयाववर्तनेन च सशिथिलमुत्क्षेपणेन रशनायाः।
मन्युस्त्वभिनेतव्यः सशङ्कितं वाष्पमोक्षैश्च॥

तदतिशयः प्रशब्देनाक्षिप्यते। वलयानामन्योन्याभिघातजझणत्कारवत्त्वं व्यङ्ग्यम्। कान्तिमत्तया हस्तस्य क्रोधदीप्तत्वध्वनिः॥१६॥

**तल्पेति**। उपान्तपदेन दूरदेशस्य तल्पस्य च वारणम्। दूरान्नायके दृष्टेऽपि देशान्तरगमनस्यापि सम्भावितत्वात्। तत्समीपागतस्य च नायिकाया आचारस्य ज्ञानेन सहसा तल्पारोहणस्य शास्त्रविरुद्धत्वात्। तथा च किञ्चित्समीपमागतोऽपि सभयं पुनरत्यन्तसमीपमागत इति द्वितीयेनोपशब्देन द्योत्यते।

प्रौढामेव धीराधीरामुदाहरति—**तल्पोपान्तमिति। प्रियतमे** नायके **तल्पस्य** शय्यायाः पर्यङ्कस्येतियावत्। **उपान्तं** समीपप्रदेशम् **उपेयुषि** प्राप्ते अवक्रा वक्रा सम्पद्यमाना कृता इति वक्रीकृता, एवंभूता ग्रीवा यस्याः सा, तया **वक्रीकृतग्रीवया** तिर्यग्वलितकन्धरया, तस्मिन्नेव **प्रियतमे, काकुना** ध्वनिविकारेण **व्याकुला** भीतेव

**हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालित-**
**प्रौष्ठीपृष्ठमयूखमांसलरुचो विस्फारिता दृष्टयः ॥१७॥**

---

न च क्वसुप्रत्ययस्य लिङादेशत्वात्समीपगमनानुकूलचरमकृति-ध्वंसकालीनत्वमेव वक्रीकरणेऽत्र भासते न तु वक्रीकरणागमनयोः समकालत्वमिति वाच्यम्; तदुपागमनध्वसंकालीनत्वस्य वक्रीकरणेऽनुपपत्त्या बाधात्। अतीतं यदुपागमनं तत्कालीनत्वस्यैवात्र बोधात्। आगमनसमय एव तत्कारणस्यात्र वर्ण्यत्वात्। दुग्धास्वागत इत्यादौ तु दोहध्वंसकालीनत्वस्यानुभवात्तथाबोधोपपादनमिति वैषम्यम्। वक्रीकृतेति च्विप्रत्ययेन पूर्वकालावच्छिन्नविशेषणतया वक्रत्वाभावस्य लाभात्तन्मार्गावलोकनं तेनैवौत्सुक्यं व्यज्यते। ततो मानज्ञाने सति तत्प्रसादनाय काकुवाक्प्रयोगः। एतेन नायकस्य वैदग्ध्यसूचनम्। तथा च भरतः—

योऽपराद्धस्तु सहसा नारीं सेवितुमिच्छति।
अप्रसादनबुद्धिश्च निष्ठुरः सोऽभिधीयते॥
न दुर्लभा नृपाणां तु स्त्र्यर्थमात्रा कृता गुणाः।
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत्॥ इति।

"काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः" इत्यमरः। "हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता" इति भरतः। व्याकुलत्वं तत्प्रधानत्वं वाचो बोध्यम्। साचिपदेन पूर्वोक्ततिर्यगवस्थाया अपरित्यागाद्धासस्य क्रोधमूलकत्वसूचनम्। स्फूर्जदिति गण्डयोः सम्यग्विकाससूचनम्। तथा च भरतः—

**वाक्** वाणी यस्य तस्मिन्, एवंभूते सति, **साचि** तिर्यक् यथास्यात्तथा **यद्धसितं** तेन **स्फूर्जन्ती** वर्धमाना **कपोलयोः** गण्डयोः **श्रीः** शोभा यस्यास्तया। **पुनः** तदनन्तरमित्यर्थः। **हस्ते** नायिकाया इति शेषः। **न्यस्त** आरोपितः **करः** स्वकीयो येन तस्मिन् **प्रियतमे** एवमवस्थायां स्थिते सति तु **मृगदृशा** हरिणलोचनया **लाक्षारसेन** जतुद्रवेण **क्षालितं** 'स्वच्छीकृतं यत् **प्रोष्ठीपृष्ठम् प्रोष्ठ्याः** शफर्याः क्षुद्रमत्स्यस्येतियावत्, प्रकृष्टः ओष्ठो यस्याः 'ओत्वोष्ठयोः' इति वार्तिकेन पररूपं 'नासिकोदरोष्ठः'-इतिङीप्। "प्रोष्ठी तु शफरी द्वयोः" इत्यमरः। **पृष्ठं** देहपश्चाद्भागः तस्य ये **मयखाः** अंशवः

उत्फुल्लानननेत्रं तु गण्डैर्विकसितैस्तथा।
किञ्चिल्लक्षितदन्तं च हसितं तद्विधीयते॥

तत उक्तरीत्या कोपतादवस्थ्यज्ञानेऽप्यौत्सुक्यवशाद्धासे प्रसाद-जन्यत्वारोपेण रसान्तरवशात्कोपत्यागः स्यादित्यभिप्रायेण हस्त-न्यस्तकरे इतियोज्यम्। तस्यानपाकरणे पुनरालिङ्गनं विधेयं न तु प्रागेव। कोपानपगमे तस्य तदतिशयहेतुत्वादितिभावः। पुनः शब्दोऽनुनयवाक्यापेक्षया यथोक्तहस्तन्यासस्य कोपाविष्करणहेतु-त्वरूपव्यतिरेकव्यञ्जनार्थः। लाक्षारसेन यावकद्रवेण, काठिन्ये तद्रागस्य द्रव्यान्तरनिष्ठत्वेन प्रतीत्यनुपपत्तेः। अतएव क्षालितं संयोजितमिति यावत्। "प्रोष्ठी तु शफरी द्वयोः" इत्यमरः। तस्याः पृष्ठं तद्भागः तस्य मयूखाः किरणाः तद्वन्मांसला अधिका रुक् यासां ताः। प्रोष्ठीपृष्ठे दीप्तिविशेषस्य प्रत्यक्षसिद्धत्वात्। दृष्टौ कोपव्यञ्जकारुण्यलाभार्थं लाक्षेत्यादि। केचित्तु "तत्पृष्ठस्य स्वभावा-दारुण्येऽपि लाक्षायोगाद्यथा तदुत्कर्षस्तथा चक्षुषः स्वभावाद्रक्त-त्वेऽपि कोपादिति व्यङ्ग्यम्। अथवा श्वेतेऽलक्तकदानेनेव दृष्टौ कोपकृतारुण्यस्य व्यक्तत्वम्" इत्याहुः। केचित्तु 'धीरा धीराधीरा अधीरा चेति विभागः। पूर्वस्योत्तरतया यथाक्रममपकर्षः। मध्यापूर्वो-क्तक्रमेण वक्रोक्त्या साश्रुवक्रोक्त्या परुषोक्त्या च वदति। प्रगल्भा-क्रमेण कोपगुप्तिरतौदासीन्यवती कोपमात्रप्रत्यायकवक्रोक्तिमती तर्जनादिकारिणी" इत्याहुः। इदं च परिवर्त्यक्षौमपरिधानमात्रमिति प्रतिभाति॥१७॥

"माङ ऊखो मय् च" इत्यौणादिकः। "किरणोऽस्रमयूखांशु—" इत्यमरः। तद्वत् **मांसलाः** बलवत्यः, सिध्मादित्वादिलच्। "बलवान् मांसलोंऽसलः" इत्यमरः। अतिप्रवृद्धा इत्यर्थः। **रुचः** दीप्तयः यासामेवं भूताः **दृष्टयः** वीक्षणानि **विस्फारिताः** रोपेण प्रसारिता इत्यर्थः।

अयं भावः-यदा सागः प्रेयान् शय्योपान्तमागतस्तदा तया मुखं विवृत्य स्थितं, ज्ञातापराधेयामेति मत्वा भयमिश्रकम्पेन गद्गदं ब्रुवति सति तया तिर्यग्भूय हसितं, यदा तु स्वकरेण तत्करं परामृष्टवान् तदा रोपरक्तलोचनाभ्यां स दृष्टः।

एते च षट् धीरादिभेदा ज्येष्ठाकनिष्ठाभेदेन द्विधा, धीरा ज्येष्ठा कनिष्ठा च। अधीरा ज्येष्ठा कनिष्ठा च। धीराधीरा ज्येष्ठा कनिष्ठा च।

तत्र परिणीतत्वे सति भर्तुरधिकस्नेहा ज्येष्ठा। तथा सति भर्तुर्न्यूनस्नेहा कनिष्ठा।

अधिकस्नेहासु न्यूनस्नेहासु सामान्यवनितासु परकीयासु च नातिव्याप्तिः। परिणीतपदेन तद्व्यावर्तनात्।

---

भेदान्तरमाह—एते चेति। मध्याप्रगल्भयोस्त्रिभेदतया मिलितत्वात्षड्विधत्वे पुनर्ज्येष्ठत्वकनिष्ठत्वाभ्यां द्वादशभेदा इत्यर्थः। कालकृतज्येष्ठत्वकनिष्ठत्वनिरासाय परिणीतेति। एतेन परकीयायामतिव्याप्तिवारणम्। भर्तुरिति षष्ठी समवेतत्वार्था। अधिकः स्नेहो यस्यामिति बहुव्रीहचन्तर्गतसप्तम्या विषयत्वमर्थः। आधिक्यप्रतियोग्यपेक्षायां च सपन्त्यन्तरस्नेह एव तथात्वेनाक्षिप्तोऽन्तर्भवति। सपत्नीत्वं च स्वभिन्नत्वे सति स्वभर्तृनिरूपितभार्यात्ववत्त्वम्। स्वस्मिन्स्वसपत्नीत्वव्यवहाराभावात् सत्यन्तम्। तथा च परिणीतत्वे सति इत्येतदप्येतदर्थलाभायैव न तु तस्य पृथग्लक्षणे निवेशः। व्यर्थत्वात्। तेन स्वप्रतियोगिकोत्कर्षवत्त्वमेकनिरूपितभार्यात्वववद्विषयकत्वं चेत्युभयसम्बन्धेन स्नेहवान् यः स्नेहस्तद्विषयत्वमेव

लोचनाहणिनया वस्तुना प्रियापराधप्रकाशनरूपवस्तुध्वनिः। लुप्तोपमानुप्राणितः काव्यलिङ्गालङ्कारः, शार्दूलविक्रीडितं वृत्तम्॥१७॥

पूर्वोक्तभेदानां पुनर्द्वैविध्यं प्रतिपादयति—**एते चेति**। एतेऽनुपदोक्ताः **धीरादिषड्भेदाः** मध्याप्रगल्भयोर्द्वयोः धीरा, अधीरा, धीराधीरेतित्रिविधत्वात्षट्प्रकाराः **ज्येष्ठा कनिष्ठा चेति भेदेन द्विविधाः** पुनर्द्विप्रकारका इतियावत्। तानेव परिगणयति—**धीरेत्यादि**। स्पष्टम्। ते च ज्येष्ठात्वकनिष्ठात्वे न वयःकालादिकृते, इति लक्षणं कुरुते-**तत्रेत्यादि**। **तत्र परिणीतत्वे सति** पाणिग्रहणसंस्कारवत्त्वे सतीतियावत्। **भर्तुः** पत्युः **अधिकस्नेहा** अन्यापेक्षया अधिकः **स्नेहो** यस्यां सा **ज्येष्ठा**, **तथासति** परिणीतत्वे सतीत्यर्थः **भर्तुः** पत्युः **न्यूनं** स्वल्पं **स्नेहो** यस्यां सा **कनिष्ठा**।

**धीरा ज्येष्ठा कनिष्ठा च यथा——**

**एकस्मिन् शयने सरोरुहदृशोर्विज्ञाय निद्रां तयो-**
**रेकां पल्लवितावगुण्ठनपटामुत्कन्धरो दृष्टवान् ।**

ज्येष्ठात्वमिति लक्षणं पर्यवसन्नम् । तुल्यस्नेहयोरुभयोरतिव्याप्ति-वारणाय स्वप्रतियोगिकोत्कर्षवत्त्वनिवेशः। परकीयाद्वये तद्वारणाय द्वितीयसम्बन्धनिवेशः। तच्च स्वविषयनिरूपितंभर्तृत्ववन्निरूपित-भार्यात्ववद्व्यक्त्यन्तरविषयकत्वम् । पूर्वकालीनस्नेहापेक्षयोत्तरकालेऽधिकस्नेहविषयभूतायामेकस्यामेवातिव्याप्तिवारणाय व्यक्त्य-न्तरेत्युक्तम् । तच्च तद्व्यक्तिनिष्ठासाधारणधर्मावच्छिन्नप्रति-योगिताकभेदवत्त्वम् । तेनावस्थाभेदेन तद्व्यक्त्योः पूर्वापरकाले भेदसत्त्वेऽपि न दोषः। एवमुत्कर्षपदस्थानेऽपकर्षपदप्रक्षेपेण कनिष्ठा-लक्षणमप्यूह्यम् । अधिकस्नेहास्विति । ज्येष्ठालक्षणस्य नातिव्याप्ति-रित्यर्थः न्यूनस्नेहास्विति। कनिष्ठालक्षणस्य न सेत्यर्थः। सामान्यवनितापदं परकीयाया अप्युपलक्षणम्। परिणीतपदेनेति । यथाश्रुताभिप्रायम् । उक्तरीत्या तु तन्निरूपितभार्यात्ववद्विषयकत्वस्य सम्बन्धकोटौ निवेशादुक्तप्रकारेण नातिव्याप्तिरित्यर्थः।

**एकस्मिन्निति** । तयोरिति तदुभयभिन्ननायिकासम्भोगनिबन्धन-कोपवत्त्वलाभार्थम् । अतएवैकविषयकासूयावत्त्वेन पक्षपातादेकस्मिन् शयने इत्युक्तम् । सरोरुहदृशोरिति पुरुषान्तरानासङ्गात्पातिव्रत्य-

ननु स्नेहस्याधिक्यं न्यूनत्वं वा परकीयासामान्यवनितयोरपि सम्भवे लक्षणोऽयं लक्ष्याद्बहिरपि प्रवर्तते अतोऽतिव्याप्तिरिति चेत्। तदाह——**अधिकस्नेहास्वित्यादि। अधिकस्नेहासु** भर्तुः सकाशाल्लब्धाधिकप्रेमासु, **न्यूनस्नेहासु** स्वल्पप्रेमासु, अत्र स्नेहस्याधिकत्वं न्यूनत्वं वा नायकस्यैवापेक्ष्यते न तु नायिकायाः। **सामान्य-वनितासु** वाराङ्गनादिष्वित्यर्थः **परकीयासु** परोढासु कन्यासु वा **अतिव्याप्तिः** लक्षणस्य लक्ष्याधिकस्थले प्रवर्तनं न। कथमिति चेत्तदाह——**परिणीतेति। परि-णीतपदेन** लक्षणे परिणीतपदस्य सत्त्वेन **तद्व्यावर्तनात्** तस्य दोषस्याति-व्याप्तिरूपस्य व्यावर्तनात् निवृत्तेः। न ताः नायकेन परिणीता भवन्तीति यावत्। यन्निरूपितं परिणयवत्त्वं तन्निरूपितमेवाधिकन्यूनस्नेहवत्त्वम् नेतरदिति भावः।।

**अन्यस्याः सविधं समेत्य निभृतव्यालोलहस्ताङ्गुलि-**
**व्यापारैर्वसनाञ्चलं चपलयन् स्वापच्युतिं क्लृप्तवान् ।।१८।।**

---

मन्योन्यसन्निधावुभयभयान्नायककर्तृकानुनयानवकाशीकरणम्, तेन रतौदासीन्यं च व्यङ्ग्यम् । विज्ञायेत्यत्र विशब्देन ज्ञानस्य प्रमात्व-सूचनम् । निद्रास्वरूपे भरतः--

आलस्याद्दौर्बल्यात्क्लमाच्छ्रमाच्चिन्तनात्स्वभावाच्च ।
रात्रौ जागरणादपि निद्रा पुरुषस्य सम्भवति ।।
तां मुखगौरवगात्रप्रविलोलननयनमीलनजडत्वैः ।
जृम्भणगात्रविमर्दैरनुभावैरभिनयेद्विबुधः ।।

पल्लवितपदं सर्वाङ्गसंञ्छादनलाभार्थम् । अवगुण्ठनमावरणम् । तस्य पट इति अश्वघासादिवत् षष्ठीसमासः, न तु तादर्थ्यच्चतुर्थ्याः । तस्य प्रकृतिविकारमात्रविषयत्वात्, यूपदारुरित्यादिवत् । उत्कन्धरत्व-मस्या वक्ष्यमाणनायिकापरपार्श्ववर्त्तित्वात्तस्याः सम्यग्दर्शनार्थम् । "सदेशाभ्याशसविधसमर्यादसवेशवत्" इत्यमरः । संशब्द आगमने भूमिपदाभिघातविशेषाभावसूचनार्थः । अन्यथा तच्छब्देन नायिका-न्तरस्यापि प्रबोधप्रसङ्गात् । निभृतत्वमुत्तरीयतिरोहितत्वात् । व्यालोलत्वं नायककरपरामर्शात् । अङ्गुलिपदं हस्तलोलतायां कङ्कणझणत्कारेणान्यस्याः प्रबोधो माभूदित्येतदर्थम् । "व्यापारैरिति वहुवचनमेकेन नेत्रोन्मीलनाभावात्स्वापशङ्कासत्त्वात्पुनर्व्यापार-

धीरा ज्येष्ठाकनिष्ठे दर्शयत्युदाहरणेन—**एकस्मिन्निति** । नायकस्य साग-स्तया समानरूपेण सुरतौदासीन्यं प्रकटयन्त्योः **सरोरुहदृशोः** सरोरुहे कमले इव दृशौ नयने ययोः **तयोः** नायिकयोः **एकस्मिन्** एव नतु पृथक् पृथगितिभावः । **शयने** तल्पे **निद्रां** स्वापम् । निपूर्वाद् द्राकुत्सायां गतौ धातोः आतश्चोपसर्गे इत्यङ । यद्वा 'निन्दतेर्नलोपश्च' इत्यौणादिको रग्, निन्देर्नलोपश्च, "स्यान्निद्रा शयनं स्वापः" इत्यमरः । **विज्ञाय** अवधार्य, इमे सुप्ते इति निश्चित्येत्यर्थः । **उत्कन्धरः** उद्गता उत्थिता कन्धरा ग्रीवा यस्य एवं भूतः सन् **एकां** तयोरन्यतरां **पल्लवितावगुण्ठनपटां** पल्लवितः विस्तारितः "पल्लवः किसले लवे, विटपे विस्तरे"--इत्यमरः । अवगुण्ठन-पटः आवरकवासो यया ताम् । अवगुण्ठनपटेनैव देहमाच्छाद्य सुप्तामिति यावत् ।

**अधीरा ज्येष्ठा कनिष्ठा च यथा--**

**अन्तःकोपकषायिते प्रियतमे, पश्यन् घने कानने**
**पुष्पस्यावचयाय नम्रवदनामेकां समायोजयत् ।**

---

लाभार्थम्, तेन लज्जावत्त्वान्मध्यात्वं स्वापच्छलेन कोपसङ्गोपनाद्धीरात्वं च व्यङ्ग्यम्" इति केचित् । अन्ये तु "हस्ताङ्गुलयो नायकस्यैव । तासां निभृतत्वमन्यनायिकाप्रबोधप्रसञ्जकव्यापाररराहित्यम् । व्यालोलत्वं बोध्यनायिकासङ्केतदानार्थम् । तत्स्पर्शेन प्रवोधोत्पत्तेः" । सर्वाङ्गकम्पजनकत्वव्यावृत्त्यर्थम् । आङिति । ईषदर्थे प्रवोधाशक्तत्ववारणाय । वीति । विशेषस्त्वन्यत्र बोधाजनकत्वे सति तत्प्रबोधप्रयोजकत्वमिति व्याख्येयम् । अञ्चलं प्रान्तं चपलयन् शिथिलयन् । सर्ववसनाकर्षणे ससम्भ्रमोत्थाने कङ्कणशब्दादिनान्यस्या अपि बोधापत्तेः । "विबोधश्चेतनाप्राप्तिर्जृम्भाक्षिपरिमार्गकृद्" इति विद्यानाथः । अत्र लक्षणसमन्वयः स्पष्टः ॥१८॥

**अन्तःकोपेति** । प्रियतम इत्यत्र तमबर्थो न विवक्षितः । उभयोस्तथात्वे ज्येष्ठाकनिष्ठोभयोदाहरणत्वानुपपत्तेः । यद्वा एकस्या अत्रोपात्तनायिकान्तरापेक्षया प्रेमातिशयो व्याख्येयः । काननविशेषणं वा सप्तम्यन्तं तत् । "विशेष्यं तु प्रिय इत्येतदध्याहार्यम्" इत्यपि केचित् । काननेऽन्तर्वनमध्ये इति केषांचिद्व्याख्यानमयुक्तम्, अन्तरित्यस्याधिकरणशक्तिप्रधानत्वात्, वनस्येति षष्ठीप्रसङ्गात्, व्यवहितत्वाच्च । तस्मात्कोपविशेषणत्वमेव युक्तम् ।

**दृष्टवान्** अवालोकयत्, अतो विश्रब्धमिव **अन्यस्याः** इतरस्याः **सविधं** समीपं **समेत्य** आगत्य **निभृतं** तूष्णीं यथास्यात्तथा **व्यालोलाश्चञ्चलाः** याः **हस्ताङ्गुलयः** करशाखाः तासां **व्यापारैः** क्रियाभिः **वसनाञ्चलं** वस्त्रप्रान्तं शाटिकाकोणमितियावत् । **चपलयन्** परिचालयन् **स्वापच्युतिं** निद्राभङ्गं **क्लृप्तवान्** अकरोत् । निभृतं रन्तुमुदबोधयदित्यर्थः । अत्रावगुण्ठनपटमावृत्य सुप्तां प्रति नायकस्य प्रेम्णोऽन्नतया तस्याः कनिष्ठात्वम्, तत्सविधेऽपि निभृतं रन्तुमुद्बोधनेनान्यां प्रति प्रेम्णोऽधिकतया तस्या ज्येष्ठात्वमिति स्पष्टम् । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥१८॥

**अर्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां**
**स्मेरार्द्राधरपल्लवां नववधूमन्यां समालिङ्गति ॥१९॥**

यत्तु "तथासत्यधीरात्वानुपपत्तिरिति। तन्न। कषायितपदेन वहुकोपकार्यवत्त्वलाभात्। परुषवचनादिना तयोः कोपं प्रत्यक्षमिव पश्यन्" इति केचित्। कोपकार्यविशिष्टतद्विशेष्यकचाक्षुषमेवात्र ग्राह्यमिति तत्त्वम्।

पुष्पस्येत्येकत्वं तदवचयनस्य तात्पर्यविषयत्वाभावात्। अवचयायेति 'तुमर्थाच्च भाववचनादि'ति चतुर्थी। पुष्पमवचेतुं नायकं प्रति कोपाद्वा स्वत एव नम्रवदनामेकां च न मध्ये भूयान्पुष्पसमुदायस्तत्र पुष्पग्रहणं क्रियतामिति नियोजितवानित्यन्वयः। अतो नम्रवदनामित्यस्य न वैयर्थ्यम्। स्वत एव पुष्पग्रहणे प्रसक्तायाः पुष्पविशेषोपदर्शनस्य तया वञ्चनोपायत्वेनानववोधात्।

"अर्द्धोन्मीलिते अर्द्धनिमीलिते ये लोचने तयोर्ये अञ्चलचमत्काराः प्रतिविभ्रमास्तैरभिराममाननं यस्याः।

स्तोकोन्मीलिततारारया मनाक् कुञ्चत्पुटोभया।
किञ्चिदुत्फल्लपक्ष्माग्रा दृक् सार्द्धमुकुला सुखे॥"

इति केचित्। वस्तुतस्तु, अर्द्धोन्मीलितेत्यञ्चलविशेषणं तच्च तारकापुटरूपविषयद्वयम्। दृष्टिः सैवेतियुक्तम्। तथा च शार्ङ्गदेवः---

अर्द्धव्याकोशिते किञ्चिद्भ्रमन्त्यौ तारकापुटे।
यत्रार्द्धमीलितौ सार्धमुकुलार्थे सुखप्रदे॥

अधीरे ज्येष्ठाकनिष्ठे उदाहरति---**अन्तरिति**। **अन्तः** चेतसि **कोपकषायिते** कोपेन रोषेण नायकापराधजन्येनेतिभावः। कषायिते रक्तीकृते कलुषीकृते इतियावत्। तत्करोतीति णिजन्तात्कषायपदात् 'निष्ठायां सेटि' इति णिलोपः। **प्रियतमे** प्रेयस्यौ नात्र तमवतिशयार्थः सामान्यतया प्रियतमाशब्दस्य वध्वर्थे प्रायः प्रयुज्यमानत्वात्! **पश्यन्** अवलोकयन्, **शठो** नायकस्तयोरेकामन्यतरां **नम्रवदनामधोमुखीं घने** निविडे **कानने** वने **पुष्पस्य** कुसुमस्य **अवचयाय** सङ्ग्रहणाय अवचेतुमित्यर्थः। **समायोजयत्** नियोजितवान्, प्रैरयदितिभावः। **अर्धोन्मीलितस्य** अर्द्धमुकुलितस्य **लोचनाञ्चलस्य** नेत्रकोणस्य ये **चमत्काराः**

**धीराधीरा ज्येष्ठा कनिष्ठा च यथा—**

**धैर्याधैर्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये**
**रत्नद्वन्द्वमनन्तकान्तिरुचिरं मुष्टिद्वये न्यस्तवान्।**

---

स्मेरं स्मितवत् आर्द्रं चेति कर्मधारयम्। आर्द्रेति स्मितस्य सुधामयत्वं व्यङ्ग्यम्। द्रवद्रव्यसम्बन्धेनैवार्द्रतोत्पत्तेः। तादृशमधरपल्लवं यस्या इति बहुव्रीहिः।

यत्तु "स्मेरं स्मितं तेनार्द्रमिति 'तृतीया तत्कृतार्थेन गुणवचनेन' इति तृतीया समासः" इति। तन्न। स्मितमात्रपरत्वे लक्षणापत्तेः। अवच्छेदकत्वेनोपस्थितस्यान्यत्रान्वयानुपपत्तेः। अतएव नित्यो घट इत्यत्र विशेषणत्वेन घटत्वोपस्थितावपि स्वातन्त्र्येणोपस्थित्यर्थं लक्षणेति सिद्धान्तः।

केचित्तु "स्मेरार्द्धेति पाठः। अधरस्यार्धमर्धाधरः स एव पल्लवः, स्मेर अर्धाधरपल्लवो यस्याः, यद्वा स्मेरम् अर्धं यस्य, स्मेरार्धोऽधरपल्लवो यस्याः" इति व्याचख्युः। स्मितं च विपक्षप्रतारणसन्तोषात्। आलिङ्गने सम्यक्त्वं च तदाशङ्काविरहविशिष्टत्वम्, तेन दृढतरत्वादि व्यङ्ग्यम्॥१९॥

धैर्येति। यद्यप्यजाद्यदन्तमिति अधैर्यशब्दस्य पूर्वनिपातापत्तिः, अल्पाच्तरमित्यस्मात्तस्य परत्वात्, तथापि समुद्राभ्रादित्यादिनिर्देशेन तदनित्यत्वज्ञापनान्नानुपपत्तिः, तयोः परिग्रहोऽङ्गीकारः। तत्र ग्रहिलयोराग्रहशीलयोः। पिच्छादित्वादिलच्। वस्तुतस्तु धैर्याधैर्यपरिग्रहौ परिगृहीतौ ययोस्ते धैर्याधैर्यपरिग्रहे। तादृश्यौ च ते ग्रहिले

विभ्रमाः **तैरभिरामं** मनोहरम् **आननं** मुखं यस्यास्ताम्, **स्मेरार्द्राधरपल्लवाम्** स्मेरं स्मितवत् आर्द्रं क्लिन्नं स्मितस्य सुधामयत्वमनेन व्यज्यते, **अन्याम्** अपरां **नववधूं** नवोढां जायां "वधूर्जाया—" इत्यमरः। **समालिङ्गति** सम्यक्परिष्वजति। अत्र नववधूपदं न रोचते, नवोढायां मध्यात्वप्रगल्भात्वयो रसम्भवात्। अन्या (कनिष्ठा)-पेक्षया तस्या नवत्वं वक्तुं शक्यते। काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥१९॥

प्राप्तावसरे धीराधीरे ज्येष्ठाकनिष्ठे निर्दिशति—**धैर्याधैर्येति।** धैर्यञ्चाधैर्यञ्च-धैर्याधैर्ये तयोः परिग्रहः ययोस्ते धैर्याधैर्यपरिग्रहे, ते च ते ग्रहिले च तयोः

एकस्याः कलयन् करे प्रथमतो रत्नं परस्याः प्रियो
हस्ताहस्तिमिषात् स्पृशन्कुचतटीमानन्दमाविन्दति ।२०।

---

मानवत्यौ चेति कर्मधारयः। "पुंवत्कर्मधारयः" इति पुंवद्भावः। प्रीतये मानभङ्गायेत्यर्थः। तदुक्तं साहित्यदर्पणे--

सामभेदोऽथ दानं च नत्युपेक्षे रसान्तरम्।
तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात्॥

एतेन साममात्रेण निवर्तयितुमशक्यत्वात्कोपस्य दृढत्वं तेन च प्रगल्भत्वं व्यज्यते। उभाभ्यामेकस्य दानानौचित्याद्रत्नद्वन्द्वमित्युक्तम्। प्रीतिमात्रोद्देशेन स्वीयायै दानानर्हत्वात्। अनन्तकान्तिरुचिरमिति। तथाचापूर्वमिदं रत्नद्वयमित्यद्भुतवस्तुप्रदर्शनव्याजेन दत्तमिति भावः।

काले काले प्रदातव्यं धनं विभवमात्रया।
निमित्तान्तरकृतं यत्तु दानं नाम च तन्मतम्॥

इति भरतोक्तेः। एकस्मिन्नेव मुष्टावुभयोर्निधाने युगपदेव द्वाभ्यां ग्रहणप्रसङ्गात् वक्ष्यमाणो विशेषो न सिद्ध्येत्। अत उक्तं मुष्टिद्वये इति।

तलमध्यस्थितैर्लग्नैरङ्गुल्यग्रैरगोपितैः।
निष्पीड्य मध्यमां तिष्ठत्यङ्गुष्ठो मुष्टिरिष्यते।
कुन्तनिस्त्रिंशदण्डादिग्रहे विविधयोधने।
धावने प्राङ्मुखाङ्गुष्ठो मल्लयुद्धे करद्वयम्॥

पत्युः सागस्तया धीरतामधीरतां च स्वीकुर्वन्त्योरतएव **ग्रहिलयोः** मानवत्योः **एणीदृशोः** एणी मृगी तद्वच्चपले दृशौ ययोस्तयोः **प्रीतये** प्रसादनाय **अनन्तकान्तिरुचिरं** अपरिमितदीप्तिभिः कमनीयं **रत्नद्वन्द्वं** मणियुगलमिति यावत्। **मुष्टिद्वये पृथक् पृथक्** स्वकरयोर्मुष्टियुगले **न्यस्तवान्** न्यधापयन् **प्रियः** नायक इतियावत्। **प्रथमतः** पूर्वं **एकस्याः** प्रेम्णि कनिष्ठायाः **करे** हस्ते **रत्नं** मणिं **कलयन्** स्थापयन् **परस्याः** प्रेयस्याः **कुचतटीं** स्तनाग्रदेशं **हस्ताहस्तिमिषात्** हस्तयोर्हस्तयोर्गृहीत्वेयं क्रिया क्रीडारूपा प्रवृत्तेत्येतावदर्थे "तत्र तेनेदमिति सरूपे" इति युद्धप्रवृत्त्यभावेऽपि क्वाचित्कः समासः, सूत्रे इति शब्दस्य बहुलार्थकत्वात्। अतएव "कर्णाकर्णिप्रथितमयशो

**अप्रकटपरपुरुषानुरागा परकीया। सा च द्विविधा-परोढा कन्यका च। कन्यायाः पित्राद्यधीनतया परकीयात्वम्। अस्या गुप्तैव सर्वा चेष्टा।**

---

इति शार्ङ्गदेवः। प्रथमतो ज्येष्ठायै रत्नप्रदानात् पूर्वं तेन तद्विषयकादरविशेषद्योतनम्। वक्ष्यमाणान्यदीयकुचस्पर्शेन तस्याः स्वापकर्षशङ्का माभूदित्येतदर्थम्। हस्ते हस्ते गृहीत्वेदं युद्धं प्रवृत्तमिति हस्ताहस्ति। युद्धत्वं च रत्नग्रहणतत्प्रतिबन्धोभयरूपपरस्पर-विरुद्धव्यापारकरणात्। तत्र तेनेदमिति सरूप इति समासः। युद्धपदस्य विवादमात्रपरत्वात्। वधानुकूलव्यापारपर्यन्तस्याविवक्षितत्वात् अत एव—"पुमान् सङ्ग्रहणे ग्राह्यः केशाकेशि परस्त्रियाः"। इति याज्ञवल्क्यवाक्ये परस्परकेशग्रहणपूर्विका क्रीडा केशाकेशिः। तत्र तेनदेमिति सरूपे इति बहुव्रीहौ कृते "इच्कर्मव्यतिहारे" इति समासान्त प्रत्यय इति विज्ञानेश्वरेण व्याख्यातमिति दिक्॥२०॥

॥इति स्वीयानिरूपणम्॥

क्रमप्राप्तां परकीयां लक्षयति—**अप्रकटेति**। अत्रानुरक्तमात्रस्य लक्षणत्वे स्वीयादावतिव्याप्तिरत उक्तं परेति। तच्च स्वभर्तृप्रतियोगिकभेदवत्त्वम्। अतो न दोषः। भेदप्रतियोग्यप्रसिद्ध्या वेश्यायामपि नातिव्याप्तिः। एतेनाप्रकटपदात्तद्वारणमिति निरस्तम्। पुरुषपदं त्वनुरागपदस्य स्नेहमात्रपरत्वे स्वभर्तृभिन्नसख्यादिविषयकस्नेहवत्यां स्वीयायामतिव्याप्तिवारणार्थम्। वस्तुतो न देयमेव।

---

बन्धुवर्गैरभाणि" इत्यादिप्रयोगाः। परस्परकरग्रहणव्याजादित्यर्थः। **स्पृशन्** आमृशन् **आनन्दं** परां मुदम् **आविन्दति** संल्लभते। काव्यलिङ्गमलङ्कारः, शार्दूलविक्रीडितं च वृत्तम्॥२०॥

इत्थं मुग्धैका, धीराऽधीराधीराधीरेति प्रत्येकं त्रिविधे मध्याप्रगल्भे पुनर्ज्येष्ठत्वकनिष्ठत्वाभ्यां द्विविधतया द्वादशेति सङ्कलनया त्रयोदश भेदाः स्वीयायाः॥

अथावसरप्राप्तां परकीयां लक्षयति—**अप्रकटेति**। **अप्रकटः** सूक्ष्मबुद्धिगोचरः **परेण** स्वपरिणेतृभिन्नेन **पुरुषेण अनुरागः** रतिर्यस्याः सा **परकीया** परस्ये-

अनुरागपदेन रसरूपाया एव रतेरवश्यं ग्राह्यत्वात् । स्त्रीनिष्ठायाश्च तस्याः पुरुषविषयकत्वनियमात् । अन्यथा स्वभर्तृभिन्नपुत्रादिस्नेहवत्यां स्वीयायामतिव्याप्तितादवस्थ्यात् ।

स्यादेतत् । कन्यकायामव्याप्तिः, वेश्याया इव तस्या अपि स्वभर्तुरप्रसिद्धत्वात् ।

न च भर्तृपदमनुरागविषयपरं, तथाचानुरागविषयादेकस्मादन्यस्मिन् अनुरागविषयेऽनुरक्तत्वान्न दोष इति वाच्यम्; उभयानुरागवत्यां लक्षणासम्भवेऽप्येकमात्रानुरक्तायामव्याप्तिप्रसङ्गात् । अनुरागविषयत्वावच्छिन्नप्रतियोगिताकभेदस्यान्यस्मिन्ननुरागविषयेऽनुपपन्नत्वाच्च । भेदव्यधिकरणस्यैव धर्मस्य भेदप्रतियोगितावच्छेदकत्वात् । तत्प्रतियोगिकभेदनिवेशे चातिव्याप्तितादवस्थ्यात् ।

न च भेदप्रतियोगितावच्छेदकेऽनुरागपदं स्नेहमात्रपरं, तथा च स्नेहविषयत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं रतिविषयस्य सम्भवत्येवेति वाच्यम्; स्वीयादावतिव्याप्तेः, उक्तप्रतियोगिताकभेदविशेषणवैयर्थ्याच्च । सर्वस्यैव यत्किञ्चित्स्नेहविषयत्वादसम्भवाच्च स्नेहे तन्निष्ठत्वविशेषणेऽपि तद्दोषाच्च । परकीयायां जारविषयकस्नेहस्यापि सत्त्वे वाधकाभावात् । रतिस्नेहयोर्विरोधस्याकरेऽप्यनुक्तत्वात् ।

न च स्वनिष्ठभार्यात्वानिरूपकत्वमेव स्वभर्तृभिन्नत्वमिति वाच्यम्; कन्यकायां स्वनिष्ठभार्यात्वस्याप्यसिद्धेः । अन्यथा वेश्यायामतिव्याप्तेः ।

न च यन्निष्ठे भर्तृत्वे स्वनिरूपितत्वाभावः स एवात्र परशब्दार्थ इति वाच्यम्; भार्यारहितानुरक्तायां परकीयायामव्याप्तेः । तन्निष्ठभर्तृत्वस्याप्रसिद्धेः । भार्यासहितानुरक्तवेश्यायामतिव्याप्तेश्च ।

यमिति गहादित्वाच्छप्रत्ययः 'कुग्जनस्य परस्य च' इति कुगागमश्च । परिणयश्चात्र स्मृत्युक्तोऽष्टविधो मन्तव्यः । यथाह मनुः—ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः । तां विभजते—**सेति । सा** परकीया **द्विविधा** द्विप्रकारा, **परोढा** परेणानुरागविषयादन्येन ऊढा

अथ तन्निष्ठो यो भार्यात्वाभावस्तत्प्रतियोग्यनिरूपकत्वमेवात्र परत्वम्। अस्ति चान्यत्र प्रसिद्धस्य भार्यात्वस्याभावः परकीयायाम्। तत्प्रतियोगिभार्यात्वनिरूपकत्वाभावश्च तदनुरागविषये इति नाव्याप्तिरिति चेन्न। वेश्यायामतिव्याप्तेः। पुरुषान्तरनिरूपित-भार्यात्वाभावस्य स्वीयायामपि सत्त्वात्, तत्प्रतियोगिभार्यात्वस्य तद्भर्तृनिरूपितत्वाभावात्तदनुरक्तायां स्वीयायामपि तद्दोषाच्च। तन्निरूपितभार्यात्वस्य च स्वीयानिष्ठात्यन्ताभावप्रतियोगित्वा-नुपपत्तेः। तद्भर्तृनिरूपितभार्यात्वाभावस्य तद्भार्यायामनपपत्तेः।

अथोच्यते भर्तृत्वसामान्ये यन्निष्ठत्वस्य निरूपितत्वोभयात्य-न्ताभावः स एवात्र परशब्दार्थः। स्वपदं लक्ष्यत्वाभिमतनायिकापरम्। परोढायां परिणेतृनिष्ठभर्तृत्वे स्वनिरूपितत्वसत्त्वेऽपि यदपेक्षया तस्याः परकीयात्वं तन्निष्ठत्वाभावादुभयाभावः। भार्यारहितानु-रक्तायां च तस्यां कन्यकायां च तस्योभयाभाववत्त्वान्नाव्याप्तिः। स्वीयायां चोभयसत्त्वान्नातिव्याप्तिरिति। तन्न। वेश्यायामतिव्याप्तेः। एतेन भाविपुरुषापेक्षया पित्राद्यपेक्षया चान्यत्वमादाय कन्यकायां नाव्याप्तिरिति निरस्तं, विनैव विवाहं मृतायां तस्यामव्याप्तेः।

तन्निरूपितं भर्तृत्वं यस्याग्रे भावि तत्प्रतियोगिकभेदोऽपि हि कया रीत्या निवेश्यः। न तावद्भाविविवाहकपुरुषत्वावच्छिन्नप्रति-योगिताकत्वेन, भूतविवाहायामव्याप्तेः। नापि भर्तृत्वावच्छिन्नप्रति-योगिताकत्वेन, भर्तृत्वं हि शास्त्रीयं वा, तदुपभोगकर्तृत्वं वा, अयमस्या भर्तेति व्यवहारविषयत्वं वा, तद्दानो-द्देश्यत्वं वा। नाद्यः। प्रकृतकन्यकानिरूपितस्य भर्तृत्वस्य तत्रानु-

परिणीतेतियावत्। **कन्यकाऽजातपाणिग्रहणा च**। कन्यकाया अनूढतया परकीयात्वं कथमिति शङ्कां निराकुरुते—**कन्याया इति**। कन्याया पित्राद्यधीनतया पत्युः स्वत्वानुत्पत्तावपि पितुस्तदभावे भ्रात्रादेः स्वत्वसत्त्वात्तदायत्ततया **परकीयता** परकीयाभेदे गणनेत्यर्थः। अस्याश्चेष्टां निरूपयति—**अस्या इति**। **अस्याः** परकीयायाः **सर्वा** निखिलाऽपि **चेष्टा** अनुरागव्यञ्जको व्यापारः **गुप्तैव** परानभि-लक्षितैव भवतीतिशेषः॥

त्पत्तेः। न द्वितीयः। उपनायकसाधारण्यात्। न तृतीयः। सख्यादिता-दृशव्यवहारस्य जारेऽपि सत्त्वात्। न चतुर्थः। दैववशादुपनायकायैव यस्या दानं तस्यामव्याप्तेः। पित्राद्यपेक्षया परत्वोपादाने च स्वीयादा-वतिव्याप्तेरितिदिक्।

एतेन "वित्तमात्रानुपाधिकपरपुरुषानुरागवत्त्वं परकीयात्वम्। तेन वित्तमात्रानुपाधिकप्रकटपरपुरुषानुरागायाः क्वान्तर्भाव इति शङ्कानवकाशः," इत्यपि निरस्तम्। परपदार्थानुक्तौ तत्राप्युक्त-दोषावतारात्। वक्ष्यमाणस्याप्रकटत्वस्य तत्रापि सत्त्वेनोक्त-शङ्कानवकाशाच्च। अतएवाप्रकटित इति पाठः। तेन—

ज्ञाता मैत्री सहजमधुरापातिभिर्लोचनान्तैः<br>
कर्णाकर्णि प्रथितमयशो बन्धुवर्गैरभाणि।<br>
सम्प्रत्येवं तदपि न मनाङ्‌ मुञ्चति प्राणनाथं<br>
को जानीते कुवलयदृशः कीदृशः प्रेमबन्धः॥

इत्यत्र लोकैरनुरागज्ञानेऽपि नायिकानिष्ठव्यापारेण तदभावा-न्नाव्याप्तिरित्यपि निरस्तम्। अप्रकटितविशेषणस्य वैय-र्थ्याच्च। तदर्थनिरुक्तेश्च तद्विज्ञानविषयत्वाभावः। तथा चेश्वर-ज्ञानविषयत्वादप्रसिद्धिः। जन्यत्वेन ज्ञानविशेषणेऽपि स्वनिष्ठज्ञान-विषयत्वात्। यत्किञ्चिज्ज्ञानविषयत्वाभावविवक्षायां त्वतिव्याप्तिः। स्वभिन्ननिष्ठत्वविशेषणेऽपि नायकज्ञानमादाय स्वं तदनुरागविषयश्चेत्युभयापेक्षया यद्भिन्नं तद्वृत्तित्वविशेषणेऽपि सख्यादिना ज्ञाततदनुरागायामव्याप्तिः। स्वविरुद्धवृत्तित्वविशेषणेऽपि सपत्न्यादिना ज्ञातानुरागायामव्याप्तेरित्यास्तां विस्तरः।

अत्रोच्यते। विरुद्धनिष्ठज्ञानविषयत्वाभावप्रकारकेच्छाविशेष्य-त्वमेवात्राप्रकटत्वम्। अयं मदनुरागो विरुद्धैर्मा ज्ञायतामित्याकारके-च्छायाः परकीयायामावश्यकत्वात्।

विरुद्धत्वं च तत्सम्भोगप्रतिबन्धप्रयोजकत्वं न तु स्वविषयक-द्वेषवत्त्वं, प्रयोजनाभावात्। गुरुभर्त्रादिनिष्ठज्ञानविषयत्वाभावस्यापी-ष्यमाणत्वाच्च। तत्साधारणस्यैव विरुद्धत्वस्य निवेशात्। इदं च

न स्वीयायाम् लज्जावशादन्यैर्मा ज्ञायतामित्याकारकेच्छायाः सख्यादि-साधारणज्ञानविषयत्वाभावप्रकारिकाया एव तत्रोत्पत्तेः।

एवं च गुणविशेषशालिदरिद्रानुरक्तायां वेश्यायामतिव्याप्तिः। मात्रादिनिष्ठज्ञानाभावस्य तयापीष्यमाणत्वात्। यथोक्तविरुद्धत्वस्य मात्रादावपि सत्त्वात्। अत उक्तं परपुरुषेति। परत्वं चात्र स्वघटित-सम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावावच्छिन्नविशेषणताकयद्विशे-ष्यकज्ञानत्वं विरुद्धनिष्ठाया अनयोः सम्भोगो मा भूदितीच्छा तन्निष्ठकार्यतानिरूपितकारणतावच्छेदकं तत्त्वं ग्राह्यम्। वेश्यामा-त्रादिनिष्ठायां हि तादृशेच्छायामयं धनाभाववानिति ज्ञानत्वं कारणतावच्छेदकम्। तत्र धनाभावो विशेषणतावच्छेदकः। स च नायिकाघटितसम्बन्धावच्छिन्नप्रतियोगिताको न भवति, स्वामित्व-सम्बन्धस्य तत्र प्रतियोगितावच्छेदकत्वादिति न व्यभिचारः।

परोढाकन्यकयोस्तु गुर्वादिनिष्ठायामुक्तेच्छायामयमेतन्ना-यिकाप्रतियोगिकत्वं स्वनिष्ठत्वं चेत्युभयसम्बन्धेन भर्तृत्वाभाववान्। इयमेतन्नायकप्रतियोगिकत्वं स्वनिष्ठत्वं चेत्युभयसवन्धेन भार्यात्वा-भाववती, इति वा ज्ञानकारणम्। तत्र च यथोक्तो नायिकाघटित-सम्बन्ध एव प्रतियोगितावच्छेदक इति नाव्याप्तिः। न चोक्तोभय-सम्बन्धेन भर्तृत्वाभाववानेव परपदार्थोऽस्त्विति वाच्यम्। उक्तव्यभि-चारतादवस्थ्यात्। यदि तूक्तरूपं परत्वं निवेश्यते तदाऽप्रकटत्वं यन्निष्ठज्ञानविषयत्वाभाव इच्छायां प्रकारस्तद्विशेष्यकस्वविगीतत्व-बुद्धिरूपानिष्टसाधनताज्ञानप्रयोज्या या इच्छा तद्विशेष्यत्वं वक्तव्यम्। भवति हि अन्यसमवेते मन्निष्ठैतद्विषयकानुरागज्ञानं तन्निष्ठमद्विशेष्यकविगीतत्वप्रकारकबुद्धिजनकमित्येतादृशमनिष्टसाधन-ताज्ञानम्। तत उक्तेच्छेति। न कन्यकायामव्याप्तिः। वेश्यायां तु न यथोक्तज्ञानजन्या तादृशेच्छा, किन्तूक्तानुरागज्ञान-विशेष्यकं यदेतद्विघटनरूपानिष्टसाधनताज्ञानं तज्जन्यैवेति न व्यभिचार इति दिक्॥

अतएवोक्तसाधारणधर्मावच्छिन्नत्वाद्विभागमाह—सा चेति।

**परोढा यथा--**

**अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः**
**समीरोऽयं वेलावनविदलदेलापरिमलः।**
**इयं प्रावृड् धन्या नवजलदविन्यासरुचिरा**
**पराधीनं चेतः सखि किमपि कर्तुं मृगयते ।।२१।।**

---

**परोढेति**। परप्रतियोगिकभार्यात्वाश्रय इत्यर्थः। कन्यका चेति। किञ्चित्प्रतियोगिकभार्यात्वानाश्रय इत्यर्थः। कन्यकाया इति। परोढात्वं कन्यकात्वंचेत्यन्यतरवत्त्वमेव परकीयात्वमिति यथाश्रुताभिप्रायम्।

**अयमिति**। अनेन स्वानुभूतानेकगुणगणशालित्वं व्यङ्ग्यम्। रेवापदेन पुण्यतीर्थतया तत्रागमनस्य जनैरन्यथानाशङ्कनीयत्वसूचनम्। कुञ्जेति। इतरानवलोकनीयत्वद्योतनम्। कुसुमशरेति। सद्य एवाह्लादजनकत्वध्वनिः। सेवेति विप्रलम्भव्यावृत्तिः। तत्र दुःखदत्वात् उचितत्वम्, उद्दीपकत्वेन रतातिशयाधायकत्वात्। सम्यक्त्वं च वलवदनुतापजनकाभावप्रतियोगि - स्वाधिकरणकसम्भोगकत्वम्। समीरपदं कुञ्जाभ्यन्तरप्रवेशयोग्यत्वार्थम्। अयमिति परिमलसिद्धिनिरासार्थम्। वेला रेवासन्निहितदेशः। लाक्षणिकत्वात्। "अथाम्वुधितटे वेला कालमर्यादयोरपि" इति त्रिकाण्डशेषः। एतेन कोषादावनुक्तत्वाद्वेलापदस्य न तत्रैव शक्तिरिति निरस्तम्। वनेति कुसुमान्तरगन्धसंवलनभूमिः। "दरेति पाठ" इति केचित्। विदलनं द्वैधीभावः। तेन परिपाकविशेषलाभः। तदनुकूलस्वनिष्ठव्यापारलाभात्। एलापदं तत्फलपरम्। परिमलपदमनिष्टात्युत्कटत्वनिषेधार्थम्। विदलदन्तस्य एलाभिः कर्मधारयः। "तासां परिमलो यत्रेति बहुव्रीहिः" इति केचित्। तन्न। व्यधिकरणबहुव्रीहिप्रसङ्गात्। तस्माद्वेलावने विदलदेलापरिमलो यस्मिन्स इति षष्ठीसमासगर्भपूर्वोत्तरपदो बहुव्रीहिः। व्यधिकरणत्वेऽपि "सप्तमी विशेषणे बहुव्रीहौ" इत्यनुशासनमूलकत्वात्। न च एलापरिमलेत्यत्र "पूरणगुण" इति षष्ठीसमासनिषेधापत्तिः। सर्वदा भेदान्वयित्वेन तदप्रवृत्तेः। शुक्लो घट इत्यादि घटस्य शुक्ल

इति च यस्योभयथान्वयबोधकत्वे तस्यैव गुणवचनेतिग्रहणात्। अस्य तु धर्ममात्रपरतया कदापि तद्वत्परत्वाभावात्। तथा च तीर एवागत्योक्तगन्धसम्बन्धोऽस्य वृत्त इति दूरागतत्वलाभान्मन्दत्वसूचनम्। रेवासन्निधानेन तत्सलिलसीकरसम्बन्धाक्षेपाच्छीतलत्वमपि व्यङ्ग्यम्। एतेन "वेलायां परिपाककाल" इत्यपास्तम्।

वनेत्यत्र नवेति पाठान्तरम्। तत्र "नवत्वं परिमलविशेषणम्" इति केचित्। विदलनस्य चिरवृत्तत्वे तदानीं सौरभविशेषाभावव्यावृत्त्यर्थं विदलनविशेषणम्। तदिति तु युक्तम्। वस्तुतस्तु नवपदपौनरुक्त्यात् स पाठ उपेक्ष्य इति तत्त्वम्।

इयमिति तदसाधारणधर्मप्रत्यक्षं व्यङ्ग्यम्। प्रावृट्पदं कुञ्जस्य जलान्तर्मग्नत्वशङ्कया जनान्तरसञ्चयविरहद्योतनार्थम्। वस्तुतस्तु तदभावसूचनाय नवेति। एतेन पूर्वकाले निदाघातिशयात्तत्तापापनोदकत्वमपि व्यङ्ग्यम्। जलदेत्याह्लादकत्वसूचनम्। विन्यासः सन्निवेशविशेषः। तेन नेत्रयोरद्भुतहेतुत्वम्। चतुरपदेनान्यकालीन-

प्रथमं परोढामुदाहर्तुमुपक्रमते—**परोढेति**। **अयमिति**। **अयं** दृश्यमानः **रेवाकुञ्जः** नर्मदातटस्थो लतामण्डपः "रेवेन्दुजा पूर्वगङ्गा नर्मदा" इति हैमः। "निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे" इत्यमरः! **कुसुमशरस्य** कुसुमान्येव शराः बाणा यस्य कामदेवस्येत्यर्थः। **सेवायां** शुश्रूषायां विविधरतिक्रीडोपभोगार्थमिति भावः। **समुचितः** सम्यक्तयोपयुक्तः। **अयं** समीरः एषोऽनिलः **वेलावने** रेवाकुञ्जस्य सीमावर्तिनि कानने **विदलन्त्यो** विकसन्त्यश्चैता **एलाः** पुटिकाफलानि तासां **परिमलः** विमर्दोत्थ सुरभिर्यत्रैवंभूतः। **इयमेषा प्रावट्** वर्षर्तुः **धन्या** पुण्यवती कामिनोरत्युद्दीपकतयोपकारित्वादिति भावः। धन्यत्वे हेतुमाह—**नवेति**। **नवानां** नूतनानां **जलदानां** मेघानां **विन्यासे** सन्निवेशविशेषे **चतुरा** प्रवीणा। अस्यामवस्थायां **हे सखि! आलि! पराधीनं** परस्य पतिभिन्नस्य प्रियतमस्य अधीनमायत्तं चेतः स्वान्तं **यत्किमपि** वक्तुमशक्यमिति भावः। **कर्त्तुं मृगयते** अन्विष्यति। रेवाकुञ्जस्यैकान्तक्रीडायोग्यत्वम्, एलापरिमलानिलस्य शीतलमन्दसुगन्धिता, नवजलधरप्रचुरा प्रावृट् चेत्युद्दीपनप्राचुर्येण प्रियसमागमोत्सुकं चेतः उपायान्वेषणं करोतीति भावः। रेवाकुञ्जादीनां विशेषचिकीर्षायां हेतुत्वात्काव्यलिङ्गमलङ्कारः शिखरिणी वृत्तम् ॥२१॥

**गुप्ता - लक्षिता - विदग्धा - कुलटा - ऽनुशयाना - मुदिता-प्रभृतीनां परकीयायामेवान्तर्भावः। गुप्ता त्रिविधा-वृत्त-सुरतगोपना, वर्तिष्यमाणसुरतगोपना वृत्त-वर्तिष्यमाण-सुरतगोपना च।**

---

विन्यासवैलक्षण्यं व्यङ्ग्यम् । अत एव धन्या जगत्तापहारित्वान्मद-भिलाषसम्पादकत्वाच्च। एवं च यथा नवमेघसङ्घट्टनं प्रावृषा कृतं तथा ममाप्यभिनवाभिलषितनायकघटनं त्वया कार्यमिति भावः। पराधीनं स्वाभिमतकार्यप्रतिबन्धका ये श्वशुरादयस्तदायत्तम् । किमपि विशिष्य वक्तुमशक्यं कर्तुं मृगयते। उपायान्वेषणं करोति। तथा च गुर्वादिवञ्चनपूर्वकं प्रच्छन्नकामुकस्त्वया समानेय इति भावः । यद्वा। परानुरक्तं मनः किमप्यनुचितं प्राणवियोगं कर्तुं विचारयति। "मदीयत्वेन मनोऽनुल्लेखस्तु दुःखदत्वादात्मीयत्वाभावसूचनार्थं" इति केचित् । "रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति वृत्तरत्नाकरः॥२१॥

गुप्तेति। भावे क्तप्रत्ययान्ताद् अर्शआद्यजन्तम्। गुप्तं गोपन-मस्त्यस्या इत्यर्थः। "केचित्तु मतिबुद्धिपूजार्थेभ्यश्चेति चकारस्या-नुक्तसमुच्चयार्थत्वाद्वर्तमाने कर्तरि" क्त इत्याहुः। तन्न। तेन कर्मण्येव क्तप्रत्ययविधानाच्चकारेण कर्तरि तद्विधानानुपपत्तेः।

कुलानि बहून् जारानटतीति कुलटा। शकन्ध्वादित्वात्पररूपम्। अतएव ममार्यकोषे कुलटेति पदमशङ्कं पररूपेणैव संसाध्यम्। "इत्थमनुशिष्यमाणा स्मयतेस्म तिरोवलद्वदनम्।" स्वभर्तृभिन्नैकमा-त्राननुरक्तत्वे सत्यनुरक्तत्वं कुलटात्वम्। तथा च सामानाधिकरण्य-सम्बन्धेन स्वभर्तृप्रतियोगिकभेदवत्त्वे सति प्रतियोगित्वानुयोगित्वो-भयसम्बन्धेन स्वानुरागविषयवान् यो भेदः सामानाधिकरण्येन तद्विशिष्टो योऽनुरागः तद्वत्त्वं पर्यवसितार्थः।

आद्यं सामानाधिकरण्यं विशेषणताविशेषघटितम्, द्वितीयं तु विशेषणताविशेषविषयत्वोभयघटितमिति, विशेषः। वेश्यावारणाय

**त्रिविधापि सा यथा--**

**श्वश्रूः क्रुध्यतु विद्विषन्तु सुहृदो निन्दन्तु वा मातरः**
**तस्मिन् किन्तु न मन्दिरे सखि पुनः स्वापो विधेयो मया।**

---

स्वभर्तृप्रतियोगिकभेदस्य निवेशः। तस्या अप्येकस्मादनुरागविषयादन्यस्मिन् विषयत्वेनानुरागसत्त्वात्। स्वभर्तृभिन्ने एकस्मिन्नेवानुरक्तायां व्यभिचारवारणाय स्वानुरागविषयस्य निवेशः। अनुयोगित्वमात्रस्य सम्बन्धतया निवेशे स्वभर्तृतद्भिन्नोभयमात्रानुरक्तायां व्यभिचारः स्यादतः प्रतियोगित्वस्यापि निवेशः। न च तद्दोषतादवस्थ्यम्। भेदगर्भस्य सामानाधिकरण्यस्य विवक्षितत्वात्। प्रतियोगिकभेदस्याप्युभयत्वाद्यवच्छिन्नप्रतियोगिताकस्य स्वभर्तरि सत्त्वात् स्वभर्तृत्वावच्छिन्नप्रतियोगिताकभेदविवक्षायां तु तन्मात्रनिवेशेऽपि क्षतिविरहात्।

नन्वेवं बहुगामिन्यां कन्यकायामव्याप्तिरितिचेन्न; तस्या अलक्ष्यत्वात्, परकीयायामेवान्तर्भाव इति ग्रन्थे परकीयापदेन परोढाया एव विवक्षितत्वात्। कन्यकाया एतद्ग्रन्थे दोदाहरणानन्तरमेवोदाहृतत्वात्। अभियुक्तव्यवहारेणैव लक्ष्यालक्ष्यव्यवस्थानात्। तदुक्तम्--

सिद्धानुगममात्रं तु कर्तव्यं हि परीक्षकैः।
तत्सर्वलोकसिद्धस्य लक्षणेन निवर्तनम्॥

**श्वश्रूरिति**। श्वशुरस्य स्त्री श्वश्रूः। श्वशुरस्योकाराकारलोपश्चेत्यूङ्, ऊकाराकारयोश्च लोपः। स्वभर्तृभार्यान्यजनकत्वे सति स्त्रीत्वं श्वश्रूत्वम्। अन्यासु श्वशुरस्त्रीषु श्वश्रूव्यवहारस्तु स्वभर्तृभार्यान्यतरजनकनिरूपितभार्यात्वसम्बन्धाद् गौणः। स्ववचनार्थाननुष्ठानं

ननु परोढाकन्यकेत्युक्तभेदद्वयादतिरिक्तमपि गुप्ता लक्षितेत्यादिभेदजातं वक्तुं शक्यत एवेति चेन्नेत्याह--**गुप्तेत्यादि**। लक्षणोदाहरणे वक्ष्येते। **एतासां परकीयायामेव** परोढायामेवेत्यर्थः। **अन्तर्भावः** समावेश इतियावत्।

तत्र गुप्तां निर्दिशति **गुप्तेति**। **त्रिविधा** त्रिप्रकारा। प्रकारान् निर्दिशति--**वृत्तेत्यादि**। **वृत्तस्य** कृतपूर्वस्य **वर्तिष्यमाणस्य** करिष्यमाणस्य **वृत्तवर्तिष्यमाणस्य** कृतपूर्वस्य करिष्यमाणस्य चेति भावः। **सुरतस्य** परपुरुषसम्भोगस्य गोपना अपह्नवकर्त्रीति यावत्॥

**आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती**
**मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम् ।२२।**

---

क्रोधनिमित्तम् । लोडभ्युपगमार्थः । "भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्" इत्यमरः । परस्परपदस्यायमर्थः । स्वभर्तृभिन्नो यः स्वभर्तृजनकजन्यस्तन्निष्ठभर्तृत्वनिरूपितभार्यात्ववतो तद्यातेति । स्वपदं यत्प्रतियोगिकं यातृत्वं विवक्षितं तत्परम् ।

तस्मिन्निति । यत्र पूर्वस्यां रात्रावुषितं तत्रेत्यर्थः । सखीति, "तस्यामप्यप्रकाशनादतिगाम्भीर्यं व्यङ्ग्यम्" इति केचित् । वस्तुतस्तु सखीभ्यो गोपनस्यानुपयुक्तत्वादुक्तवाक्यस्यान्यश्रवणाभिप्रायेणैवोक्तत्वात्सखीमुद्दिश्योक्तस्यान्येषां प्रामाण्यबोधो भवत्वित्यभिप्रायेण सखीति सम्बुद्धिः । पुनरित्येकवारं स्वापस्य वृत्तत्वसूचनम् । स्वापपदेन तद्दशायां कृतस्य क्षतादेरप्रतीकार्यत्वं व्यङ्ग्यम् ।

आखुपदेन गृहस्य शून्यत्वं व्यङ्ग्यम् । "एकत्वेन दुर्लभत्वमिति" केचित् । आक्रमणाय ग्रहणं कर्तुं जागरावस्थायां मार्जार्या अपसारणवारणाय कोणेति । तत्रस्थस्य सहसा दर्शनाभावात् तत्राप्यतिदुर्लक्षत्वलाभाय कुहरादिति । तथा च पूर्वमेव तत्र निलीय स्थितेत्यर्थः । उत्फालस्तदाक्रमणानुकूलकर्मविशेषः । एकत्वं नखक्षतानां नियतस्थानकत्वव्यञ्जनार्थम् । आतन्वती पुनः पुनर्विदधाना ।

उदाहरति—**त्रिविधेति । श्वश्रूरिति । श्वश्रूः** श्वसुरजाया पतिप्रसूरितियावत् । 'पतिपत्न्योः प्रसूः श्वश्रूः" इत्यमरः । **क्रुध्यतु** क्रोधं करोतु आज्ञाभङ्गत्वादितिशेषः । **सुहृदो** मित्राणि सखीवर्ग इति यावत् **विद्विषन्तु** असूयां कुर्वन्तु ! उपदेशाग्रहणादिति शेषः । **यातरः** पत्युर्ज्येष्ठकनिष्ठभ्रातृपत्न्यः "भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्" इत्यमरः । 'यती प्रयत्ने' धातोः 'यतेर्वृद्धिश्च' इत्यौणादिकः ऋन्-प्रत्ययो वृद्धिश्च । **निन्दन्तु** गर्हयन्तु वचनानुरोधेनेति शेषः । एतदखिलं मया सोढव्यमितिभावः । किन्तु सखि हेवयस्ये ! **तस्मिन्** उषितपूर्वे **मन्दिरे** सद्मनि **मया पुनः** भूयः कदापि **स्वापः** शयनं **न विधेयः** न कर्तव्यः । स्वापाकरणे हेतुमाह—: **आखोरिति । आखोर्मूषकस्य**, आसमन्तात् खनतीति 'खनु अवदारणे' 'आङ्परयोः खनिशंभ्यां डिच्च' इत्युः । 'उन्दुरुर्मूषिकोप्याखुः' इत्यमरः । **आक्रमणाय** जिघांसया

मार्जारीति स्त्रीत्वं तिर्यग्जातीयपुरुषस्यापि सम्बन्धाभावसूचनार्थम्। नखरैः खरैरिति विरोधाभासः। नखं नखपदप्रवृत्तिनिमित्तम्। "नखत्वं रातीति नखरः" इति स्वामी। यद्यपि घट इत्यत्र घटत्वांशे अन्याप्रकारको बोधो घटत्ववानित्यत्र तदंशे घटत्वत्वप्रकारक इति यथा वैषम्यं तथात्र नास्ति। नखत्वांशे निरवच्छिन्नप्रकारताया एवोभयत्राप्यनुभवात्। तथापि व्युत्पत्तिमात्रं तदितिबोध्यम्। कां कामित्यनेन नखाभिघातातिरिक्तावस्थान्तरं व्यङ्ग्यम्। अत्राच्छुरितकाख्यं नखक्षतं गोप्यत्वेन विवक्षणीयम्। अर्थाच्चान्येषामपि गोपनसिद्धिः। तदुक्तं रतिरहस्ये--

अव्यक्तरेखमनुकर्म नखैः समस्तै
रोमाञ्चकृच्चटचटाध्वनियोजितान्तम्।
अङ्गुष्ठजाग्रतलताडनतो नखानां
गण्डस्तनान्तरगमाच्छुरितं लिखन्ति॥

इति। अतएव मार्जारीनखपर्यन्तानुधावनसार्थक्यम्। अनेन वृत्तमात्ररतगोपनम्, हठात्तत्रैव स्थापनेऽप्येवमेव भावीति भाविरतमात्रगोपनम्, अर्थाच्चोभयरतगोपनमित्याहुः। अर्थसिद्धत्वान्न तृतीयो भेद इत्यन्ये॥२२॥

**कोणस्य** गृहैकदेशस्य **कुहरात्** विवरात् "कुहरं विवरं त्रिलम्" इत्यमरः। **उत्फालमातन्वती** कूर्दनं विदधाना **मार्जारी** विडाली। मार्ष्टि मुखमिति 'मृजू शुद्धौ' 'कञ्जिमृजिभ्यां चित्" इत्यारन्। 'मृजेर्वृद्धिः' इति वृद्धिः। 'ओतुर्विडालो मार्जारः' इत्यमरः। स्त्रियां ङीष्। **खरैः** तीक्ष्णैः **नखरैः** नखैः, 'नखो स्त्री नखरोऽस्त्रियाम्' इत्यमरः। **मे कां कां** वक्तुमशक्यां **दुर्दशां** दुरवस्थां नितम्बस्तनादिविलेखनरूपामिति भावः। **न कृतवती** नाकरोत्, अपितु सर्वां दुर्दशामकरोदिति यावत्। अत्र मार्जारीप्रसङ्गेनोपपतिकृतनखक्षतादिगोपनप्रयासाद्वृत्तस्य, न तत्र मया स्वापो विधेय इति वर्तिष्यमाणस्य, अर्थाच्चोभयसुरतस्य गोपनमिति गुप्तायाः भेदत्रयमुदाहृतम्। स्वापाकरणे दुर्दशाया हेतुत्वात् काव्यलिङ्गं,छद्मना नखक्षतादेर्गोपनाच्च व्याजोक्तिस्तदनयोः संसृष्टिरलङ्कारः। शार्दूलविक्रीडितं च वृत्तम्॥२२॥

**विदग्धा च द्विविधा क्रियाविदग्धा वाग्विदग्धा च। वाग्विदग्धा यथा——**

**निविडतमतमालवल्लिवल्ली-**
**विचकिलराजिविराजितोपकण्ठे।**

---

**निविडेति**। निविडत्वमत्यन्तसन्निकर्षः। ततोऽप्यतिशयलाभाय तमेति। सन्निकर्षे च तदर्थान्वयः। तमालपदेन स्वतः श्यामतया मेघसादृश्याद् ग्रीष्मे विश्रामार्हत्वसूचनम्। निविडेति। तदभ्यन्तरे तेजःसंयोगाभावात् तद्विपिनान्तर्गतानां दुर्लक्ष्यत्वसूचनम्। तान् वल्लन्ते वेष्टयन्तीति तमालवल्लिन्यः। मल्लीतिपाठे मल्लन्ते अवलम्बन्ते इत्यर्थः। "ताश्च ता वल्ल्यश्चेति कर्मधारय" इति केचित्। यद्वा तमाला मल्लिवल्ल्यश्चेति द्वन्द्वः, न च विचकिलस्यापि मल्ली-विशेषत्वान्मल्लीशब्देन सह द्वन्द्वानुपपत्तिः। सामान्यविशेषवाचक-पदयोर्द्वन्द्वनिषेधस्य "त्यदादीनि सर्वैर्नित्यम्" इति सूत्रे वाचनिकतया भाष्यकारैः पठितत्वादितिवाच्यम्; तत्सहिता विचकिला इति मध्यमपदलोपेन व्याख्यानात्। मालवल्लीतिपाठे मालो वृक्षविशेषः। लतासम्बन्धेन वृक्षसूक्ष्मान्तराणामपि व्यवहितत्वसूचनम्। मल्लीति ग्रीष्मे तत्कुसुमोत्पत्त्या सौरभसूचनम्। "उपकण्ठान्तिकाभ्यर्णम्" इत्यमरः। पथिकेति पूर्वपरिचयाभावात्तत्सम्भाषणादेरन्यैरनाश-ङ्कनीयत्वसूचनम। उचितत्वं निदाघवेदनापनायकत्वात्। संशब्दः स्वसम्भोगोपधायकत्वसूचनार्थः। तवेति स्थानान्तरविरहलाभार्थम्।

विदग्धां विभजते——**विदग्धेति**। निपुणेतियावत्। उपपतिसम्भोगोपयोगिवचन-क्रियानैपुण्यं विदग्धात्वमिति भावः। पूर्वामुदाहरति-**वागिति**। **निविडेति। अद्यास्मिन्** सवितरि सूर्ये **तीव्रे** तीक्ष्णे मध्याह्नव्यापितया नितान्ततापजनक इत्यर्थः। **निविडतमान्** अतिशयघनान् **तमालान्** तापिच्छाख्यान् तरून् **वल्लन्ते** वेष्टयन्तीति निविडतमतमालवल्ल्यश्च ता **वल्ल्यो** लताः। अत्र प्रथमवल्लिपदस्य वेष्टनमात्रार्थकत्वं द्वितीयस्य च लतार्थकत्वमिति व्याख्यातृमतम्। वस्तुतस्तु मल्लिवल्लीत्येव पाठः साधीयान्, तमालानां मल्लीलतानां चेतिभावः। तथा **विचकिलानां** विशिष्ट-

**पथिक समुचितस्तवाद्य तीव्रे**
**सवितरि तत्र सरित्तटे निवासः। २३॥**

---

अद्येति क्लृप्तनिवासान्तराभावलाभार्थम्। तस्मिन्निति तद्गुणानां स्वानुभूतत्वद्योतनार्थम्।

अत्र दीर्घसमासनिबन्धनाद गौडी रीतिः शृङ्गारानुपयुक्तेति तदुपादानं स्वस्य पथिकविषयकरतिगोपनार्थमिति न दोषः। केचित्तु "सुकुमार-कठिनवर्णवत्त्वादेव तयोर्भेदः। असमस्तपदप्राया वैदर्भीत्यत्र प्रायेत्युक्त्वा वैदर्भ्यामपि दीर्घसमासोऽस्त्येव" इत्याहुः। तन्न।

लोलालकावलिवलन्नयनारविन्द-
लीलावशंवदितलोकविलोचनायाः।
सायाह्नि प्रणयिनो भवनं व्रजन्त्या-
श्चेतो न कस्य हरते गतिरङ्गनायाः॥

इत्यस्य मधुररसेषु दीर्घसमासानौचित्योदाहरणतया रसगङ्गाधरे उदाहृतत्वात्। प्रायेणासमास इत्यत्र ततोऽल्पार्थकतया दीर्घसमासाभावस्य तदर्थत्वात्। स च विशिष्टाभावः क्वचित् समासाभावात् क्वचित्समासदीर्घत्वाभावादिति रीतिज्ञैः सिद्धान्तितत्वात्। अतएव पञ्चपदाधिकसमासा गौडीति भानुदत्तमिश्रैरेवालङ्कारतिलके उक्तम्।

सरित्पदं जलाहरणव्याजेन तत्र स्वगमनयोग्यत्वद्योतनार्थम्। तत्सम्बन्धेन तटस्य शैत्यसूचनम्। अन्ये तु "विराजितेति सम्बुद्धिः। सौन्दर्यविशेषशालिन्निति तदर्थः। उपकण्ठे कण्ठस्य समीपे मद्वक्षसीति यावत्। तमालसम्बन्धेन म्लानत्वव्यावृत्तिः। विचकिलैः राजते शोभते इति विचकिलराट्, तस्मिन्विचकिलराजि। राजेः क्विप् सप्तम्येक-

मल्लीनां च **राजयः** पङ्क्तयः **ताभिर्विराजितः** शोभितः **उपकण्ठो**ऽन्तिकप्रदेशो यस्मिन्। "उपकण्ठान्तिकाभ्यर्णे" इत्यमरः। एवंविधे **सरित्तटे** नदीतीरे। **हे पथिक**। पान्थ! **तव निवासो** वसतिः। **समुचितः** सर्वथायोग्य इतिभावः। निविडतमतमालमल्लिवल्लीविचकिलराजिविराजितः स नदीतीरस्थः प्रदेश एवावयोः सङ्केतस्थलमिति साभिप्रायवचनरचनाविशेषतया वक्तीति वाग्विदग्धेयम्। सरित्तटविशेषणस्य साभिप्रायत्वोत्तया परिकरालङ्कारः। पुष्पितामा वृत्तम्॥२३॥

**क्रियाविदग्धा यथा--**

**दासाय भवननाथे बदरीमपनेतुमादिशति।**
**हेमन्ते हरिणाक्षी पयसि कुठारं विनिक्षिपति॥२४॥**

---

वचनान्तम् उपकण्ठे इत्यस्य विशेषणम्। तत्र तव निवासो योग्यो गाढपरिरम्भाद्"इति वदन्ति। अत्र नदीतीरग्रीष्ममध्याह्नरूपौ देशकालौ सङ्केतोपयुक्तौ। तदुक्तं साहित्यदर्पणे--

क्षेत्रं वाटीभग्नदेवालयो दूतीगृहं वनम्।
मालामञ्चाःश्मशानानि नद्यादीनां तटी तथा॥
एवं कृताभिसाराणां पुंश्चलीनां विनोदने।
स्थानान्यष्टौ तथा ध्वान्तच्छन्ने कुत्रचिदाश्रयः॥

अन्यत्राप्युक्तम्--

दुर्दिनं हिमसंपातो हेमन्तरजनी तथा।
चन्द्रोदयः प्रदोषश्च ग्रीष्ममध्याह्न एव च॥

'उभयमपीदमपलक्षणम्' इत्यभियुक्ताः। तथा च तत्समये प्रायेण लोकानां प्रचाराभावात्। कस्यचित्तत्सत्त्वेऽपि तमालादिभिर्व्यवधानसम्पत्तेर्नदीप्रवाहशव्दबाहुल्याद्वलयशब्दादिश्रवणासम्भवादनुमित्यसम्भवाच्च निर्यन्त्रणं सम्भोगविजृम्भणमिति व्यञ्जनेति वाग्विदग्धेयम्॥२३॥

**दासायेति।** दासपदं निकृष्टकर्मणि प्रेरणार्हत्वसूचकम्। "क्रियया यमभिप्रैति" इति सम्प्रदानत्वम्। भवननाथेति तदादेशस्यावश्यसम्पाद्यत्वम्, तस्यास्तद्विषयकानुरागहीनत्वं च व्यङ्ग्यम्। "कर्कन्धूर्बदरीकोली" इत्यमरः। कण्टकप्राचुर्यात्सन्निहितत्वाच्च

---

क्रियाविदग्धामुदाहर्तुमाचष्टे--**दासायेति।** **भवननाथे** गृहस्वामिनि **बदरीं** कोलीतरुम् **अपनेतुम्** आमूलाच्छेत्तुं **दासाय** निजसेवकाय **आदिशति** आज्ञापयति **हेमन्ते** शीतर्तौ **हरिणाक्षी** चञ्चलनयनेतियावत् **कुठारं** स्वधितिं **पयसि** जलान्तरितिभावः। **विनिक्षिपति** प्रक्षिप्य गोपयतीत्यर्थः। बदरीवृक्षच्छेदनात्स्वसङ्केतस्थलभङ्गभिया छेदनसाधनं जलान्तः प्रक्षिपति, शैत्यातिशयान्न तत्र कोऽप्यन्विष्यतीति क्रियाकौशलं हरिणाक्ष्याः। अत्र कुठारगोपनरूपवस्तुना चौर्यसुरतस्थलरक्षणरूपो वस्तुध्वनिः। उपगीतिश्च छन्दः॥२४॥

**लक्षिता यथा––**

**यद्भूतं तद्भूतं यद्भूयात्तदपि वा भूयात्।**
**यद्भवति तद्भवति वा विफलस्तवकोऽपि गोपनायासः ॥२५॥**

---

छेदाज्ञादानम्। अतएव जनान्तरागमनशङ्काविरहात्सन्निहिततया नायिकायास्तत्प्रतिबन्धे प्रवृत्तिः। हेमन्तपदं वृक्षान्तराणां तदानीं पत्रभङ्गत्वसूचकम्। तस्यास्तदानीं फलप्रादुर्भावात्। हरिणाक्षीति दीर्घदृष्टित्वसूचनम्। सङ्केतभङ्गभिया कुठारगोपनस्थलगवेषणार्थं वा झटिति कुठारदूरीकरणार्थं वा। "चञ्चलाक्षीति" केचित्। पयसि तत्र तत्सत्त्वशङ्कानुदयादितिभावः। निक्षेपे विशेषस्तु जनान्तर-निष्ठज्ञानाविषयत्वरूपः। "द्वयोः कुठारः स्वधितिः" इत्यमरः। अत्र सङ्केतस्थलस्य तच्छेदकारणकुठारविघटनद्वारा रक्षणात् क्रिया-वैदग्ध्यम् ॥२४॥

**यद्भूतमिति**। "आत्मानं निवारयन्तीमन्यत्र तद्गोपनकारिणीं सखीं प्रति नायिकाया उक्तिः" इति केचित्। वस्तुतो नायिकां प्रति सख्या उक्तिरिति युक्तम्। यत्पूर्वं वृत्तं तद्वृत्तमेव नत्वन्यथाकर्तुं शक्यम्। द्वितीयभूतपदमुक्तार्थे लाक्षणिकम्। अन्यथा उद्देश्यताव-च्छेदकविधेययोरैक्येन शाब्दबोधानुपपत्तेः। एतेन नायकविशेष-

लक्षितां प्रकटितपरपुरुषानुरागामुदाहरति–– **यदिति। यद्भूतं** यन्निष्पन्नं त्वया यत्कृतमिति यावत्। **तद्भूतं** तत्तु कृतमेवेत्यर्थः। न त्वया तदर्थं पश्चात्तापः क्रियत इतिभावः। **अपि वा** अतःपरमपि **यद्भूयात्** यत्स्यात् **तद्भूयात्** तद्भवतु। न तदर्थं तव कापि चिन्तेति भावः। 'मृतिस्ते वृषल भूयात्" इत्यादाविवेच्छामात्र-परत्वेऽपि आशीःपदार्थदर्शनादत्र शुभेच्छाविरहेऽप्याशीर्लिङः प्रयोगः। **यद्भवति** साम्प्रतमपि त्वया यत्क्रियते **तद्भवति** तत्क्रियत एव, दृढानुरागान्न त्वं ततो निर्वर्तितुं क्षमेति भावः। अतएव **तव** नायिकाया **कोऽपि** कश्चिदपि **गोपनायासः** गोपन-प्रयत्नः "यत्नः प्रयत्न आयासः" इत्यभिधानमाला। **विफलः** निष्प्रयोजन इति यावत्। अहं त्वद्वृत्तमखिलं वेद्मि न मत्पुरतस्तद्गोपनप्रयत्नस्त्वया कार्यः। यथेच्छं विहरेति सखीवचनाभिप्रायः। अत्रानुप्राससंसृष्टं काव्यलिङ्गमलङ्कारः। उद्गीतिश्च छन्दः ॥२५॥

कुलटा यथा—

एते वारिकणान् किरन्ति पुरुषान् वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वमन्ति न सृजन्त्येते पुनर्नायकान्।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्
धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥२६॥

---

विषयकानुरागस्य दुर्यशोहेतुत्वेऽपि तद्भिया तदनुतापो न सहृदयत्वपर्यवसायीति सूचितम्। यत्तद्वार्ताप्रकाशरूपं भूयादिति सपत्न्यादिभिराशास्यते तदपि भूयात्, भवत्विति तद्विषयकोपेक्षासूचनम्, अन्यथा आशिषि लिङोऽनुपपत्तेः। ननु भाविप्रकाशभयादतः परमेव ततो निवर्तितव्यमित्यत आह—यदिति। तद्विषयकमन्निष्ठानुरागज्ञानादिरूपं यत्साम्प्रतं लिङ्गज्ञानादिना भवति तद्भवतु। वाशब्दोऽनास्थायाम्। "कार्याकार्यविचारणा यदि भवत्स्नेहाय दत्तं जलम्" इति न्यायात्। गोपनं स्वनिष्ठतदनुरागस्य विरुद्धवृत्तिज्ञानविषयत्वाभावानुकूलो व्यापारस्तद्विषयक आयासः प्रयत्नः। विफलो गोपनरूपफलानुपधायकत्वात्, प्रकारान्तरेण तस्य परैर्लक्षितत्वादिति तात्पर्यम्। कोपीति आयासस्य लोकोत्तरत्वसूचनम्। "गोपीति सम्बुद्ध्यन्तः पाठ" इति केचित् ॥२५॥

**एत इति**। अनेन प्रत्यक्षत्वसूचनम्। स्वापकर्तृदर्शने विषादोद्रेकात्। कणपदमप्रयोजकत्वार्थम्। बहुत्वं शतमप्यन्धानां न पश्यतीति व्यञ्जनार्थम्। किरन्तीति स्वानपेक्षितत्वं व्यङ्ग्यम्। पुरुषपदं सम्भोगसामर्थ्यसूचकम्। बहुत्वं सिद्धमात्रपुरुषानादाय सिद्धसाधनवारणार्थम्। वर्षन्तीति जलकणापेक्षयाप्यधिकपुरुषाणामपेक्षितत्वलाभार्थम्। अम्भोधरा इति योगार्थमादाय पुरुषवृष्टित्वरूपायोग्यतया अग्रेऽपि तदाशानिवारणार्थम्। तेन विषादाधिक्यसिद्धिः। शैला इति काठिन्यसूचकम्। "शाद्वलः शादहरितः" इत्यमरः। उद्वमन्तीत्यनिच्छासिद्धत्वं व्यङ्ग्यम्। पुनरिति व्यतिरेकार्थम्। नायकान्पुन-

रित्यन्वयः। तेन शाद्वलस्यापि स्वानपेक्षिततया तद्व्यतिरेके नायकेषु गम्यमाने तेषां स्वेच्छाविषयत्वलाभः। एतेन "शैलाः पुनरिति" योजनं परास्तम्। नायकजनकत्वस्य मेघेष्वनुक्ततया शैलानामपि तत्तौल्येन व्यतिरेकानुपपत्तेः। त्रैलोक्यपदे चातुर्वर्ण्यादित्वात् ष्यञ्। यद्यपि भूमिवृक्षाणामपि पुरुषानुत्पादकत्वादुपालम्भविषयत्वं तुल्यम्, तथापि स्वर्गपातालस्थानां कामदत्वात्प्रार्थितैरपि तदनुत्पादनात्तदाधिक्य- मितिभावः। सुवत इति षूङो लुग्विकरणस्य लट्प्रथमपुरुषे बहुवचने रूपम्। कालविशेषपुरस्कारमात्रेण पुरुषानारम्भकत्ववारणाय एवकारः। नारभन्त एवेत्यन्वयः। धातरिति बुद्धौ व्यवस्थाप्य सम्बुद्धिः। कातरं दीनं यथास्यात्तथा। स्वोत्कृष्टं प्रत्यन्यथा दुर्वचत्वात्। आलपामीत्युक्तेः स्पष्टत्वसूचनम्। त्वयेति सर्वाभिमतकर्तृत्वसूचनम् अस्मदुपयुक्तपुरुषबाहुल्यानुपयुक्तानां मेघादीनामनुपयुक्तत्वादिति- भावः। "न केवलमानर्थक्यं किन्तु मदनोद्दीपकजलसीकरादिजनकतया सार्थकत्वमपि" इति केचित् ॥२६॥

अथ प्रसङ्गप्राप्तं कुलटोदाहरणमुपन्यस्यति—**कुलटेति**। कुलानामटेति विग्रहे समासः। शकन्ध्वादिषु पाठात्पररूपम्। कुलान्यटतीति प्राचीनोक्ते तुङी- वापत्तिः स्यात् बहुलपुरुषाभावेन सम्भोगभरमलभमाना कामुकी विधातार- मुपालभते-**एत इति**। **एते** दृश्यमानाः **अम्भोधरा** मेघा **वारिकणान्** जलविन्दून् **किरन्ति**। परितो विक्षिपन्तीति यावत्। किन्तु **पुरुषान्** सम्भोगसमर्थान् जनान् **न वर्षन्ति**। तथा **एते शैलाः** पर्वताः **शाद्वलं** तृणजातम् **उद्वमन्ति** उद्गिरन्ति, उत्पादयन्तीति यावत्। गौणवृत्तिव्यपाश्रयणान्नात्रोद्वमनस्याश्लीलत्वम्। **पुनः** किन्तु **नायकान्** सम्भोगकलाभिज्ञान् जनान् **न सृजन्ति** नोत्पादयन्ति। **त्रैलोक्ये** त्रिभुवनेऽपि **तरवः** वृक्षाः **फलानि सुवते** सस्यादीनुद्भावयन्ति "लाभे सस्ये शराद्यग्रे व्युष्टौ च फलके फलम्" इति शाश्वतः। किन्तु **जनान्** कामुकीतुष्टिकरान् व्यक्ती- नितिभावः। **नैवारभन्ते** न जनयन्ति। अतो हेतोः हे **धातः** जगत्स्रष्टः! **अहं कातरं** दीनं यथास्यात्तथा **आलपामि** उपालभे यत् **त्वया** विश्वसृजेतियावत् **कुलटाहेतोः** अस्मत्सदृशकामुकीनिमित्तमिति यावत्। **किंकृतम्**। व्यर्थस्ते मेघादिनिर्माण- श्रमस्तद्द्वाराऽस्मत्कामोद्दीपनात् प्रचुरनायकाभावात्तत्प्रशमासामर्थ्याच्चेति- भावः। काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं च वृत्तम् ॥२६॥

**अनुशयाना यथा--सा तु अनुशयाना त्रिविधा भवति। वर्तमानस्थानविघटनेन भाविस्थानाभावशङ्कया स्वानधिष्ठितं सङ्केतस्थलं प्रति भर्तुरागमनानागमनेन च। अत्र प्रत्येकमुदाहरणम्--**

**समुपागतवति चैत्रे निपतितपत्रे लवङ्गलतिकायाः।**
**सुदृशः कपोलपाली हर हर तालीदलद्युतिं लेभे ॥२७॥**

---

**वर्तमानेति** । यद्यपि भाविस्थानाभावशङ्कास्थलेऽपि वर्तमानस्थानविघटनमस्त्येव, तथापि कृतसङ्केतस्थानस्य स्वरूपतो विघटने, आद्यः। तत्सत्त्वेऽपि देशान्तरगमनादिना तत्र सम्भोगविघटने द्वितीयो भेदः । एवं च नायकविशेषमात्रविषयको नास्या अनराग इति बोध्यम्।

**समुपेति**। चैत्रपदं वसन्तारम्भ एव तद्विघटनात् पीडाया असह्यत्वद्योतनार्थम् । लतैव लतिका स्वार्थे कन् । यद्वा अल्पार्थे बोध्यः । यत्तु "एवं सङ्केतानर्हत्वप्रसङ्ग" इति । तन्न। अतिजीर्णत्व-

अथानुशयानां त्रिविधां दर्शयति—**अनुशयानेति**। अनुशयो नाम पश्चात्तापः तद्वतीत्यर्थः।[1] तत्प्रकारानाह—**सा त्विति**। **वर्तमानेति**। विद्यमानस्य सङ्केतस्थानस्य **विघटनेन** विद्रुतत्वात्सन्तप्यन्तीति प्रथमःप्रकारः। **भावीति**। **भाविनः** भविष्यतः **स्थानस्य** सङ्केतस्थलस्या**भावशङ्कया** ध्वंससंशयेन सन्तप्यन्तीति द्वितीयः प्रकारः। **स्वमधिष्ठितं** स्वेन नायिकयेति भावः। अधिष्ठितं **सङ्केतस्थलं** सङ्गमाय निश्चितं प्रदेशम्। **प्रति भर्तुरु**पपतेः न तु पत्युरिति स्पष्टमेव। **आगमनानागमनेन** गुरुजनाज्ञया कार्यान्तरव्यापृतत्वाद्देशान्तरगमनादिना वा तत्रागच्छेन्नवेति संशयत्वादिति तृतीयः प्रकारः।

---

१. इष्टहानिजनितानुतापवत्त्वमनुशयानात्वमित्यनन्तभट्टोक्तं लक्षणं तु न समीचीनं विहितानौचित्यप्रयोज्यखेदस्यैवानुतापत्वेन प्रसिद्धेः। अस्मन्मतेन तु स्वोपपतिसम्भोगसामग्रीविशिष्टत्व-स्वाधिष्ठितसङ्केतस्थलाधिकरणकोपपतिगमनानुमानप्रयोज्यत्वान्यतरसम्बन्धेन स्वविशिष्टतापवत्त्वमनुशयानात्वमित्युचितम्।

व्यावृत्त्या सङ्केतयोग्यत्वस्यैव लाभात्। "विगलितदलत्वादनुकम्प्यत्वमर्थम्" इति केचित्। निपतितानि पत्राणि यस्मिन् इति चैत्रविशेषणम्। न च पत्रपदस्य लतिकान्वयसापेक्षत्वादसामर्थ्ये कथं समास इति वाच्यम्; पत्रपदस्य सम्बन्धिविशेषसाकाङ्क्षतया देवदत्तस्य गुरुकुलमित्यादिवत्सामर्थ्यस्य सुस्थत्वात्। तदुक्तम्—

सम्बन्धिशब्दसापेक्षे नित्यं सर्वः प्रयुज्यते।
वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते॥

यद्वा लतिकाया इति पञ्चमी बोध्या। निपततीतिपाठे भावलक्षणा सप्तमी बोध्या। सुदृश इत्यनेन पत्रान्तराणां गलनस्य क्रमेण भावितयां एकपत्रनिपातेनापि लवङ्गलतायाः सङ्केतानर्हत्वरूपविघटनपर्यालोचनं व्यङ्ग्यम्। कपोलपाली गण्डस्थली। स्त्रीत्वं साजात्यात्तस्याः दुःखौचित्यलाभार्थम्। हरहरेति नायिकाया दुःखार्थदर्शनजन्यविषादलाभार्थम्। यद्यपि "प्राप तालीवनश्याममुपकण्ठं महोदधेः" इत्यादौ श्यामत्वम्, तथापि विशेषे पाण्डुत्वं बोध्यम्। निदर्शनालङ्कारः, तालीदलद्युतेः कपोलेन धारणासम्भवात् सादृश्यपर्यवसानात्। गीतिश्छन्दः।

आर्याप्रथमदलोक्तं कथमपि यदि लक्षणं भवेदुभयोः।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः॥

इति वृत्तरत्नाकरः॥२७॥

उदाहृतिं क्रमशो लक्षयति—**अत्रेति**। **समुपागतेति**। **चैत्रे** मधौ "स्याच्चैत्रे चैत्रिको मधुः" इत्यमरः। **समुपागतवति** वसन्तसमये प्राप्त एवेत्यर्थः। **लवङ्गलतिकायाः** देवकुसुमव्रततेः "लवङ्गं देवकुसुमं" "वल्लीतु व्रततिर्लता" इतिचामरः। **पत्रे** पर्णे **निपतति** विगलति सति **हर हर** हन्तेत्यर्थकं खेदसूचकमेतत् पदम्। **सुदृशः** शोभनेक्षणायाः **कपोलपाली** गण्डस्थली **तालीदलस्य** तृणवृक्षविशेषस्य **द्युतिं** कान्तिं पाण्डुरतामिति यावत्, **लेभे** प्राप। चैत्रप्रारम्भे दलैकमात्रपतनात्तयानुमितं यदस्मद्वर्तमानसङ्केतस्थलाच्छादनभूतलवङ्गलतिकायाः सर्वपत्रपतने गोपनत्वविरहात्कथं चौर्यरतं सम्पत्स्यते, इतिचिन्तया तत्कपोलयोः पाण्डुतातिशयमभवदित्यभिप्रायः। निदर्शनालङ्कारो गीतिश्च छन्दः॥२७॥

निद्रालुकेकिमिथुनानि कपोतपोत-
व्याधूतनूतनसरोरुहपल्लवानि ।
तत्रापि तन्वि न वनानि कियन्ति सन्ति
खिद्यस्व न प्रियतमस्य गृहं प्रयाहि ॥२८॥

---

निद्रालुरिति। अनेन सर्वदा तत्रावस्थानं व्यङ्ग्यम्। केकिपदं वनानां तमालादिमत्तया घनभ्रमजनकत्वलाभार्थम्। मिथुनपदं तिर्यक्चेष्टादर्शनस्य कामोद्रेकहेतुतायाः कामशास्त्रप्रसिद्धत्वात्। तेन मयूराणां सुरताभावेऽपि न क्षतिः। यद्वा तत्र सीत्कृतानां मयूरशब्दसंवलनेनान्यानवगम्यत्वं व्यङ्ग्यम्। तथा च कामशास्त्रम्——

मुञ्च पीडय गृहाण जीवय त्राहि हाधिगिति सीत्कृतं विदुः।
तच्च लावककपोतकोकिलाहंसकोकसदृशै रुतक्रमैः॥

एतेन कपोतेत्यादिकं व्याख्यातम्। तिर्यग्रतदर्शनार्थमाह——कपोतेति। पोतपदं यौवनलाभार्थम्। कपोतपदं पारावतपरम्। तेषां कामातिशयस्य प्रसिद्धेः। नूतनत्वमदृष्टपूर्वकत्वरूपं महीरुहविशेषणम्। तदुक्तम्——

कल्लोलिनीकाननकन्दरादौ दृष्ट्याश्रये चार्पितचित्तवृत्तिः।
मृदुक्रमारम्भमभिन्नधैर्यः श्लथोऽपि दीर्घं रमते रतेषु॥

द्वितीयामनुशयानामुदाहरति——**निद्रालुरिति**। **तन्वि**! हे कोमलाङ्गि! **तत्रापि** पतिगृहेऽपीति भावः। **निद्रालूनि** स्वापशीलानि "स्वप्नक् शयालुर्निद्रालुः" इत्यमरः। **केकिनां** प्रशस्तकेकावतां मयूराणां 'केका वाणी मयूरस्य" इत्यमरः। **मिथुनानि** स्त्रीपुंद्वन्द्वानि, **कपोतपोतैः** पारावतशावकैः **व्याधूताः** कम्पिताः **नूतनाः** नवाश्च ते **महीरुहाणां** वृक्षाणां **पल्लवाः** किसलया येषु तथाविधानि **वनानि** विहारोपयोगिगृहसमीपप्रदेशा इति यावत्। **कियन्ति** कतिसंख्यकानि **न सन्ति** किम्? अपितु सन्त्येवेति भावः। अतो न **खिद्यस्व** खेदं माकुरु **प्रियतमस्य** परिणीतस्य पत्युरित्यर्थः **गृहं प्रयाहि** गच्छ। पतिगृहेऽज्ञाततया सङ्केतस्थलं लप्स्यते नवा तत्र कथं मे चौर्यरतं भावीति भविष्यसङ्केतस्थलचिन्तयाऽनुशयानेयम्। व्याजोक्तिलङ्कारः। वसन्ततिलका च वृत्तम्॥२८॥

**कर्णकल्पितरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः ।**
**निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते ॥२९॥**

---

पल्लवपदेन वनानां स्वरूपेणोद्दीपकत्वम्। प्रियतमेत्यत्र स्वार्थे तमप्। "तरप्तमपौ घः", इति प्रकरणोत्कर्षेण संज्ञाकरणं स्वार्थिका अपि तरबादयः सन्तीति। ज्ञापनार्थमिति सिद्धान्तात्। याने प्रकर्षस्तु उक्तवैमनस्याभावत्वरूपः। अन्यथा पतिगृहगमनसमये तदाकलय्य सर्वेऽप्यसतीभावं प्रतीयुरिति भावः ॥२८॥

**कर्णेति**। मञ्जर्या उत्तंसयोग्यतयान्यैरप्रतर्क्यत्वं व्यङ्ग्यम्। कल्पितपदं तदुत्तंसीकरणार्थमेव तत्र गमनशङ्कानिवारणार्थम्। रसालपदं तादृशोद्दीपकसङ्केतभङ्गप्रयुक्तविप्रलम्भातिशयार्थम्। मञ्जरीपदं वसन्तसमयद्योतनार्थम् । मञ्जरी पुष्पगुच्छविशेषः। पिञ्जरीकृतेति च्विप्रत्ययेन पूर्वकालावच्छेदेन पिञ्जरत्वाभावलाभात्तदातनपिञ्जरत्वस्य मञ्जरीपरागनिवन्धनत्वं लभ्यते। तत्परागाणां कपोलमात्रसंसर्गितया सङ्केतगर्भनिवन्धनवैमत्यनिमित्तकमन्दागमनसूचकम्। यद्यपि रसालमञ्जरीदर्शनमात्रेणापि सङ्केतस्थले तद्गमनानुमितिर्भवत्येव, तथापि कपोलस्यावस्थान्तरप्राप्तिवत्तस्यापि तदलाभेन दुरवस्थासूचनार्थं। पिञ्जरीत्यादि। मण्डलपदं सर्वावच्छेदेन पिञ्जरत्वलाभार्थम्, तेन मञ्जर्या रजोबाहुल्यं तेन तत्खण्डनसमये तस्य त्वराराहित्यम्। तेन कदाचित्पुनरागच्छे-

तृतीयं प्रकारमनुशयानाया दर्शयति—**कर्णेति**। **कर्णे** श्रवसि **कल्पिता** रचिता या **रसालस्य** आम्रस्य "आम्रश्चूतो रसालोऽसौ" इत्यमरः। **मञ्जरी** प्रसूनोद्भेदः, तया **पिञ्जरीकृतं** पीतवर्णतां प्रापितं परागसंसर्गादितिशेषः। **कपोलमण्डलं** गण्डस्थलं यस्य, एवंविधो **मधुरिपुः** श्रीकृष्णः **राधया** नायिकया **निष्पतन्ती** निर्गच्छन्ती **नयनवारीणाम्** अश्रूणामितियावत् **धारा** प्रवाहः यस्याः सा, एवंभूतया सत्या **निरीक्ष्यतेऽ**वलोक्यते ।

स्वयं रसालतलं सङ्केतस्थलमभिधाय कार्यान्तरव्यापृततया तत्र गन्तुमशक्ता राधा रसालमञ्जरीसनाथितकर्णं श्रीकृष्णमवलोक्यायं तत्र गत्वा निराशः समायात इत्यनुशेते। तद्गुणसूक्ष्मालङ्कारयोः सङ्करः। रथोद्धता च वृत्तम् ॥२९॥

मुदिता यथा--

गोष्ठेषु तिष्ठति पतिर्वधिरा ननान्दा
नेत्रद्वयस्य च न पाटवमस्ति यातुः।

दिति सम्भावनया सङ्केतस्थले विलम्ब्य समागत इति व्यङ्ग्यम्। कपोलमञ्जर्योराधाराधेयभावप्रतीतेः पुरुषायितप्रवृत्तकामिनी-वृत्तान्तावगमात् स्वस्य तदलाभकृतदुःखातिशयस्तेन च विप्रलम्भोत्कर्षो व्यङ्ग्यः। तदुक्तम्--

सम्भोगसुखसम्भिन्नो विप्रलम्भस्तु दुःखयुक्।
रतिस्तयोः प्रकर्षः स्यादुत्कर्षात् सुखदुःखयोः॥

यद्वा--अतिसौरभमञ्जरीपरागच्छुरितं प्रेक्ष्य कपोलमीक्षितस्य।

स्वविभेदवदङ्गतोपभोगव्यवहारव्यवसायमाससाद ॥

यद्वा--धन्येयं रसालमंजरी या मदीयबिम्बाधररागरञ्जनयोग्यं दयिततमस्य कपोलबिम्बं स्वपरागै रञ्जयति। अहं तु च्युतसङ्केता तदभावादधन्येत्यनुतापो विप्रलम्भोत्कर्षाधायकतया व्यङ्ग्यः। निःशेषेण पतन्तीति पक्ष्माग्रविघटनाभावाद्बाहुल्यं व्यङ्ग्यम्। शतृप्रत्ययेनाव्यवधानेन धारान्तरोत्पत्तिसूचनम्। स्वेदनिपाते तस्या अपि सङ्केतदेशगमनमित्याशङ्का स्यादतो नयनेति। निरीक्ष्यते निःशेषेण दर्शनविषयः क्रियते इत्युत्कण्ठातिशयः। तदुक्तम्--

"आपिबन्तीव दृश्यं या सविकासानिमेषिणी।" इति।

सङ्केतभङ्गदुःखेन अनिमेषदर्शनाच्चाश्रूत्पत्तिर्बोध्या। तदाह भरतः--

आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाभयाच्छोकात्।
अनिमिषप्रेक्षणतः शीताद्रोगाद्भवेदस्रम्॥

राधायाश्च कन्यात्वादेव परकीयात्वम् नतु परपरिणीतत्वात्, महालक्ष्म्यवतारतया तदनौचित्यात्। आथर्वणे शौनकशाखायां गोपालतापन्यां "राधादामोदरौ पूज्यौ" इत्युक्तेः। "वाराणस्यां तु विमला राधा वृन्दावने वने" इति पाञ्चरात्रोक्तेश्च॥२९॥

**गोष्ठेष्विति**। गावस्तिष्ठन्त्यत्र गोष्ठम्। "अम्बाम्बगोसव्येति" षत्वम्। एतेनाविदग्धत्वं द्योत्यम्। बहुत्वेन चिरकालेन पुनरागमनं व्यङ्ग्यम्।

इत्थं निशम्य तरुणीकुचकुम्भसीम्नि
रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥ ३० ॥

तिष्ठतीत्यनेन प्रतिगोष्ठं स्थितिलाभात् तदेव व्यङ्ग्यम्। बहूनामपि दर्शनमात्रस्याल्पकालसाध्यत्वात्। पातीति पतिरिति व्युत्पत्त्या स्वानुरागाविषयत्वम्, अन्योपभोगप्रतिबन्धकत्वं च व्यङ्ग्यम्। "ननान्दा तु स्वसा पत्युः" इत्यमरः। "न नन्दति भ्रातृजायामिति" क्षीरस्वामी। "नञि च नन्देः" इति ऋत् प्रत्ययः। केचिदत्र वृद्धिं नानुवर्तयन्ति। "ननान्दा नन्दिनीव सा" इति शब्दार्णवादित्युणादिवृत्तिकाराः। बधिरत्वं श्रोत्रेन्द्रियोपघातः। यद्यपि तस्याकाशरूपतया नाशो न सम्भवति, तथाप्यदृष्टविशेषोपग्रहाभाव एव कर्णशष्कुलीनिष्ठ उपघात इति सिद्धान्तः। अत्र प्रत्यवतिष्ठन्ते। बधिराया दर्शनस्यापटुनयनायाश्च श्रवणस्य सम्भवात्कथं सङ्केतकरणौचित्यमिति। तत्र ऋजवः—प्रतिबन्धकविशेषाभाव एवात्र विवक्षितो न तु सामान्याभाव इति। केचित्तु "बधिरस्य श्रवणमूकत्वाद्दृष्टमप्यनया वक्तुमशक्य मिति दर्शनेऽपि न क्षतिः। उत्तरत्र चकारेण श्रोत्रयोरपि पाटवविरहो व्याख्येयः" इत्याहुः। नव्यास्तु "ननान्दुर्वृत्तिव्यवहितदेशवर्तित्वेन दर्शनानुपपत्त्या तत्र श्रवणसामर्थ्याभाव एवोक्तः, यातुश्च श्रवणानर्हदेशवर्तितया तत्र दर्शनाशक्तिरेवोपन्यस्ता" इत्याहुः।

अथ मुदितामाह—**मुदितेति**। उदाहरति—**गोष्ठेष्विति**। **पतिः** भर्ता **गोष्ठेषु** गोकुलेषु "व्रजःस्याद् गोकुलं गोष्ठम्" इति धनञ्जयः। **तिष्ठति** निवसति न तस्यात्रागमनसम्भावनेतिभावः। **ननान्दा** पत्युः स्वसा तु **बधिरा** एडा उपहतश्रवणेन्द्रियेति यावत्। 'अकर्ण एडो बधिरः" इति हैमः। **यातुः** देवरपत्न्याः **नेत्रद्वयस्य** द्वयोरप्यक्ष्णोः **पाटवं** कुशलत्वं च नास्ति, न सा सम्यक्पश्यतीतिभावः। **इत्थम्** एतत्प्रकारकं वचः **निशम्य** आकर्ण्य कुतोऽपीतिशेषः। **तरुणी** युवती कुचौ कुम्भाविवेति **कुचकुम्भौ** स्तनकलशौ तयोः **सीम्नि** प्रान्ते **उदञ्चितं** उद्गतमुत्कृष्टं वा **रोमाञ्च** एव **कञ्चुकः** चोलकस्तम्। "रोमाञ्चो रोमहर्षणः" इत्यमरः। **आततान** विस्तारयामास। भर्तृगृहे भूयानवसरश्चौर्यरतस्येति मुदितेयमिति तात्पर्यम्। उपमारूपकानुप्राससंसृष्टिरलङ्कारः, वसन्ततिलका च वृत्तम् ॥ ३० ॥

**कन्यका यथा—**

**किंचित्कुञ्चितहारयष्टि सरलभ्रूवल्लि साचि स्मितं**
**प्रान्तभ्रान्तविलोचनद्युतिभुजापर्यस्तकर्णोत्पलम्।**

---

पूर्वार्द्धं च पान्थं प्रति सख्या उक्तिः अतएव वाग्विदग्धातो भेदः। निशम्येति। शाम्यतेर्दैवादिकस्य रूपम्। "निशम्यनिशमय्यशब्दौ प्रकृतिभेदात्" इति वामनोक्तेः। अतएव निशाम्यतीति श्रवणे तथा निशमयतीत्यपि भट्टमल्लेनोक्तम्। तरुणीति। तदुपभोगप्रियत्वं द्योत्यम्। कुचौ कुम्भाविवेत्युपमितसमासः। रूपकाश्रयणे कुचप्राधान्यभङ्गापत्तेः। कुम्भपदं चात्र कलशपरम्। करिगण्डेति व्याख्यानं तूपेक्ष्यम्। निरुपपदकुम्भशब्दस्य शीघ्रमेव कलशबोधकत्वात्। सीमपदं स्वरूपार्थकम्। कञ्चुकत्वारोपेण सुरतस्य युद्धरूपत्वध्वनिः। "मोहनं मदनयुद्धमूचिरे" इति कामशास्त्रोक्तेः। एतेन निर्दयसम्भोगोज्जृम्भणं भावीति व्यङ्ग्यम्। तत्रालिङ्गनस्य सर्वापेक्षयापूर्वभावित्वात् कुचयोस्तदुद्यतयोः कञ्चुकित्वमर्हम्। "आदौ रतं वाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनपूर्वमेव" इत्युक्तेः॥३०॥

**किञ्चिदिति।** "ऊर्मिमत्कुञ्चितं नतम्" इत्यमरः। तिर्यग्वलनमनेन व्यज्यते। बहुविवर्तनेऽन्येषां शङ्का स्यादिति किञ्चिदित्युक्तम्। एतेन वलिताख्यं ग्रीवाकर्मोक्तम्। "पार्श्वोन्मुखी तु वलिता ग्रीवाभङ्गे तथेक्षणे" इति शार्ङ्गदेवः। सरला स्वाभाविकी भ्रूवल्लिर्यत्र। गोपनार्थं तद्विकारानुत्पत्तेः। एतेन सरले अकुटिले इति व्याख्यातम्। वल्लीति स्त्रीलिङ्गेन स्वीयस्वाभाविककौटिल्यस्यापि त्यागे च कामुकविषये प्रेमातिव्यंङ्ग्य इति च निरस्तम्। एवं च किञ्चिद्विवर्तनेनापि केषाञ्चिदनुरागशङ्का स्यादेवेति तद्व्यावृत्त्यर्थं सरलेत्युक्तम्। साचि तिर्यक् स्मितं यत्र। यावता विवर्तनेन नायको दृश्यते तदपेक्षयाधिकं वलनमत्र बोध्यम्। अन्यथा सचीत्यास्य वैयर्थ्यापत्तेः। तेन स्मितस्य नायकादपि गोपनं सूच्यते। प्रान्ते स्वमीपदेशे भ्रान्ता नायकमपहाय क्षणं लग्ना विलोचनयोर्द्युतिर्यत्र। इदमन्यैर्दृष्टं न वेति सम्भावनया शङ्किता दृष्टिरियम्। यथा भरतः-

**अङ्गुल्या स्फुरदङ्गुलीयकरुचा कर्णस्य कण्डूयनम्**
**कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते ।।३१।।**

---

किञ्चित्प्रवेपिताङ्गस्तथोन्मुखो वीक्षते च पार्श्वानि ।
गुरु सज्जमानकण्ठः श्यामास्यः शङ्कितः पुरुषः ।।

केचित्तु "प्रान्तयोरपाङ्गयोर्भ्रान्ता । तेन कामुको दृङ्मार्गान्मापसरत्विति विरहभीरुत्वध्वनिः" इत्याहुः । "भुजाया पर्यस्तं क्षिप्तं कर्णोत्पलं यत्र । एवं च भुजायां कदा त्वत्करकमलसङ्गो भावीत्युत्कण्ठा ध्वन्यत" इति केचित् । वस्तुतस्तु भुजया पर्यस्तं क्षिप्तं कर्णोत्पलं यत्रेति समासः । सरभसविवर्तनेन कर्णोत्पलस्य भुजशिरःसङ्घट्टजन्यक्रियया पातोपपत्तेः । न च कर्णनिष्ठक्रिययैव तदुपपत्तिरिति वाच्यम् ; तत्र तादृशक्रियाविरहात् । मन्दतयैव विवर्तनस्य वाच्यत्वात् । यथोक्तरीत्या तु मन्दविवर्तनेऽपि स्कन्धसंयोगेन तादृशक्रियोपपत्तेः । "अङ्गुलीयकमूर्मिका" इत्यमरः । "जिह्वामूलाङ्गुलेश्छः" इति छ प्रत्ययः । रुचिसम्बन्धेन स्वाशयप्रकाशकत्वं व्यङ्ग्यम् । स्फुरणं चाङ्गुलिकम्पेन मुद्रा मणेरपि कम्पात्तदीयप्रभाया अपि बोध्यम् । प्रभायास्तेजोरूपतया चलनस्य स्वाभाविकत्वे-

परकीयायाः प्रथमं परोढाभेदानुक्त्वावसरप्राप्तं कन्यकाख्यं द्वितीयं प्रकारमाह-**कन्यकेति** । उदाहरति—**किञ्चिदिति** । **किञ्चिद्** ईषत् **कुञ्चिता** वलयिता **हारयष्टिः** मुक्तालता यस्यां क्रियायामेवं कुर्वाणेत्यनेनान्वयः । **सरला** स्वाभाविकी **भ्रूवल्ली** भृकुटिलता यस्यामेवं । **साचि** **तिर्यक्** **स्मितं** मन्दहास्यं यस्यामेवम् । **प्रान्तेऽपाङ्गे** **भ्रान्ता** विचलिता **विलोचनस्य** नेत्रस्य **द्युतिः** कान्तिः यस्यामेवम् । **भुजया** वाहुना **पर्यस्तं** परिक्षिप्तं पतनोन्मुखमितिशेषः । **कर्णोत्पलं** कर्णावतंसकमलं यस्यामेवम् । **स्फुरन्ती** दीप्तिमती **अङ्गुलीयकस्य** मुद्रिकाया **रुक्** कान्तिः यस्या एवं भूतया **अङ्गुल्या** करशाखया **गण्डस्य** कपोलस्य **कण्डूयनं** कर्षणं **कुर्वाणा** विदधती काचित् **नृपकन्या** काऽपि राजदुहिताऽपरिणीतेति भावः । **सुकृतिनं** कमपि धन्यतममिति यावत् । **सव्याजं** साकूतम् **आलोकते** सस्पृहं पश्यति । प्रतिपदमस्या अभिप्रायसूचनं तु समञ्जसायां द्रष्टव्यम् । काव्यलिङ्ग-रूपकस्वभावोक्तीनां संसृष्टिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।।३१।।

**वित्तमात्रोपाधिकसकलपुरुषानुरागा सामान्यवनिता।**

**नन्वग्निमित्रे क्षितिपतावनुरक्तायामैरावत्यामव्याप्तिः, वित्तमात्रोपाधेरभावात्, इतिचेत्। मैवम्। सापि काश्मीरहीरादिदातरि महाराजेऽनुरक्ता न तु महर्षौ। तेनावगम्यते तत्रापि वित्तमात्रोपाधिरिति।**

---

ऽप्याश्रयचलनानुविधायित्वात्। गण्डस्येति पाठ उपेक्ष्यः। कर्णकण्डूयनस्यैवानुरागव्यञ्जकत्वात्। "कर्णकण्डूयनं तद्वत्कबरीमोक्षसंयमौ" इति तत्प्रकरणे साहित्यदर्पणोक्तेः।

"दीपं घट्टयति प्रमार्ष्टि शयनं हस्ताम्बुजेन श्रुतिम्।
सेयं वामकनिष्ठया सवलयक्वाणं च कण्डूयते।।
इति कामशास्त्रोक्तेश्च। एतेन मोट्टायितं सूच्यते।
तद्भावभाविते चित्ते वल्लभस्य कथादिषु।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम्।। इति दर्पणः।

नृपपदं दुर्लभत्वसूचनार्थम्। "सुकृती पुण्यवान् धन्यः" इत्यमरः। व्याजः पार्श्वगतसख्यादिदर्शनादिरूपादेशः। यत्तु "यस्त्यक्ष्यते स यूपः इतिवत् यं पश्यति स सुकृतीति वचनव्यक्तिः" इति। तच्चिन्त्यम्। यत्र यूपत्वस्य तत्क्षणोत्तरकालीनतया वचनभङ्गाश्रयणेऽपीह अत्र सुकृतस्य तद्दृश्यत्वेऽपि हेतुत्वोपपत्त्या तदालम्बने प्रमाणाभावात्। परेषां सुकृतानुमितेरेव तद्दर्शनोत्तरकालत्वात्। एवं च यद्विषयकदर्शनमप्यल्पपुण्यैरलभ्यं तत्समवेतदर्शनविषयत्वं वहुसुकृतसाध्यमेवेतिभावः। यत्तु "उक्तचेष्टाया नायिकान्तरेऽपि सम्भवात्। कन्यकोदाहरणं न युज्यते" इत्यामोदकृतोक्तं, तदसत्। अप्रयोजकत्वात्।। इति परकीयानिरूपणम्।।

**वित्तमात्रेति।** वित्तेतरानुपाधिकत्वे सति सोपाधिकसकलपुरुषानुरागित्वमित्यर्थः। सकलपदं च पुरुषविशेषविषयकत्वनियमविरहमात्रसूचनार्थम्, नतु लक्षणे तत्प्रयोगो व्यभिचारावारकत्वेन वैयर्थ्यात्।

ननूपाधिः प्रयोजकमात्रं तथा च स्वरूपासिद्धिः। वित्तेतरस्य यौवनादेरपि तदनुरागे प्रयोजकत्वात्। अन्यतरस्य तदनुभावे तदनुरागानुल्लासात्। उच्यते। नायिकान्तरानुरागेऽदृष्टातिरिक्तानां यावतां कारणत्वं क्लृप्तं तत्सत्त्वेऽनुरागाभावप्रयोजकाभावप्रतियोगित्वमेवात्रोपाधित्वम्। अस्ति च वेश्यायां रूपयौवनादिरूपगुणवत्यपि नायके वित्ताभावप्रयुक्तोऽनुरागाभावः।

एवं च सति यथोक्तकारणकलापेऽदृष्टविरहादिनाऽननुरक्तायां परकीयायां न व्यभिचारः। वित्तेतरस्यादृष्टस्यैव तत्रानुरागाभावप्रयोजकाभावप्रतियोगित्वात्। स्यादेतत्। इरावत्यामव्याप्तेरुक्तरीत्या परिहारेऽपि चारुदत्तेऽनुरक्तायां वसन्तसेनायामव्याप्तितादवस्थ्यम्। एवं दशकुमारप्रसिद्धायां कालमञ्जर्यामपि बोध्यम्। रूपमात्रधने विप्रयूनि स्वेनैव व्ययेन रममाणया मासमात्रमत्यवाहीति तत्रोक्तेः। एवं तद्भगिन्यामपि रागमञ्जर्याम्। गुणशुल्काहं न धनशुल्केति तत्प्रतिज्ञादर्शनात्। एवं प्रत्यक्षप्रसिद्धास्वपि कासुचिद्वेश्यास्वव्याप्तिर्दुर्वारेति।

एतेन "इरावतीवसन्तसेने वित्तेतरानुपाधिकवित्तोपाधिकाग्निमित्रचारुदत्तानुरक्ते, अदात्रनुरागाभावविशिष्टरत्नादिदानशीलाग्निमित्रचारुदत्तानुरागवत्त्वाद्"इति निरस्तम्। वसन्तसेनांशे हेतोः पक्षावृत्तित्वात्। न च चारुदत्तस्य धनवत्तादशायां तदभावेनानुरक्तत्वापत्तेः। नचेष्टापत्तिः। दारिद्र्यदशायामपि तदनुरागस्य मृच्छकटिकायां प्रबन्धेन गम्यमानत्वात्। प्रत्युत न्यासव्याजेन स्वालङ्करणादेश्चारुदत्ताय तया दत्तत्वाच्च।

एतेन "सामान्यवनितात्वस्योपाधेः कालिकमव्याप्यवृत्तित्वम्। प्रथमतस्तासां वित्तविरहिणि नानुरागः। चिरपरिचयोत्तरं तु सौन्दर्यादिनानुराग इति, तदवस्थायां नास्त्येव सामान्यवनितात्वम्। परकीयायामेव तदन्तर्भावसम्भवात्। परकीयानुरागस्यापि सर्वान् प्रत्यप्रकटत्वाभावाद्"इति निरस्तम्। तत्रोक्तस्याप्रकटपदार्थस्य प्रकृते दुर्वचत्वाच्च काममञ्जर्यादावव्याप्तेस्तदवस्थत्वात्, चिरपरिचयो-

त्तरमेवानुराग इत्यत्र प्रमाणाभावात् । "एतेन सामान्यवनितेयमित्याकारकानुगतप्रतीतिसाक्षिकं सामान्यविशेष एव सामान्यवनितात्वम्" इत्यपि निरस्तम। शाब्दात्मकानुगतप्रतीतेर्जात्यसाधकत्वात्। प्रत्यक्षात्मकतत्प्रतीतेश्चासिद्धत्वात्।

न च विशुद्धमातापितृजन्यत्वज्ञानसापेक्षमिन्द्रियं यथा ब्राह्मणत्वव्यञ्जकं तथा वित्तमात्रोपाधिकानुरागवत्त्वज्ञानं परोक्षात्मकसामान्यवनितात्वव्यञ्जकम्, तत्सापेक्षमिन्द्रियं च तत्प्रत्यक्षजनकमिति वाच्यम्; तद्व्यतिरेकेऽपि सामान्यवनितेयमित्यनुगतव्यवहारदर्शनात्। अत्रोच्यते। स्वकार्याभावप्रकारकेच्छायां जनकं यज्ज्ञानं तन्निरूपिता या स्वविषयनिष्ठविशेष्यता तन्निरूपितप्रकारताशालिन्यभावे प्रतियोगितासम्बन्धेन प्रकारतापन्नत्वमेवात्रोपाधित्वम्। स्वपदमुभयत्राप्यनुरागपरम् । तत्कार्यं च सम्भोगः, तदभावप्रकारिका इच्छा, अनयोः सम्भोगो माभूदित्याकारा, तज्जनकं ज्ञानम् अयं वित्ताभाववानित्याकारकम्, तन्निरूपिता या अनुरागविषयविशेष्यता तन्निरूपितप्रकारताशाली वित्ताभावः। तत्र प्रतियोगितया वित्तं प्रकार इति। तादृशं च ज्ञानं प्रायेण सामान्यवनितानिष्ठमेव। काममञ्जर्यादौ तु तन्मात्रादिनिष्ठमिति न दोषः। एकोपरुद्धायामपि सामान्यवनितायां तादृशज्ञानमिच्छा चास्त्येव। असामर्थ्यात्तु इच्छाविषयानुपधानम् । एवं च रूपादिविशेषस्य वेश्यानुराग एव नास्तीत्यस्य प्रत्यक्षविरुद्धतया वक्तुमशक्यत्वात् । तदुक्तं दर्पणे—

एषापि मदनायत्ता क्वापि सत्यानुरागिणी।
रक्तायां वा विरक्तायां रतमस्याः सुदुर्लभम् ॥इति॥

विज्ञानेश्वरस्त्वाह—पुरुषसम्भोगवृत्तिवश्येति। पुरुषसम्भोग एवं यस्या धनागमे हेतुरिति तल्लक्षणार्थः। स्वीयायां तु भार्यात्वमात्रेण भर्तृद्रव्ये स्वत्वोत्पत्त्या नातिव्याप्तिः। न च—

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्॥

इति स्मृत्या भार्याया द्रव्ये स्वत्वमेव नास्तीति वाच्यम्; अस्याः स्वातन्त्र्याभावमात्रे तात्पर्यात्। अतएव "अग्नीनादधीयाताम्" इत्यत्र दम्पत्योर्व्यासक्तं कर्तृत्वमिति पूर्वमीमांसायां निर्णीतम्। इत्यास्तां विस्तरः॥

**सामान्यवनिता यथा—**

**दृष्ट्वा प्राङ्गणसन्निधौ बहुधनं दातारमभ्यागतं**
**वक्षोजौ तनुतः परस्परमिवाश्लेषं कुरङ्गीदृशः।**
**आनन्दाश्रुपयांसि मुञ्चति मुहुर्मालामिषात्कुन्तलो**
**दृष्टिः किं च धनागमं कथयितुं कर्णान्तिकं गच्छति॥३२॥**

---

**दृष्ट्वेति।** दर्शनमात्रेण तादृशावस्थोत्पत्त्या लोभातिशयलाभः, प्रयोजनान्तराभावसहकारेण तस्य स्वसम्भोगार्थसमागमनानुमानादित्यर्थः। अङ्गने प्रकर्षस्तु दूरादेव कामुकदर्शनानुकूलत्वम्। अङ्गनाद्दूरतस्तद्दर्शनेऽप्यन्यत्र गमनसम्भावनया प्रहर्षानुत्पत्त्या

स्वीया-परकीयाभेदनिरूपणानन्तरं सामान्यवनितां निरूपयितुमुपक्रमते—**वित्तमात्रेत्यादि। वित्तं धनं तदुपाधिकः** तत्प्रयोज्यस्तदितराप्रयोज्य इतिभावः। **सकलपुरुषेषु** निर्गुणेषु गुणवत्सु वेति तात्पर्यम्। **अनुरागः** प्रेमत्वेन व्यपदेशः यस्या एवं भूता **सामान्यवनिता** उच्यत इतिशेषः।

लक्षणेऽव्याप्तिमाशङ्कते—**नन्विति**। ननु **अग्निमित्रे** तन्नामके **क्षितिपतौ** राजनि **अनुरक्तायां** विहितानुरागायाम् इरावत्यां तदभिधानायां गणिकाया**मव्याप्तिः** न तत्र लक्षणं व्याप्येतेत्यर्थः। **वित्तमात्रोपाधेरभावात्** न सा वित्तमात्रलोभात्तत्रानुरक्तासीत् किन्तु सौन्दर्यलोभादेवेतिभावः। इत्युच्यते चेत्। **मैवम्** एवं वक्तव्यमित्यर्थः। **सापि** इरावती **काश्मीरः** केसरः **हीरकादि** मणिरत्नादि तेषां **दातरि** महाराजे नृपे, य एवं महर्घवस्तुदाने समर्थस्तस्मिन्नेवेत्यर्थः। **अनुरक्ता** विहितानुरागाऽभवत्, **नतु महर्षौ** कस्मिंश्चिदकिञ्चन इति यावत्। **तेनावगम्यते** एतेन प्रतीयते **तत्रापि** राजन्यनुरागे **वित्तमात्रोपाधिरिति** सोऽप्यनुरागो वित्तनिमित्तक एवेति भावः॥[1] **महर्षौ** निष्किञ्चनेऽदातरि **सौन्दर्योपाध्यनुरागस्य** केवलं सौन्दर्यादिनिमित्तकासक्तेः **कालिकाव्याप्यवृत्तित्वेन** यावद्धनं तावदनुराग इति व्यवहारवत्त्वेनेति भावः। **सार्वत्रिके** सर्वत्रकरणीये लक्षणे **वित्तमात्रैवोपाधिरिति प्रतिभाति** प्रतीयते।

---

१. रसमञ्जरीकारस्येदं लक्षणं तत्राग्रहश्च नास्मभ्यमपि रोचते। वसन्तसेनादीनां दरिद्रचारुदत्तेऽनुरागदर्शनात् प्रचुरवित्तदातुः शकारादेस्तिरस्करणाच्च। शृङ्गारमञ्जरीकारस्येदं लक्षणमपेक्षया समीचीनं यत्-किंचित्फलनिमित्तकानेकपुरुषसम्भोगा सामान्येति।

सन्निधावित्युक्तम् । स च यद्देशवृत्तेरङ्गणोद्देशेनागमनमावश्यकं तादृशदेशरूपो ग्राह्य:। अत एवाभ्यागतमित्युक्तम्। अङ्गणसाम्मुख्यस्यागमने बोधात्।

दारिद्र्यवारणाय बहुधनमिति । कार्पण्यवारणाय दातारमिति। अभ्यागतशब्देनातिथित्वाक्षेपात्प्रथमागतत्वं व्यङ्ग्यम्। न चैवं तस्य बहुधनत्वदातृत्वयोर्बोधानुपपत्तिः; प्रसिद्ध्यादिना तत्सम्भवात्। तेन बहुधनमस्य शुल्कतया ग्राह्यमितिभाव:। अन्यदाप्यागमने शुल्कस्य निश्चिततया प्रहर्षविशेषानुदयात् । शुल्कस्य पूर्वगृहीतत्वेऽपि पुनस्तदधिकस्य दुर्लभत्वात्। प्रत्युत—

शुल्कमादाय नेच्छन्ती पण्यस्त्री द्विगुणं वहत्।
दत्त्वा शल्कमनिच्छंस्तु शुल्कहानिमवाप्नुयात्।।

इति नारदवचनात्, द्विगुणप्रत्यर्पणप्रसङ्गात्।

वक्षोजावित्यनेन हृदयस्य प्रायशो मनोऽधिष्ठानतया तद्वार्ताभिज्ञत्वात्प्रथमं हर्षोत्पत्तिरिति सूच्यते । एककर्मजत्वस्याश्लेषे वारणाय परस्परमिति। तेनोक्तार्थस्योभाभ्यां ज्ञाने तद्विषयविषयकत्वरूपसंवादात्प्रामाण्यसूचनम्। एकमात्रनिष्ठज्ञाने भ्रमत्वस्यापि सम्भवात्। केचित्तु "हारप्राप्तिसम्भावनया तयोर्हर्ष" इत्याहुः। आश्लेषपदेन गाढत्वलाभात्कुचयोरतिनिविडत्वध्वनिः। श्लथत्वेऽपि कदाचित्परस्परसंयोगात्तनुत इत्युक्तम्। विस्तारश्च चिरकालावस्थापितत्वरूपः

सामान्यवनितामुदाहरति—**दृष्ट्वेति। प्राङ्गणसन्निधौ** प्रकृष्ट मङ्गणं प्राङ्गणं दीर्घाजिरं, "अङ्गणं चत्वराजिरे" इत्यमरः। तत्सन्निधौ तत्समीपे **बहुधनं** वित्ताढ्यं **दातारम्** उदारं नतु कृपणमितिभाव:। **अभ्यागतं** नवीनपुरुषं **दृष्ट्वा**ऽवलोक्य **कुरङ्गीदृशः** मृगाक्ष्याः **वक्षोजौ** स्तनौ **परस्परमन्योन्यम् आश्लेषम्**आलिङ्गनं **तनुतः** विशेषेण कुर्वाते इवेत्यर्थः। **कुन्तलः** केशपाशः कुन्तलाः कचाः सन्त्यस्मिन्, अर्शादित्वादच्, "चिकुरः कुन्तलो बाल" इत्यमरः । **मालामिषात्** पुष्पमालाव्याजेन **मुहुः** भूयोभूयः **आनन्दाश्रुपयांसि** प्रमोदजनिताश्रुजलानि **मुञ्चति** त्यजति। किञ्च **दृष्टिः** नेत्रमितियावत् **धनागमं** वित्ताप्तियोगं **कथयितुं कर्णान्तिकं** कर्णप्रदेशं यावत् **गच्छति** याति। वित्तागमाशयात्तस्या आनन्दातिरेकेणाङ्गानि स्फारतां गतानीवेत्युत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं वृत्तम्।।३२।।

स च तयोः काठिन्यातिशयव्यतिरेकेऽनुपपन्न इति काठिन्यविशेषसूचनम्। इव शब्दः सम्भावनायाम्। तथा च कुचयोः स्वाभाविकपरस्परसंयोग उक्तप्रहर्षजन्यालिङ्गनप्रकारकतादात्म्यसंसर्गकसम्भावनाविषय इति बोधः। विषयस्य च शब्दानुपात्तत्वादनुपात्तविषयत्वं सम्भावनायां बोध्यम्। न ह्युत्प्रेक्षायां विषयस्य शाब्दमुपादानं नियमतऽपेक्ष्यम्।

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव वद्धमौनम्॥

इत्यत्र स्वाभाविकनिःशब्दत्वरूपे विषये उक्तदुःखहेतुकमौनस्याऽभेदसम्बन्धेनारोप इति प्राचीनैरभ्युपगमात्। इत्यन्यत्र विस्तरः।

न च दर्शनस्य नायिकाकर्तृत्वात् तनुत इत्यत्र कुचयोः कर्तृत्वाभिधानमयुक्तम्, समानकर्तृकत्वाभावे त्तवाप्रत्ययानुपपत्तेरितिवाच्यम्; स्थितताया इति विशेषणस्याध्याहारात्। वस्तुतस्तत्रैव दर्शनारोपात्। एतावता तस्य स्वविषयकानुरागज्ञानाभावात्। तदनुमापकमाह—आनन्देति। कुन्तलपदं धम्मिल्लरूपसंस्थानविशेषपरित्यागावस्थासूचनार्थम्। मालाया मिषात् व्याजादित्यपह्नुतिः "प्रकृतं यन्निषिध्यान्यत्स्थाप्यते सा त्वपह्नुतिः" इति। आर्थोऽपह्नवः। नेयं माला किंतु आनन्दवाष्पाणीति मिषपदसमभिव्याहारेणार्थान्मालानिषेधप्रतीतेः। कुचवाहुमूलप्रदर्शनार्थं कवरीमोक्षारम्भात्तद्गुम्फितमालाकुसुमानां मोक्षक्रमेण निपातसूचनार्थं मुहुरित्युक्तम्। तदुक्तं कामशास्त्रे—

पत्युः प्रत्यवलोकनं भवति चेत् स्मेरानना नेह सं-
जिज्ञासत्यलसायते च कवरीं नीवीं च वध्नात्यलम्॥

वन्धो मोक्षस्याप्युपलक्षणम्। "कवरीमोक्षसंयमौ" इति साहित्यदर्पणोक्तेः। पश्चादप्युक्तम्—

एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः।
मध्यव्रीडानि मध्यायाः स्रंसमानत्रपाणि तु।
अन्यस्त्रियाः प्रगल्भायास्तथास्युर्वारयोषितः॥

**एता अन्यसम्भोगदुःखिता-वक्रोक्तिगर्विता-मानवत्य-श्चेति तिस्रो भवन्ति ।**

---

केचित्तु "स्वाभिलाषप्रकटनाय शिरसि चेलाञ्चलदाने कचादि-सम्पर्केणाङ्गयष्टिकम्पेन वा पुष्पच्युतिः" इत्याहुः। तदुक्तं दर्पणे--

काचित्कुन्तलसंव्यानसंयमव्यपदेशतः ।
वाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम् ॥

अस्या अपि चेष्टायाः पूर्वोक्तनायकेन स्वविषयकत्वं यथा ज्ञायता-मित्येतदर्थमाह्--दृष्टिरिति । किंचेत्यधिकोक्तौ। कर्णान्तिकं गत्वा रहस्यवार्ताया एव कथनाद्वनागमस्य तां प्रति तथात्वं सूच्यते। कथयितुं शब्देन बोधयितुमित्यर्थः। तथा च नायकदर्शनार्थं दृष्टेरपाङ्गदेशगमनोक्त्या कटाक्षस्यानुरागव्यञ्जकत्वनियमात्। तस्य स्वविषयकतन्निष्ठानुरागज्ञानोपपत्तिरित्यर्थः।

। इति सामान्यानिरूपणम् ।

**अन्यसम्भोगेति** । अन्यस्याः सम्भोग इति कर्मषष्ठ्या समासः। कर्मणि चेति निषेधस्योभयप्राप्तौ कर्मणीत्येतत्सूत्रविहितषष्ठी-विषयकत्वात् । "सर्वनाम्नो वृत्तिमात्रे" इति भाष्यवचनात् पुंवद्-भावः । स्वरूपसतोऽन्यसम्भोगस्य दुःखानुत्पादकत्वाज्ज्ञानलाभः। न च खण्डितातो भेदकाभावः; तत्र नायकनिष्ठचिह्नदर्शनान्ना-यिकान्तरसम्भोगानुमितिरत्र तु नायिकानिष्ठचिह्नदर्शनादिति विशेषस्य स्फुटत्वात्। अन्यसम्भोगश्च स्वप्रियकर्तृको ग्राह्यः। तथा च स्वप्रियकर्तृकनायिकान्तरसम्भोगजन्यदुःखवतीति पर्यवसितार्थः।

उक्तानां पुनर्भेदान्तराण्याह—**एता इति। एताः** पूर्वमुक्ताः स्वीया-परकीया सामान्याख्याः, **अन्यसम्भोगदुःखिता** अन्यस्याः सम्भोगेन सुरतास्वादनेन नायक-द्वारेति शेषः **दुःखिताः** क्लेशंगताः, **वक्रोक्त्या** व्यङ्गयवचनैरितियावत् **गर्विताः** गर्वं प्रकटयन्त्यः, **मानवत्यः** नायकापराधबोधकव्यापारबोध्यो रोष एव मानः, स आसामस्तीति, रुष्टा इतिभावः। **इति एवं तिस्रः** त्रिविधाः **भवन्ति**। एताः प्रत्येकं पुनः त्रिविधा भवन्तीत्यर्थः। मुग्धायास्तु धीराधीरादिवन्नैतत्त्रिविधत्वं सम्भाव्यते लज्जाभयातिरेकात्।

**अन्यसम्भोगदुःखिता यथा––**

**त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम्।**
**किंशुकाभरणो देहो दृश्यते कथमन्यथा ॥३३॥**

---

ननु प्रियनिष्ठचिह्नदर्शने स्वसम्भोगाभावस्य स्वप्रत्यक्षतया तस्य नायिकान्तरसम्भोगजन्यत्वज्ञानं सम्भवति। नायिकानिष्ठ-चिह्नदर्शने तु स्वप्रियभिन्नेनापि नायकेन तत्सम्भोगसम्भवात् स्वप्रियसम्भोगजन्यत्वानिर्णयो दुर्घट इति चेत्। सत्यम्। स्वप्रिय-सन्निधानस्य प्रमाणान्तरेणावगमेऽनुपस्थितनायकान्तरसम्भोगस्य कल्प-नानर्हतया स्वप्रियसम्भोगजन्यत्वस्यैव कल्पनात्।

**वक्रोक्तीति**। उक्तिव्यङ्ग्यगर्वेत्यर्थः। गर्वश्च द्विविधः। नायिका-न्तरापेक्षयाऽतिशयेन स्वप्रियानुरागविषयत्वप्रकारकस्वविशेष्यकज्ञान-जन्यः। अन्यापेक्षया विजातीयसौन्दर्यप्रकारकस्वविशेष्यकज्ञानजन्यश्च। आद्या प्रेमगर्विता द्वितीया सौन्दर्यगर्वितेति वक्ष्यति। मानवत्यग्रे निरूपयिष्यते॥

**त्वं दूतीति**। त्वमिति स्वीयतथाविधविश्रम्भपात्रत्वं व्यङ्ग्यम्। दूतीति मिथ्याभाषणशीलत्वम्। सम्बोधनविभक्तेरनुवाद्यविषयकत्वाद् दूत्येनैव विशिष्टत्वं व्यङ्ग्यम्। एतेन तद्रञ्जनसमर्थायास्तदन्तिक-प्रेषणात् स्वस्यावमानो व्यज्यते। तथा च भरतः––

मृजा रूपवयोवेषमर्थवन्तं जनं तथा।
दूतं वापि हि दूतीं वा न कुर्याद्वैशिकाश्रये॥

प्रथमं प्रकारमुदाहर्तुमुपक्रमते––**तत्रेति**। **त्वमिति**। **हे दूति**! सन्देशवाहिके! **त्वं** मत्प्रेषितेति शेषः। **कुञ्जं** लतागृहं **निरगाः** अगमः **पापीयसः** अतिशयकलुषजुषः तस्य नायकस्येतिभावः। **गृहं** भवनं **तु न** न निरगाः इत्यर्थः। **अन्यथा** यदि त्वं तत्र गताभवेः **देहे** तवाङ्गे **किंशुकानां** पलाशकुसुमानाम् **आभरणं** मालेतिभावः। **कथं दृश्यते** केनप्रकारेणावलोक्यते। नायकानयनार्थं प्रेषितां स्वयं च तेन सम्भोगं कृत्वा प्रतिनिवृत्तां दूतीं प्रति नायिकाया उक्तिरियम्। वक्रोक्तिसंसृष्टा व्याजोक्तिर-लङ्कारः। अनुष्टुप्छन्दः॥३३॥

**वक्रोक्तिगर्विता द्विविधा-प्रेमगर्विता सौन्दर्यगर्विता च। प्रेमगर्विता यथा--**

---

निर्गमनपूर्वकं गमनमत्र धात्वर्थः। तथा च तत्समीपं यास्यामीति प्रतिज्ञायान्यत्र गमनमनर्हमिति भावः। कुञ्जपदं लताविशेषदर्शन-कुतूहलेन गमनयोग्यत्वार्थम्। तुशब्दः प्रतिज्ञातवैपरीत्यार्थः। पापपदं विप्रियकारित्वलाभार्थम्। ईयसुन् तदावृत्तिसूचनार्थः। गृहमिति तत्रैव तत्सन्निधानार्थम्। अन्यथा कुञ्जगमनाभावे किंशुकानां पलाशपुष्पाणामाभरणमलङ्करणम्। तद्रूपमाभरणमिति वा। देहपदमल्पकुसुमानामन्यतोऽपि लाभसम्भवात्तद्वारणार्थम्। अनेका-वयवावच्छिन्नानां तद्गमनाभावे दुर्लभत्वादिति भावः। दृश्यते साक्षात्क्रियते न तु श्रूयते येन वक्तुरनाप्तत्वसन्देहात्तद्वाक्यजन्यज्ञाने भ्रमत्वशङ्का स्यादित्यर्थः।

"अत्र पापीयस इत्यनेन तदन्तिकमेव रन्तुं गतासीति प्राधान्येन व्यज्यते। तथाहि पापत्वं द्विधा--जात्या कर्मणा च। आद्यमुत्तम-नायिकया नायकस्य वक्तुमनर्हम्। कर्मापि न पातकादिरूपम्, किन्तु नायिकान्तरसम्भोगरूपमेव। तदपि दूतीसम्प्रेषणात् पूर्वकालीनं सोढमेवेति नोद्भावनार्हम्, किन्तु दूतीसम्भोगज्ञा-नोत्तरमीर्ष्यावशा दुद्भाव्यते"। इति चित्रमीमांसापरिशीलितः पन्थाः। अतएव ईयसुन् सङ्गच्छते पूर्वकृतविप्रियादेतस्यातिदुः-सहत्वसूचनार्थम्। किंशुकग्रहणं चार्धचन्द्राकारनखक्षतगोपनार्थम्। समानाभिहारेण तत्प्रत्यक्षानुदयात्। एतेन तस्याः स्वविषये कौटिल्यं नायके रक्तत्वं च व्यज्यते। देहपदेन कुञ्जे दत्ततत्सङ्केतविशृङ्खलस म्भोगसुखमनुभूतवत्यसीति व्यङ्ग्यम्। आभरणपदमन्यैरनाशङ्कनीयत्व सूचनार्थम्। एकवचन- मेकाभिप्रायमूलकत्वव्यञ्जनार्थम्॥३३॥

वक्रोक्तिगर्वितां विभजति- **वक्रोक्तीति**। वक्रोक्त्या प्रकाश्यः गर्वः सञ्जा-तोऽस्याः सा **वक्रोक्तिगर्विता**। सा च **द्विविधा** द्विप्रकारा **प्रेम्णा** पतिविषयकेणेति शेषः, **सौन्दर्येण च** स्वीयेनेति यावत्, गर्विता, इतिभावः।

वपुषि तव तनोति रत्नभूषां
प्रभुरिति धन्यतमासि किं ब्रवीमि।
सखि तनुनयनान्तरालभीरुः
कलयति मे न विभूषणानि कान्तः॥३४॥

---

वपुषीति। एतेनैकावयवमात्रेऽलङ्कारशङ्का निरस्ता। तनोतीति बहुकालावृत्तिरूपो विस्तारो व्यङ्ग्यः। बहुवयवव्यापकत्वरूपस्य तस्य वपुषीत्यनेनैवोक्तत्वात्। रत्नपदं तत्प्रभाप्रसारेण तदसंयुक्तावयवानामप्यदृश्यत्वलाभार्थम्। भूषापदं जनान्तरचमत्कारमात्रजनकत्वार्थम्। अत एवाह—प्रभुरिति। एतेन तादृशभूषादानसामर्थ्यम्। तथा च नायिकाप्रतियोगिकप्रभुत्वस्य नायके लाभात्तस्य तदनधीनत्वं व्यङ्ग्यम्। पतिरितिपाठेऽप्ययमेवाभिप्रायः। सखीति स्वाभिप्रायगोपनार्थम्। धन्यतमेत्यत्र प्रतियोग्याकाङ्क्षायां स्वस्या एवापाततः प्रतियोगित्वमभिमतम्। शाब्दोपादानस्य नावश्यकत्वात्। तथा च वामनः—"बहुत्वप्रतियोग्यपेक्षामप्यातिशायनिकाः" इति। तनुनयनयोरन्तरालं व्यवधानं तस्माद् भीरुः। तन्माभूदिति ज्ञानवान्। भूषणाभावनिषेधाय न कलयतीति देहेन सह न संयोजयतीत्यर्थः। विशब्देन भूषणानां वैशिष्ट्यसूचनम्। कान्तपदेन स्वाधीनत्वं सूच्यते। तदाह भरतः—

अन्यनारीसमुद्भूतं चिह्नं यस्य न दृश्यते।
अधरे वा शरीरे वा स कान्त इति भाष्यते॥

तथा च विभूषणानां देहचाक्षुषविरोधित्वादपरिधापने सर्वदा दर्शनोत्कण्ठाक्षेपात्प्रेमातिशयत्वसूचनम्। अतएव धन्यतमासीत्यहं धन्यतमा न तु त्वमिति व्यतिरेको व्यङ्ग्यः।

धन्यासि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि। इत्यादिवत्।

सौन्दर्यगर्विता यथा—

कलयति कमलोपमानमक्ष्णोः
प्रथयति वाचि सुधारसस्य साम्यम् ।
सखि कथय किमाचरामि कान्ते
समजनि तत्र सहिष्णुतैव दोषः ॥३५॥

---

न च व्यतिरेकशरीरस्योभयघटितत्वाद्धन्यतमत्वांशस्य शाब्दत्वात् कथं व्यङ्ग्यत्वमिति वाच्यम्; विशिष्टस्य तदुपपत्तेः। वर्ण्यनायिका-धर्मिकधन्यतमत्वस्य व्यतिरेकघटकत्वात्, सम्बोध्यनायिकानिष्ठत्वेन तस्य शब्दात्प्रतीतावपि क्षतिविरहात्।

न च नायकस्नेहविषयत्वाभावे धन्यतमत्वानुपपत्त्या तदन्वये बाधनिर्णयादधन्यतमासीति लक्षणावश्यकत्वमिति वाच्यम्; तत्स्नेह-विषयत्वाभावस्य वाक्यार्थबोधात्पूर्वमवगतत्वेनान्वयानुपपत्तेर-भावात् ॥३४॥

**कलयतीति**। अक्ष्णोरिति सप्तम्यन्तम्। उपमानमिति भावे ल्युट्। कमलप्रतियोगिकं सादृश्यं नेत्रयोः कलयति वर्णयति। तथा च कमलप्रतियोगिकसादृश्यस्य मन्नेत्रानुयोगिकत्वेन कथनं ततोऽप्युत्कृष्टगुणवतोस्तयोस्तिरस्कारपर्यवसन्नमेवेति भावः। वाचि एकस्यामपि सुधारसस्यामृतमाधुर्यस्य साम्यं प्रथयति प्रख्यापयति, वचनप्रशंसाभिप्रायेणेत्यर्थः। रसस्येत्यत्र प्रयोज्यत्वं षष्ठ्यर्थः। सुधा-

प्रथमामुदाहर्तमुपक्रमते—**तत्रेति**। **वपुषीति**। हे सखि। आलि! **प्रभुः** नायकः "नायको नेता प्रभुः" इत्यमरः। **तव वपुषि** त्वद्देहे **रत्नभूषां** मणिमयमलङ्कारं **तनोति** विस्तारयति मुहुर्मुहुर्ददातीत्यर्थः। **इति** अतस्त्वं **धन्यतमा**ऽतिशयेन पुण्यवत्यऽसि किंब्रवीमि त्वदीयभाग्यवत्तामितिशेषः। "सुकृती पुण्यवान् धन्यः" इत्यमरः। **मे** मम **कान्तः** दयितस्तु **तनोः** मदीयदेहस्य **नयनयोः** नायकनेत्रयोश्च **अन्तरालाद्** व्यवधानाद् **भीरुः** त्रस्तः सन् **विभूषणानि** आभरणानि **न कलयति** न रचयतीति यावत्। त्वदीयकान्तोऽलङ्कृतायां त्वय्यनुरक्तो न तव देहसौन्दर्येण, मदीयस्तु कान्तो मत्सौन्दर्यासक्तोऽलङ्कारााणि व्यवधानानि मनुतेऽतस्त्वत्तोऽहं धन्यतमेति व्यतिरेको व्यङ्ग्यः। पुष्पिताग्रा वृत्तम् ॥३४॥

सादृश्यस्य च वाचि वर्ण्यत्वात्। तथा च माधुर्यविशेषरूपधर्मनिमित्तकं सुधाप्रतियोगिकसादृश्यं वदतीत्यर्थः। पूर्ववदभिप्रायः।

यद्वा रस इति भावे क्त्। सुधाया इति कृद्योगे कर्मणि षष्ठी। रस्यमाना सुधेति यावत्। "अमृतरसप्रस्यन्दमाध्वीकभूः" इति कुसुमाञ्जलिश्लोके उपायकृतां तथा व्याख्यानात्। इदं च निरूपितं सिद्धान्तसुधानिधौ "सार्वधातुके यक्" इति सूत्रेऽस्माभिः। रस्यमानेत्यनेनामृतरससाक्षात्कारवतापि तन्निरूपितं साम्यं मद्वाचि न वक्तुमर्हमिति व्यङ्ग्यम्।

सखीति प्रश्नयोग्यत्वसूचनम्। किमाचराम्येतादृशापराधोचितं प्रियविषयकं कार्यं मदीयजिज्ञासाविषय इति बोधः। प्रश्नेन कथनीयत्वाक्षेपेऽपि कथयेतिवचनमत्र प्रियापराधो नास्तीत्यादेः कथनीयत्वव्यावृत्त्यर्थम्। तत्र नायकस्य पूर्वोक्तौ सहनं परदोषेऽप्यनौद्धत्यम्। कादाचित्कत्ववारणाय ताच्छीलिक इष्णुच्। एवकारेणैकवारमुपालम्भे तदुत्तरमेवं न ब्रूयादिति सूच्यते। दोषत्वं न्यक्कारोपायनिवृत्तिहेतुत्वात्। अजनीत्यनेन नायकभयात्सम्प्रत्येव सहनशीलत्वमिति शङ्कानिषेधः। समिति पूर्वकालीनतद्व्यावृत्तये साहजिकत्वसूचनार्थम्। तथा च नहि स्वभावाः पर्यनुयोगमर्हन्तीतिभावः। उपमेयस्योपमानप्रतियोगिकसादृश्यानिष्पत्तिरत्र व्यङ्ग्येति प्रतीपविशेषोऽलङ्कारः। स्वयमेव कथनीयत्वेनोक्तस्य समजनीत्यादिना निषेधादाक्षेपभेदः। त्वयोपदिष्टस्यापि तदुपालम्भादेर्दुष्करत्वादितिभावः। "आक्षेपः स्वयं युक्तस्य प्रतिषेधो विचारणात्" इत्युक्तेः। केचित्तु "कलयति प्रथयतीत्येतत्कान्ते इत्यस्य सप्तम्यन्तं विशेषणद्वयम्"इत्याहुः ॥३५॥

अपरामुदाहर्तुं प्रक्रमते—**सौन्दर्येति**। **कलयतीति**। हे **सखि**। आलि "आली सखी वयस्याथ" इत्यमरः। **अक्ष्णोः** लोचनयोः, ममेतिशेषः। **कमलोपमानम्** कमलसादृश्यमिति यावत्। **कलयति** विभावयति। कान्त इति शेषः। **वाचि** मे वाण्यां **सुधारसस्य** पीयूषद्रवस्य **साम्यम्** सदृशत्वं **प्रथयति** प्रख्यापयति। एवंभूते **कान्ते** प्रियतमे तद्विषये इत्यर्थः। **किमाचरामि** किं प्रतिकरोमीति **कथय** मामभिधेहि, अथवा **तत्र** कान्तस्य तदपराधस्य वा प्रतिविधाने **मम सहिष्णुतैव** सहनशील-

प्रियापराधसूचिका चेष्टा मानः। स च लघुर्मध्यो गुरुश्च, अल्पापनेयो लघुः। कष्टतरापनेयो मध्यमः। कष्टतमापनेयो गुरुः। असाध्यस्तु रसाभासः। अपरस्त्रीदर्शनादिजन्मा लघुः। गोत्रस्खलनादिजन्मा मध्यमः। अपरस्त्रीसङ्गजन्मा गुरुः। अन्यथासिद्धकुतूहलाद्यपनेयो लघुः। अन्यथावाद-शपथाद्यपनेयो मध्यमः। चरणपातभूषणाद्यपनेयो गुरुः॥

---

अथ मानो द्विविधः, तदुक्तं दर्पणे—

मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः।
द्वयोः प्रणयमानः स्यात्प्रमोदे सुमहत्यपि॥
प्रेम्णः कुटिलगामित्वात्कोपो यः कारणं विना।

प्रियापराधातिरिक्तहेतुजन्यः कोपः प्रणयमानः। द्वयोरिति कदाचिन्नायिकायाः कदाचिन्नायकस्येत्यर्थः। आद्यो यथा—

मानापनोदनविनोदनते गिरीशे
मासेव सङ्कुचितयो रुचितं तदिन्दोः।
भेत्तुं भवानिशचितं दुरितं भवानि
नम्रीभवानि घनमङ्घ्रिसरोजयोस्ते॥

द्वितीयो यथा—

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणा
सा हंसैः स्थिरकौतुका चिरमभूद्गोदावरीसैकते।
आयान्त्यापदि दुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः॥

त्वमेव क्षमाशालिनीतिभावः। **दोषः** प्रतिबन्धकः **समजनि** सञ्जातः। क्षमा नोदभविष्यच्चेदवश्यमेव प्रतिव्यधास्यमिति भावः। अन्यनायिकानामिव कथमभाषि नेत्रे कमलाभ्यां वाक् च सुधारसेनोपमीयते तेनेति स्वसौन्दर्यातिरेकेण सौन्दर्यगर्वितेयम्। प्रतीपोऽत्रालङ्कारः। अत्रापि पुष्पिताग्रैव वृत्तम्॥३५॥

अथ मानवतीलक्षणोपक्रमे प्रथमं मानपदार्थं लक्षयति—**प्रियेति**। प्रियजनितानामपराधानां गोत्रस्खलनादीनां **सूचिका** प्रकाशिका **चेष्टा** व्यापारविशेषो **मानः**

श्रीरामं प्रति वासन्त्या वनदेव्या इयमुक्तिः। द्वयोर्युगपद्यथा—

एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतो गौरवम्।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः॥

इमं भेदं प्रकृतानुपयुक्तत्वादुपेक्ष्य ईर्ष्यामानमाह—प्रियेति।

यद्यपि कोप एव मानपदार्थो नतु चेष्टा, तस्यास्तत्कार्यत्वात्। तथापि मानवतीतिव्यवहारस्य तज्जन्यचेष्टावत्यामेव दर्शनात्तथोक्तम्। निवर्तकमुखेन तदपनयोपायज्ञानार्थं लक्षयति—अल्पेति। तच्चाग्रेऽन्यथासिद्धेत्यादिना वक्ष्यति। अपनयो निवृत्तिः। प्रतियोगित्वं यत्प्रत्ययार्थः। अल्पोपायजन्यनिवृत्तिप्रतियोगित्वमित्यर्थः। एवमग्रेऽपि योज्यम्। नायककृतोपायजन्यनिवृत्त्यप्रतियोग्यपि मानोस्त्वित्याशङ्क्याह—असाध्यस्त्विति। रसाभास एवेति। अयमाशयः—मानो हि विप्रलम्भविशेषद्वारा सम्भोगोत्कर्षाधायकतया रसोपयोगी न तु स्वरूपेण। तदुक्तम्—

न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते।
कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्द्धते॥

अन्यत्राप्युक्तम्—"तत्र ह्युपोषितैरन्नमिव सम्भुज्यते रतिः" इति। तथा च तादृशमानस्य सत्त्वेऽपि रसानुपकारकत्वान्नात्र निरूपणमर्हमिति। सम्प्रति कारणमुखेन लक्षयति—अपरेति। दर्शनादीत्यादिपदं सम्भाषणादिपरम्। गोत्रस्खलनं स्वनामन्युच्चारणीये नायिकान्तरनामोच्चारणम्। आदिपदं स्वप्नादिपरम्। सङ्गमपदं तत्सम्भोगचिह्नदर्शनपरम्। तदुक्तं दर्पणे—

पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते।
ईर्ष्यामानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा॥
तत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा।

तद्विषयकसंस्कारानुमापकत्वम्। "भावमन्तर्गतं गुप्तं सुप्तो मत्तश्च व्रत्र स्वप्नायितस्य भाषते" इति नीतिशास्त्रोक्तेः। एवं गोत्रस्खलनस्य

"यन्मनसा ध्यायति तद्वाचा वदति" इति श्रुतेः, भोगाङ्कास्तु नखक्षतादयः। तेषामनुरागकार्यसम्भोगानुमापकत्वमेवेति तज्जन्यस्य गुरुत्वम्। अल्पत्वादेरननुगतत्वादाह—अन्यथासिद्धेरिति। तत्त्वं चेदं माननिवृत्यर्थं नायकेन प्रयुक्तमित्येतादृशनायिकानिष्ठज्ञानविषयत्वम्। तच्च नायकयत्नानुपपाद्ये घनगर्जितादौ तदुपपाद्ये श्लेषणादौ च तुल्यमित्यवधेयम्। कुतूहलादीत्यादिपदं त्रासादिपरम्। इदं च रसान्तरमित्युच्यते। यथा—

विग्रहाच्च शयने पराङ्मुखीर्नानुनेतुमबलाः स तत्वरे।
आचकाङ्क्ष घटशब्दविक्लवास्ताः स्वयं प्रविशतीर्भुजान्तरम्॥

एवं प्रसह्य चुम्बनादिकमपि ग्राह्यम्। यथा—

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्सम्प्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम्॥

एवं च भोगाङ्कदर्शनजन्यस्य गुरुत्वमेवेत्यादिरुत्सर्ग एवेति बोध्यम्। गोत्रस्खलनादिजन्मनोऽपि क्वचिद्गुरुत्वदर्शनात्। यथा—

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणे
मा भूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः॥

अन्यथावादशपथयोः सामन्येवान्तर्भावः। अन्यथावादो यथा मम—

तदाख्यः। वस्तुतस्तु-मानः कोपः स च प्रणयोद्भूतो वा ईर्ष्योद्भूतो वा। तस्य त्रिविधत्वमाह-स चेति। लघुं लक्षयति—**अल्पेति**। अल्पेन न्यूनप्रायेणोपायेनेति शेषः। **अपनेयः** अपनेतुं निवर्तयितुं शक्यो लघुर्भवतीत्यर्थः। मध्यममाह—**कष्टेति**। **कष्टतरेण** अतिशयकृच्छ्रेणान्यथावचनशपथादिनेत्यर्थः। **अपनेयो** निरसनीयो **मध्यमः**। अत्र द्व्यर्थे "द्विवचनविभज्योपपदे-" इत्यादिना सुबन्तान्तरप्। अधममाह-**कष्टतमेनेति**। **कष्टतमेन** क्लेशातिशयकरेणोपायेन चरणपतनादिना महता प्रयासेनापनेयोऽपसारणीयोऽ**धमः**। यद्येवमपि माननिरासो न स्याच्चेत्तत्राह-

नेतुर्नखक्षतमुदीक्ष्य कपोलभूमौ
किं नाम कुञ्जयसि सुभ्रु दृगञ्चलं त्वम्।
तत्तावकीनवदनाम्बुरुहस्थमेव
वैशद्यतः प्रतिफलत्प्रतिभाति तत्र॥

शपथो यद्गोत्रेत्यत्र वक्ष्यते। चरणपतनं नतिः। विभूषणं दानोपलक्षणम्। तथा च साहित्यदर्पणे—

सामभेदोऽथ दानं च नत्युपेक्षे रसान्तरम्।
तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात्॥
तत्र प्रियवचः साम भेदः सख्युपरञ्जनम्।
दानं व्याजेन भूषादेः पादयोः पतनं नतिः॥
सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम्।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम्॥

अथाह भगवान् भरतः—

साम चोपप्रदानं च दण्डो भेदस्तथैव च।
उपेक्षा चैव कर्तव्या नारीणां विषयं प्रति॥
तवास्मि मम चैव त्वं दासोऽहं त्वं च मे प्रिया।
यदात्मोपेक्षणकृतं तत्सामेत्यभिसंज्ञितम्॥
काले काले प्रदातव्यं धनं विभवमात्रया।
निमित्तान्तरकृतं यत्तु तद्दानमिति संज्ञितम्॥
भेदः स्यात्तत्प्रियस्येह सोपायं दोषदर्शनम्।
बन्धनं ताडनं चापि दण्ड इत्यभिधीयते॥
मध्यमां मानयेत्साम्ना लुब्धां चोपप्रदानतः।
अन्यानुबद्धभावां च भेदेन प्रतिपादयेत्॥
दृष्टाचारसमारब्धे त्वन्यभावे समुत्थिते।
दण्डः पातयितव्यो हि मृदु ताडनबन्धनैः॥
सामादीनां प्रयोगे तु परिक्षीणे यथाक्रमम्।
न भवेद्वशमापन्ना तामुपेक्षेत बुद्धिमान्॥

इदं च पारदारिकप्रकरणोक्तमप्याकाङ्क्षावशान्मानेऽप्यविरुद्धमिति बोध्यम्। अतएव प्रागुक्तम्—

लघुर्यथा--

स्वेदाम्बुभिः क्वचन पिच्छिलमङ्गमेत-
च्छातोदरि क्वचन कण्टकितं चकास्ति।
अन्यां विलोकयति भूषयति प्रियेऽपि
मानः क्व दास्यति पदं तव तन्न विद्मः ।।३६।।

---

भावग्राहीणि नारीणां कार्याणि मदनाश्रये।
यैर्न कुप्यति वा नारी क्रुद्धा चापि प्रसीदति ।।
लुब्धामर्थप्रदानेन कलाज्ञानेन पण्डिताम्।
चतुरां चापि चातुर्यैरनुवृत्त्या तु मानिनीम् ।।
पुरुषद्वेषिणीमिष्टैः कथायोगैरुपक्रमेत्।
बालामपि क्रीडितकैर्भीरुमाश्वासनेन च ।।
गर्वितां नीचसेवाभिरुदात्तां शिल्पदर्शनैः। इत्येषा दिक्।

**स्वेदाम्बुभिरिति**। शातं कृशमुदरं यस्याः। "नासिकोदरौष्ठ" इत्यादिना ङीप्। "शातोदरी युवदृशां क्षणमुत्सवोऽभूत्" इति

**असाध्यस्त्विति**। **असाध्यस्तु** केनापि प्रयासेनानपनेयस्तु मानः पुनः मानो न भवत्यपितु **रसाभासः** रसस्यानौचित्यप्रवर्तनमिति भावः।

निमित्तभेदेन मानस्य भेदान्निर्दिशति-**अपरेत्यादि**। नायकेन **अपरस्याः** नायिकाव्यतिरिक्तायाः **स्त्रियः** अङ्गनाया **दर्शनादिभ्यो**ऽवलोकनभाषणादिभ्यो **जन्म** यस्यासौ तत उत्पन्न इत्यर्थः। मानो **लघुरुच्यते**। **गोत्रस्खलनादिजन्मा** नायिकानाम्न्युच्चारणीये तदितरवासनानुरञ्जितमनस्कतया तन्नामोच्चारणादिजन्यो मान इति शेषः। **मध्यमो भवति**। **अपरस्त्री** नायिकेतराङ्गना तस्याः **सङ्गजन्मा** सम्भोगजन्यो **गुरुः** कष्टतमापनेय इत्यर्थः। अपनयनहेतूनुद्दिश्य विभजते—**अन्यथेत्यादि**। **अन्यथा** प्रकारान्तरेण **सिद्धमाकस्मिकं** यत् **कुतूहलं** कौतुकम् **आदिपदेन** त्रासादि **तेनापनेयो लघुः**। **अन्यथावादेन** मिथ्याकथनेन **शपथादिना** प्रत्ययोत्पादनाय कथितेन शपनादिवचनेन **वापनेयो मध्यमः**। **चरणपतनेन** अपराधक्षमापनार्थं नायिकापादस्पर्शादिना, **भूषणदानादिना** तुष्टीकरणायाभीष्टप्रदानेन **वाऽपनेयो गुरुः** गरीयान् मान इत्यर्थः।

अथोदाहरति—**लघुर्यथेति**। लघुरपरस्त्रीदर्शनादिजन्मेत्यर्थः। **स्वेदेति**। **हे शातोदरि!** शोतनूकरणे धातोः क्तः, शातं शाणोल्लेखनादिना तनूकृतमुदरं

**मध्यमो यथा—**

**यद् गोत्रस्खलनं तत्र भ्रमो यदि न मन्यते।**
**रोमालिव्यालसंस्पर्शशपथं तन्वि कारय॥३७॥**

---

माघः। "सम्बुद्धया उदरेऽपि मानस्य स्थलं नास्तीति व्यज्यते" इति केचित्। प्राणेश्वरपदेन तत्कृतापराधस्य सहजत्वान्मानस्य लघुत्वं सूच्यते। अन्यामिति विशेष्याभावात्स्त्रीत्वाच्चातिरिक्तस्य विशेषणस्यानुपादानं तस्या अनादरणीयत्वव्यञ्जनार्थम्। विलोकयति भूषयतीत्युभयत्रापि भावलक्षणे सप्तमी। अपिशब्दो मानोत्पत्तिकालेऽपि तदनुत्पत्तिसूचनार्थः, अनुरागप्राबल्यात्। स्वेदेति। अङ्गपदं तदनुरागानवच्छेदकावयवराहित्यं व्यञ्जयति। मानस्याप्यात्मगुणतया शरीरानवच्छेदेनोत्पत्तिर्न सम्भवत्येवेति भूमिपदतात्पर्यम्। "असाकल्ये च चिद्घने" इत्यमरः। क्वचन किञ्चिदवयवावच्छेदेन पिच्छिलमस्ति। पिच्छादित्वादिलच्। "समौ पङ्किलपिच्छिलौ" इत्यमरः। कण्टकितं सञ्जातकण्टकम्। उभयत्रापि भावप्राधान्यं वोध्यम्। चकास्तीति सहृदयत्वोत्कर्षज्ञापकत्वेन शोभातिशयहेतुत्वात्। तथा च मानः कुत्र पदं दास्यतीति न विघ्नः। पिच्छिले कण्टकिते च स्थले पदस्य दातुमनर्हत्वात्। अवच्छेदकतासम्बन्धेन शरीरे मानानुत्पत्तावसमवायेनात्मन्यपि तदसम्भवादिति भावः। तथा च—अपरस्त्रीसङ्गमसाक्षात्कारदशायामपि प्रियदर्शने स्वेदादिसात्विकोत्पत्तौ च तद्विषयककोपोदयोऽसम्भाव्य एवेति तात्पर्यम्॥३६॥

---

यस्यास्तत्सम्बुद्धौ। कृशोदरीत्यर्थः। **प्रिये** कान्ते **अन्यां** त्वदितरां नायिकां **विलोकयति** साकूतं पश्यति सति, **अपि च** तथा च **भूषयति** भूषणादिभिरलङ्कुर्वतीत्यर्थः। **तव** नायिकाया **एतदङ्गं** इदं वपुः **क्वचन** कस्मिंश्चिद्भागे **स्वेदाम्बुभिः** घर्मजलैः सात्त्विकभावैरिति तात्पर्यम्। **पिच्छिलं** पङ्किलं क्लिन्नमितियावत्। **चकास्ति** शोभते। **क्वचन** अवशिष्टेष्ववयवेष्वित्यर्थः **कण्टकितं** रोमाञ्चयुक्तं, चकास्ति। सापराधेऽपि प्रियेऽनुरागेण स्वेदादिभी रोमाञ्चैश्च व्याप्ते ते वपुषि **मानः** पूर्वोक्तलक्षणः **पदं** स्थानं **क्व दास्यति** मानकृते क्व स्थानं स्यादित्यर्थः। **तत्** स्थानं **वयं न विद्मोऽ**स्माभिर्नज्ञायते। विशेषोक्तिरत्रालङ्कारः। वसन्ततिलका च वृत्तम्॥३६॥

**यदिति**। ननु भ्रमः को वात्र प्रतिपिपादयिषितः, सपत्नीनाम्नि एतन्नामत्वप्रकारको वा, अस्यां तत्सपत्नीत्वप्रकारको वा। नाद्यः। नायके तदसम्भवात्। नान्त्यः। अन्यस्या नाम गृह्णीयामितीच्छायां यत्र प्रमादवशादन्यस्या नामोच्चार्यते तस्यैव गोत्रस्खलनपदार्थत्वात्, तत्र चोक्तभ्रमस्यानुपपत्तेः। उक्तभ्रमसम्भवेऽपि तस्य गोत्रस्खलन-हेतुत्वेन नायिकाभ्युपगतत्वेन तत्प्रत्यायनार्थं शपथकरणानुपपत्तेः। तद्भ्रमज्ञानेन मानस्यैवोत्पत्त्या तदपनायकत्वायोगाच्च।

एतेन "यन्मया नामोच्चारणं कृतं तत्त्वदीयं नामेति भ्रान्त्या नतु त्वत्सपत्न्या इतिभ्रमेणेत्यर्थः" इति व्याख्यानं निरस्तम्।

उच्यते। यदनेन गोत्रस्खलनं कृतं यत्त्वयोक्तं तत्र यदि तव भ्रमो विद्यते इति व्याख्येयम्। मया त्वदीयमेव नाम उक्तं त्वयैव तु दोषवशादन्यथा कृतमितिभावः। तथा च तवैव मिथ्यावादित्वमिति मत्प्रत्ययस्थाने ममैवाभियोक्तृत्वाद्वक्ष्यमाणं दिव्यं कारयेत्यर्थः। अनेनान्यथावादो व्यञ्जितः। रोमालिरेव व्यालः सर्पः। दीर्घत्वा-न्नीलत्वाच्च। "व्यालिसंस्पर्श" इति पाठस्तूपेक्ष्यः। "इको ह्रस्वोऽङ्यो गालवस्य" इति ह्रस्वस्य ङयन्तेष्वप्रवृत्तेः। न च "ङ्यापोः संज्ञाछन्दसोः" इत्यस्यावकाशः। संज्ञात्वाभावात्। तत्स्पर्शस्य तदनुमतिं विनानौचित्यात् कारयेत्युक्तम्। संपदं मुखावच्छेदेन स्पर्शसूचनार्थम्। "मणिमन्त्रादिकपटविरहार्थम्" इत्यपरे ॥३७॥

**मध्यमो यथेति। मध्यमः** गोत्रस्खलनादिजन्मेत्यर्थः। **यदिति। हे तन्वि।** हे सुन्दरि! **गोत्रस्खलनं** नामोच्चारणप्रमादो **यदभवत्**, त्वन्नाम्न्युच्चारयितव्ये सपत्नीनामग्रहणं यन्मया कृतमितिभावः। "गोत्रं नाम्नि कुलेऽप्यद्रौ" इति यादवः। **तत्र** तस्मिन्विषये **यदि** त्वया **भ्रमः** भ्रान्तिः स्वकीयं मिथ्याज्ञानमितियावत्। **न मन्यते** कारणत्वेन न स्वीक्रियते तर्हि **रोमालिः** रोमपङ्क्तिरेव तवेति शेषः। **व्यालः** सर्पः तस्य **संस्पर्शः** सम्यगामर्शनं तद्रूपं **शपथं दिव्यं कारय** विधापय, मयेति शेषः। न ममोच्चारणदोषोऽत्रापितु त्वच्छ्रवणदोष एवेति त्वया न मन्यते चेत्, मया दिव्यं रोमालिव्यालामर्शनरूपं कारयेति भावः। गोत्रस्खलनजन्मनो मानस्य शपथापनेयतया मध्यमत्वम्। रूपकसंसृष्टोऽनुकूलालङ्कारः। पथ्यावक्त्रं च वृत्तम् ॥३७॥

गुरुर्यथा—

दयितस्य निरीक्ष्य भालदेशं चरणालक्तकपिञ्जरं सपत्न्याः।
सुदृशो नयनस्य कोणभासा श्रुतिमुक्ताः शिखरोपमा बभूवुः ॥३८

दयितस्येति। अनेन सपत्न्या तदुपभोगस्यातिदुःसहत्वसूचनम्। श्रवणेऽप्रामाण्यस्यापि सम्भवात्। ईक्षेति। शाब्दापेक्षया चाक्षुषस्योत्सर्गतः प्रामाण्यग्रहादित्यर्थः। चाक्षुषस्यापि भ्रमत्वसम्भवान्निरिति प्रमात्वव्यञ्जनार्थम्। भालपदमुत्तमाङ्गत्वसूचनार्थम्, देशपदं तदेकदेशावच्छिन्नत्ववारणार्थम्। एतेनागतमात्रस्य नायकस्य भालदेशे दृष्टिपातोक्त्या तन्मुखनिरीक्षणोत्कण्ठा व्यज्यते।

चरणपदस्य सपत्नीपदसाकाङ्क्षत्वेऽपि गमकत्वात् समासः। ओष्ठालक्तकसङ्गे सर्वावच्छेदेन रक्तता न स्याच्चुम्बनमात्रमाक्षिप्यापि पर्यवसानसम्भवादाभ्यन्तरपर्यन्ताक्षेपोऽपि न स्यादतश्चरणेत्युक्तम्। नूपुरादिसङ्गस्य दुर्विज्ञेयतया अलक्तकेति। द्रवत्वेन भाले तत्सङ्क्रान्तिसम्भवात्। शुष्कस्य तस्यापि तद्विधत्वात्पिञ्जरत्वमिति। रञ्जितमिति पाठान्तरम्। स्वीयत्ववारणाय सपत्न्या इति। एवं च परकीयासङ्गमस्य लोकापवादभियापि परित्याज्यत्वं स्यात्सपत्न्यनुरागस्य तु न तथेतीर्ष्यातिशयो व्यङ्ग्यः। तथा च सपत्नीचरणालक्तकरञ्जितत्वप्रकारकभालविशेष्यकचाक्षुषमत्र व्याख्येयम्। वस्तुतो रञ्जितत्वेऽपि तदप्रकारकभालचाक्षुषोत्पत्त्या कोपानुदयात्।

सुदृश इति। सौन्दर्यविशेषशालित्वादन्योपभोगासहिष्णुत्वम्। दृक्पदस्य ज्ञानार्थतयाऽनुमानसामर्थ्यं च व्यङ्ग्यम्। नेत्रयुगस्य युगपत्कोणानभिमुखत्वान्नयनस्येति। कोणो नेत्रप्रान्तः। तत्र भासा दीप्त्या सकोपं तिर्यङ्निरीक्षणदशायामित्यर्थः। श्रवणसम्बन्धिन्यो मुक्ता मुक्ताफलानि शिखरोपमा माणिक्यतुल्या बभूवुः। नेत्रयोस्तापसम्पर्कादिति तद्गुणालङ्कारः। "तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः" इति तल्लक्षणात्।

कचित्तु "कोणभासः प्रान्तदीप्तयः" इति प्रथमान्तं पठित्वा "श्रुतिमुक्ताः कर्णोपान्तप्रेरिताः सत्यो रक्ता बभूवुः" इति व्याचख्युः। वस्तुतो भास इति पञ्चम्यन्तमाश्रित्य पूर्वोक्त एवार्थो व्याख्येयः।

यत्तु "तृतीयान्तपाठे श्रुतिमुक्ताः श्रवणभूषणयोग्यमुक्ताफलानि अर्थान्नायकेन तत्प्रसादनार्थमानीतानि" इति, यद्वा "पदावनतनायक-कर्णाभरणमौक्तिकानि" इति। तदसत्। श्रुतिपदवैयर्थ्यात्। कर्णावतंसा-दिपदे कर्णादिध्वनिनिर्मितिः। सन्निधानादिबोधार्थमिति वामन-काव्यप्रकाशादिसिद्धान्तात्। दानस्य प्रथममनुपयोगाच्च। समानान्तर-मेव तस्य विहितत्वात्। मानात् पूर्वमेव नायकस्य चरणपाता-नौचित्याच्च। स्वापराधस्य स्वयमेवानुद्भाव्यत्वान्निरीक्ष्येत्यादेर-सङ्गतेश्च। नायकश्रोत्रमौक्तिकावच्छेदेनैव दृष्टिपाते बीजाभावाच्च। "शेखरं शैलवृक्षाग्र" इत्युपक्रम्य "पक्षदाडिमबीजाभमाणिक्यशकले-ऽपि च" इति विश्वः।

यत्तु "दाडिमबीजसदृश्य" इति व्याख्यानं तदुक्तकोषे दाडिमेत्या-देर्माणिक्यविशेषणत्वानवबोधनिबन्धनमित्युपेक्ष्यम्। अतएव "तन्वी श्यामा शिखरिदशना" इति कालिदासः। यत्तु "पर्वतशिखरवच्छ्यामा जाता" इति व्याख्यातं तदप्युपेक्ष्यम्। "कोपे श्यामत्वानौचित्याद्" इति केचित्। अन्ये तु "शिखी वह्निस्तत्परो यो बाणस्तस्येव मा लक्ष्मी-र्यासामिति पाठव्यत्यासमाश्रित्य" व्याचख्युः ॥३८॥

गुरुर्येति। गुरुः अपरस्त्रीसङ्गादिजन्येत्यर्थः। दयितस्येति। दयितस्य प्रेयसः भालदेशं ललाटस्थलं सपत्न्याः प्रियस्यापरनायिकाया इति भावः। चरणा-लक्तकेन पादस्थयावकेन, "यावोऽलक्तो द्रुमामयः" इत्यमरः। पिञ्जरं पीतवर्णतां गतमिति यावत्। पिञ्जं वर्णविशेषं रातीति कः। निरीक्ष्यावलोक्य सुदृशः सुलोचनाया नयनस्य लोचनस्य कोणभासा अपाङ्गकान्त्या श्रुतिमुक्ताः कर्णाभरण-स्थानि मौक्तिकानीति यावत्। शिखरोपमाः पद्मरागसदृशाः। "शिखरः पद्मरागः स्यात्" इति वैजयन्ती। बभूवुः। सकोपकटाक्षच्छटया श्वेतमुक्ता रक्ता बभूवु-रित्यर्थः। पिञ्जरमित्यत्र रञ्जितमिति पाठस्तु साधीयान्। तद्गुणालङ्कारः। मालभारिणीछन्दः ॥३८॥

**एताः षोडशाप्यष्टभिरवस्थाभिः प्रत्येकमष्टविधाः। ताश्च—प्रोषितभर्तृका, खण्डिता, कलहान्तरिता, विप्रलब्धा, उत्का, वासकसज्जा, स्वाधीनपतिका, अभिसारिका चेति गणनादष्टाविंशत्यधिकं शतं भवति। तासामप्युत्तममध्यमाधमगणनया चतुरधिकाशीतियुतं शतत्रयं भेदा भवन्ति।**

---

षोडशेति। तथाहि मुग्धा तावदेकैव। मध्याप्रगल्भयोः प्रत्येकं धीरा अधीरा धीराधीरेति षट् प्रभेदाः। तेऽपि ज्येष्ठा-कनिष्ठेति द्वादश भेदाः, इति सङ्कलनया त्रयोदश स्वीयाभेदाः। परकीया परोढा कन्यका चेति द्विविधा। सामान्या त्वेकविधेति मिलित्वा षोडशेति भावः। ताश्च वक्ष्यमाणप्रकारेणाष्टविधा इत्यष्टाविंशत्यधिकं शतम्। तासामप्युत्तममध्यमाधमभेदेन त्रैविध्ये शतत्रयं चतुरशीतिश्च भेदाः। तदुक्तं प्राचीनैः—

त्रयोदशविधा स्वीया द्विविधा च पराङ्गना।
एका वेश्या पुनश्चाष्टाववस्थाभेदतो मताः॥
पुनस्तास्त्रिविधाः सर्वा उत्तमाधममध्यमाः।
इत्थं शतत्रयं तासामशीतिश्चतुरुत्तरा॥
जातिकालवयोऽवस्था भावकन्दर्पनायकैः।
इतरा अप्यसङ्ख्याता नोक्ता विस्तरभीतितः॥

अष्टभेदानाह—प्रोषितेति। तथा च भगवान् भरतः—

तत्र वासकसज्जा च विरहोत्कण्ठितापि वा।
स्वाधीनभर्तृका वापि कलहान्तरितापि वा॥
खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका।
तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः॥

वाशब्दः समुच्चयार्थः। "वा स्याद्विकल्पोपमयोरेवाथाऽपि समुच्चये" इति विश्वः। अत्र च निर्देशक्रमो न विवक्षितः। तथा च विद्यानाथः—

स्वाधीनपतिका चैव तथा वासकसज्जिका।
विरहोत्कण्ठिता चैव विप्रलब्धा च खण्डिता।
कलहान्तरिता चैव तथा प्रोषितभर्तृका।
तथाभिसारिका चेति क्रमाल्लक्षणमुच्यते॥

स्वाधीनभर्तृका तद्वत्खण्डिताथाभिसारिका।
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका॥
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा।

अवस्थेति। कालिकमव्याप्यवृत्तित्वं यस्य स एवोपाधिर्नायिकाविभाजक इत्यर्थः। एवकारव्यावर्त्यमाह—जातिभेदेनेति। तद्व्यक्तिनिष्ठात्यन्ताभावप्रतियोगित्वरहितस्योपाधेर्न तथात्वम्। अन्यथा दिव्यत्वाद्यवान्तरोपाधेर्विद्याधरत्वादेरपि तथात्वप्रसङ्गाददिव्यत्वव्याप्यस्य ब्राह्मणत्वादेरपि तत्प्रसङ्गाच्चेत्याह—भेदानन्त्येति। न चेष्टापत्तिः, त्वयाप्यनुदाहृतत्वात्। न च विभागस्यैच्छिकत्वाद्दिव्यत्वादिसामान्यधर्मेणैव विभागो नतु तद्व्याप्येन विद्याधरत्वा-

अथ नायिकानामवस्थाभेदेन प्रकारान्तरं निरूपयति—**एता इति**। **एताः** स्वीया-परकीया-सामान्येत्यर्थः। **षोडशापि** त्रयोदशविधा स्वीया, द्विविधा परकीया सामान्या चैकविधेति संभूय षोडशविधापीतियावत्। **अष्टभिः** वक्ष्यमाणाभिः **अवस्थाभिः** दशाभिः प्रत्येकं षोडशभेदेष्वेकैकमष्टविधाः भवन्तीति शेषः। **ताश्चेति** अष्टावस्था इत्यर्थः। **प्रोषितभर्तृका** प्रोषितः देशान्तरं गतः भर्ता यस्याः सा। **खण्डिता** स्वाधीनपतिकत्वाभिमानं खण्डितं यस्याः। **कलहान्तरिता** कलहात् प्रियेण विग्रहकारणाद् अन्तरिता दूरीभूतेति यावत्। **विप्रलब्धा** वञ्चितेत्यर्थः। उत्का सङ्गमोत्कण्ठावती। **वासकसज्जा** वासके नायकागमनाय निश्चिते वारे "भरताद्यैरभिदधे स्त्रीणां वारस्तु वासकः" इति शिङ्गभूपालः। सज्जतेऽलङ्कृता तिष्ठतीति सा। **स्वाधीनपतिका** स्वस्याः अधीनः वशीभूत इतियावत् पतिः यस्याः। **अभिसारिका** सम्भोगाय नायकमभिसरतीति भावः। इति गणनादष्टाविंशत्यधिकं शतं भवति। पूर्वोक्तानां षोडशानां प्रत्येकमष्टविधत्वादिति भावः। तासामपि अष्टाविंशत्युत्तरशतानामित्यर्थः। उत्तममध्यमाधमगणनया प्रत्येकं त्रिविधतया तत्त्रिगुणितभेदाः ३८४ भवन्ति।

यत्तु—"एतासां दिव्यादिव्योभयगणनया द्विपञ्चाशदधिकशतयुतं सहस्रं भेदा भवन्ति। दिव्या इन्द्राण्यादयः अदिव्या मालत्यादयः, दिव्यादिव्याः सीतादय" इति । तन्न, तदवस्थाभेदेनैव नायिकानां भेदात्। जातिभेदेन भेदस्वीकारे नायकानामप्येवमानन्त्यं स्यात्। तथा च दिव्यादिव्यादिभेदा नायकानामपि सम्भवन्ति। इन्द्रादयो दिव्याः, अदिव्या माधवादयः, दिव्यादिव्याः कृष्णादय इति त्रितयमपि।

---

दिनेति वाच्यम्; शास्त्रकारकृतविभाग एव तत्समाधानात्। दिव्यत्वादेश्च भरतादौ विभाजकत्वेनानुक्तत्वात्।

ननु "चैद्या गम्भीरनाभिस्तुङ्गकुचा स्यान्महाराष्ट्री" इत्यादि कामशास्त्रे तद्व्यक्तिनियतधर्मेणापि नायिकाभेदो दृश्यत इति चेत्, न, तस्योत्सर्गकथनमात्रपरतया विभागपरत्वाभावात्। नहि महाराष्ट्रोद्भवत्वस्त्रीत्वं तुङ्गकुचत्वस्य व्याप्यम्, कासाञ्चित्तासामपि तदभावात्। नापि व्यापकम्, अन्यदेशीयस्त्रीषु तुङ्गकुचत्वस्य सत्त्वेऽपि महाराष्ट्रोद्भवत्वस्य विरहात्। नापि तुङ्गकुचा महाराष्ट्रीति व्यवहर्तव्येति परिभाषापरं तत्, शास्त्रे लोके वा तादृशव्यवहाराभावात्।

स्यादेतत्। सामान्यवनितात्वं न कालिकाव्याप्यवृत्तित्ववत्, जन्मनः प्रभृति वर्तमानत्वादिति चेन्न। अनुरागघटितस्य नायिकाविभाजकोपाधित्वेनात्र विवक्षितस्य तस्य जन्मनः प्रभृत्यवर्तमानत्वात्। स्यादेतत्।

अन्योक्तान् दिव्यादिभेदान् खण्डयितुमुपक्रमते—यत्त्विति। एतासां ३८४ विधनायिकानां दिव्यादिव्योभयभेदेन दिव्या-अदिव्या-दिव्यादिव्याश्चेति प्रकारत्रयेण गुणनात्। द्वीति ११५२ भेदाः भवन्ति। तत्र दिव्याः दिविभवाः इन्द्राण्यादयः अदिव्याः मानुष्य इत्यर्थः मालत्यादयः, दिव्यादिव्याः देवांशभूता मानव्य इतियावत्। इति इति यदुक्तमित्यर्थः। तन्न तदयुक्तम्। नायिकानाम् अवस्थाभेदेनैव प्रोषितभर्तृकादिदशाभेदेनैव भेदात् नतु जात्यादिभेदेनेति भावः। तन्नियमानङ्गीकारे

**यद्यपि मुग्धाया यथा धीरादिभेदाभावस्तथाविधप्रज्ञासामग्र्यभावात्तथाष्टविधत्वाभावोऽपि भवितुमर्हति। तथापि प्राचीनलेखनानुरोधेन नवोढामालम्ब्यैते भेदा अवगन्तव्याः।**

---

पद्मिनीं तदनु चित्रिणीं ततः शङ्खिनीं तदनु हस्तिनीं विदुः।
उत्तमा प्रथमभाषिता ततो हीयते युवतिरुत्तरोत्तरम्॥

इति विभागोऽपि तत्र न स्यात्। तथा च विद्यानाथेनोक्तम् "कामशास्त्रप्रसिद्धाः पद्मिनीचित्रिणीप्रभृतयो जातिविशेषा एव" इति। नैवम्। सामान्यधर्मत्वमात्रेण जातित्वोक्तेः, अन्यथा ब्राह्मणत्वादिजातिभिः सङ्करप्रसङ्गात्।

कमलमुकुलमृद्वी फुल्लराजीवगन्धः
सुरतपयसि यस्याः सौरभं दिव्यमङ्गे।
चकितमृगमदाभे प्रान्तरक्ते च नेत्रे
स्तनयुगलमनर्घ्यं श्रीफलश्रीविडम्बि॥

इत्यादि घटितोपाधिरूपस्य पद्मिनीत्वादेः कालिकाव्याप्यवृत्तित्वस्यानपायात्। एतेन मृगीवडवाहस्तिनीत्यादयोऽपि व्याख्येयाः। अतएव––

देवतासुरगन्धर्वरक्षोनागपतत्त्रिणाम्।
पिशाचयक्षव्याडानां नरवानरहस्तिनाम्॥
मृगमीनोष्ट्रमकरखरशूकरवाजिनाम्।
महिषश्वगजाश्वानां तुल्यशीलाः स्त्रियः स्मृताः॥

इति भरतवाक्यमपि व्याख्यातम्।

हेतुमाह—**तथा चेति**। **दिव्यादिव्यादीति**। एते भेदा नायकानामपि सम्भवन्ति। परिगणयति—**इन्द्रादय** इत्यादि।

ननु प्रज्ञाविशेषरूपकारणाभावान्मुग्धाया यथा धीरादिभेदाभावः पूर्वमुक्तस्तथैव प्रोषितभर्तृकादिभेदाभावोऽपि वक्तुं कथं न शक्यत इत्याशङ्क्याह—**यद्यपीति**। स्पष्टम्। **तथाविधप्रज्ञासामग्र्यभावात्** बुद्धेरपरिपक्वतयेतियावत्। समाधत्ते—**तथापीति**। पूर्वकथनस्यौचित्येऽपीत्यर्थः। **प्राचीनलेखनानुरोधेन**

**तत्र देशान्तरगते प्रेयसि सन्तापव्याकुला प्रोषितभर्तृका- उत्काकलहान्तरिताविप्रलब्धानां पतिर्देशान्तरे न भवतीति न तत्रातिव्याप्तिः। अस्याश्चेष्टा दशावस्थाः॥**

---

स्निग्धाङ्गोपाङ्गनयना स्थिरा मन्दनिमेषिणी।
अरोगा दीप्त्युपेता च दानसत्यार्जवान्विता॥
स्वल्पस्वेदा समरता स्वल्पभुक् सुरतप्रिया।
सत्त्वपुष्परता हृद्या देवशीलाङ्गना मता॥

इत्युपाधिरूपस्य देवसत्त्वादेर्यौवन एव सम्भवेन कालिकाव्याप्य-वृत्तित्वस्य सुलभत्वात्। एतेन जातिकालेति पूर्वोपन्यस्तप्राचीन-वचनमपि व्याख्यातमित्यास्तां विस्तरः।

प्राचीनलेखनेति। पूर्वोक्तषोडशभेदानामष्टधा भेदस्योक्तत्वात् षोडशभेदमध्ये च मुग्धाया अपि निवेशादितिभावः। नवोढामिति सख्यादिसहकारेण तस्या अप्यभिसारादिसम्भवात्। विरहोत्क-ण्ठितत्वादेश्च स्वाधीनस्य तत्राबाधितत्वादितिभावः।

केचित्तु "परस्त्रियौ कन्यकोढे सङ्केतात्पूर्वं विरहोत्कण्ठिते पश्चाद्विदूषकादिभिः सहाभिसरन्त्यावभिसारिके, कुतोऽपि सङ्केत-स्थानमप्राप्ते नायके विप्रलब्धे इति त्रिविधे एव तयोरस्वाधीन-

प्राचीनैरुक्तत्वात्, **नवोढामालम्ब्य** विश्रब्धनवोढामाश्रित्येत्यर्थः। **एते** प्रोषित-**भर्तृकादयः भेदाः अवगन्तव्याः** बोद्धव्याः।

अथोक्तभेदाष्टके प्रथमं लक्षयति—**तत्रेति**। तत्र पूर्वोक्तेष्वित्यर्थः। **प्रेयसि** **कान्ते**। अत्रातिशयद्योतकेनेयसुन्प्रत्ययेन परिणीतादतिरिक्तमपि बोध्यते तेन च **परकीयासामान्ययोरप्यत्र** सङ्ग्रह इति बोध्यम्। **देशान्तरगते** भिन्नदेशं प्रयाते कार्यान्तरवशाद्गुरुजनादेशाच्छापादिवशाद्वेति शेषः। **सन्तापेन** विरहव्यथया **व्याकुला** सन्तप्ता **प्रोषितभर्तृका** तदाख्या भवतीत्यर्थः। ननूत्कादयोऽपि प्रियविरह-सन्तप्ता भवन्ति कथं न तासु प्रोषितभर्तृकात्वं भवतीत्याशङ्क्य परिहरति—**उत्केत्यादि। उत्का-कलहान्तरिता-विप्रलब्धानां पतिः** कान्तः **देशान्तरे** भिन्नदेशे **गतो न भवतीति न** लक्षणे**ऽतिव्याप्तिः** लक्षणस्य लक्ष्यादतिरिक्तेऽपि सम्भव इत्यर्थः। तद्व्यापारानाह—**अस्या** इति। **अस्याः** प्रोषितभर्तृकायाः **चेष्टाः** व्यापारादयः

प्रिययोरवस्थान्तरानुपपत्तिः" इत्याहुः। तदसत्। खण्डितादिभेदानामपि वक्ष्यमाणरीत्योपपत्तेः। सख्यादिद्वारा प्रियागमनादिनिश्चये बाधकाभावात्।

देशान्तरेति। तथा च भरतः––

गुरुकार्यान्तरवशाद्यस्यास्तु प्रोषितः प्रियः।
सा रूक्षालककेशान्ता भवेत्प्रोषितभर्तृका॥

प्रवासश्च त्रेधा, तदुक्तं दर्पणे––

प्रवासो भिन्नदेशत्वं कार्याच्छापाच्च सम्भ्रमात्।
भावी भवन् भूत इति त्रिधा स्यात्तत्र कार्यतः॥

शापः प्रसिद्धो यथा––

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।
गाढोत्कण्ठागुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये तुहिनमथितां पद्मिनीं वान्यरूपाम्॥

सम्भ्रमो दिव्यमानुष्यनिर्घातोत्पतनादितः। विरहस्तु समानदेशत्वे सति गुर्वादिवशात् सम्भोगाभावः। न च प्रवासस्यापि विरहान्तर्भावोऽस्तु, समानदेशस्थत्वविशेषणे प्रयोजनाभावादिति वाच्यम्; अभियुक्तव्यवहारानुरोधेनैव लक्षणारम्भात्। अन्यथा विरहोत्कण्ठिताप्रोषितभर्तृकयोर्भेदस्य भरतादिभिरुक्तस्यानुपपत्तेः।

अत्र प्रियप्रवासज्ञानजन्यदुःखवत्त्वं प्रोषितभर्तृकालक्षणम्। निष्ठार्थस्य विवक्षायां प्रयोजनाभावात्। अन्यथा प्रवत्स्यत्प्रवसत्पतिकयोर्भेदान्तरत्वापत्तेः। तदुक्तं काव्यप्रदीपे––"वर्तमानवत्स्यमानावपि स्वज्ञानद्वारा विप्रलम्भप्रयोजकाविति नाव्याप्तिः, प्रवासपदेन स्वज्ञानलक्षणाद्वा" इति। यत्त्वग्रे नवमी नायिकेत्यभिधास्यते तत्प्रौढिमात्रम्। भरतादिभिरनुक्तनायिकाभेदान्तरस्वीकारे प्रमाणप्रयोजनयोरन्यतरस्याप्यभावादिति रहस्यम्॥

**दुःखमिति**। तस्य क्षणिकत्वाद्दीर्घेति धाराभिप्रायम्। तस्या अपि त्रिचतुरादिव्यक्तिभिरुपपन्नत्वात्तरमित्युक्तम्। अपिशब्दोऽभिधान-

मुग्धा प्रोषितभर्तृका यथा—

दुःखं दीर्घतरं वहन्त्यपि सखीवर्गाय नो भाषते
शैवालैश्शयनं सृजन्त्यपि पुनश्शेते न वा लज्जया।
कण्ठे गद्गदवाचमञ्चति दृशा धत्ते न वाष्पोदकम्
सन्तापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥३९॥

---

योग्यत्वसूचनार्थः । वहतीति तिङन्तपाठ एव श्रेयान्, सृजतीत्यादावुत्तरत्र तथैव दर्शनात् । "वहन्तीति शत्रन्तम्" इति केचित् । सखीत्यन्तरङ्गत्वसूचनम् । वर्गपदं सखीत्वावच्छिन्नाद् गोपनार्थम्, समुदायधर्माणां प्रत्येकावयवविश्रान्तत्वात् । दुःखेन भाषणक्रियाकर्मणा वर्गस्येप्सितत्वाच्चतुर्थी। तथा च कैयटः—"माणवकाय धर्मं ब्रूते इत्यपि भवति, यदा धर्मेण कर्मणा माणवकस्येप्सितत्वं भवति" इति ।

यत्तु "सखीभ्यो गोपनाल्लज्जावत्त्वं द्योत्यते" इति। तन्न। लज्जयेत्यस्यात्राप्यन्वयाद्व्यङ्ग्यत्वायोगात् । शैवालपदं शैत्यद्योतनार्थम् । वहुत्वं शयनानुकूलसन्निवेशविशेषार्थम् । वाशब्द एवार्थो न स्वपित्येवेत्यर्थः। न च शयनाभावे तद्विरचनं किमर्थमिति वाच्यम्;

**दशावस्थाः** अभिलाषादिदशदशा भवन्तीति शेषः। तास्तु अग्रे विप्रलम्भनिरूपणावसरे वक्ष्यन्ते।

ततो मुग्धां प्रोषितभर्तृकामुदाहर्तुमुपक्रमते—**मुग्धेति**। **दुःखमिति**। **अम्बुजमुखी** कमलवदना **दीर्घतरमत्यायतं** वियोगजन्यं दुःसहमिति यावत्। **दुःखं** सन्तापं **वहन्ती** धारयन्त्यपि **सखीवर्गाय नो भाषते** न कथयतीत्यर्थः । लज्जावशादितिशेषः। **वा** पुनः **शैवालैः** जलनीलिकाभिः । "शैवालं जलनीलिका" इत्यमरः । **शयनं** तल्पं **सृजन्त्यपि** रचयन्त्यपि **लज्जया**ऽपत्रपया तत्र **न शेते** न स्वपिति। **कण्ठे** गले **गद्गदवाचं** मिन्मिनध्वनिम् स्वरविकारमितियावत्। "मदसंमदपीडादयैर्वैस्वर्यं गद्गदं विदुः" इति साहित्यदर्पणे। **अञ्चति** वहति किन्तु **दृशा** नेत्रेण **वाष्पोदकम्** अश्रुविन्दुं **न धत्ते**। इत्थं **यत्** यादृशं **सन्तापं** क्लेशं **सहते** मृष्यति **तत्** सन्तापमित्यर्थः। **चेतोभवः** मनसिजः काम एव **वेद** जानाति। नान्यः कोऽपीत्यर्थः। विशेषोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥३९॥

मध्या प्रोषितभर्तृका यथा--

वासस्तदेव वपुषो वलयं तदेव
हस्तस्य सैव जघनस्थलरत्नकाञ्ची ॥
वाचालभृङ्गसुभगे सुरभौ समस्त-
मद्याधिकं भवति ते सखि किं निदानम् ॥ ४० ॥

---

तापौत्कट्येन शयनार्थं प्रथमं प्रवृत्तेः। यद्वा हस्तावच्छेदेनापि तदासङ्गो भवत्विवतीच्छया तद्बोध्यम्। कण्ठे इत्यवच्छेदकत्वं सप्तम्यर्थः। "मदप्रमदपीतादेर्वाग्भङ्गं गद्गदं विदुः।" अन्तर्वाष्पतादशायां गिरो गद्गदत्वम्, दृशा त्वश्रु न धत्ते, वियोगदुःखप्रकाशापत्तेः। सहत इति सन्तापस्य दुर्वहत्वसूचनम्। यदिति क्रियाविशेषणम्। अम्बुमुखीति तत्सहनानौचित्यं व्यङ्ग्यम्। तत्तन्निष्ठदुःखसहनं चेतोभवो वेद। ततो गोपयितुमशक्यत्वात्। अन्येषां तु परदुःखस्य प्रत्यक्षायोगात्तदनुमापकलिङ्गाभावाद्वाक्यप्रयोगाभावाच्च न तद्बोध इति भावः। अयमर्थः--

आवेदनं सुहृद्भ्यः शिशिरोपायप्रसङ्गरुदिते वा
दुःखविनोदोपायात्तद्व्यतिरेके महांस्तु तत्प्रसरः ॥ ३९ ॥

**वास इति**। वस्त्रघटितभाररूपसमुदायवारणाय वपुष इति। परिधेयमात्रमित्यर्थः। पूर्वकालीनात्तस्माद्विशिष्टभारवत्तावारणाय तदिति। येन पूर्वकाले भारो नाभूदित्यर्थः। तत्तद्भिन्नोभयसत्तावारणाय एवेति। एवमुत्तरत्र योज्यम्। वलयपदं खेदाजनकत्वार्थम्। "पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः। "एकयष्टिर्भवेत्काञ्ची" इति भरतः। "अधिकमसह्यं भवतीति" केचित्। वस्तुतस्तु काञ्चित्प्रोषितभर्तृकां वसन्तोत्सवे मङ्गलार्थं भूषणादि परिधापयन्ती सखी प्राह--वास इति। यस्मिन्नङ्गे यावदपेक्षितं ततो न्यूनानतिरिक्ततया पूर्वं निर्णीतत्वमिति तच्छब्दानामर्थः। अतएव रत्नपदं सङ्गच्छते। उत्सवे विशिष्टानां ग्रहणौचित्यात्, सहजतस्तु प्रोषितभर्तृकायास्तदनौचित्यात्। तथा च भरतः--

चिन्तानिश्वासखेदैश्च हृत्तापाभिनयेन च।
सखीनां सम्प्रलापैश्च आत्मावस्थावलोकनैः॥
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च।
निर्भूषणमृजात्वेन दुःखेन रुदितेन च॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा।
तथा प्रोषितकान्ता च भावानेतान् प्रयोजयेत्॥

अधिकमङ्गापेक्षयातिरिक्तं भवति कार्श्योदयादित्यर्थः, किं निदानं किं कारणम्। एषां तावद्वृद्धिरसम्भावितैव किन्तु त्वदङ्गकार्श्यादेव तदाधिक्यम्। तत्र च को हेतुरिति प्रश्नाभिप्रायः। सर्वयोग्यत्वसूचनाय सुरभाविति। तज्ज्ञापकमाह—भृङ्गेति। तेषां स्वरूपसत्तामात्रेण ज्ञापकत्वाभावाद्वा वालेति। सुभगेति जनानन्दकरत्वार्थम्। "सौभाग्यं जनप्रियत्वम्" इति विज्ञानेश्वरः। तथा च सखीभ्यस्तदकथनाल्लज्जा। कार्श्योदयाच्च मदनाधिक्यमितिभावः। व्यङ्ग्यं तु प्रियप्रवासदुःखादन्यत्किञ्चित्कारणं न किमपि। किमिति प्रतिषेधार्थम्। वाचालेत्यत्र कुत्सितत्वं दुःखोद्दीपकत्वात्। सुभगत्वं जनान्तरापेक्षम्। यद्वा भृङ्गाणां सुभगे तदानन्दहेतुकुसुमसमृद्धिकरत्वात्॥४०॥

मध्यां प्रोषितभर्तृकामुदाहर्तुमुपक्रमते—**मध्येति**। **वासस्तदेवेति**। हे **सखि! ते वपुषः** त्वद्देहस्य **तदेव** पूर्वपरिगृहीतमेवेत्यर्थः। **वासः** वसनम्। **हस्तस्य** करस्य **तदेव** पूर्वधृतमेव **वलयं** कङ्कणम्। **जघनस्य** कटिपुरोभागस्य **रत्नकाञ्ची** मणिमेखलाऽपि **सैव** वर्तते इतिशेषः। किन्तु **वाचालभृङ्गसुभगे** वाचालाः कुत्सितवहुभाषिणः "आलजाटचौ वहुभाषिणि" इति कुत्सार्थे आलच्। ते च ते भृङ्गा द्विरेफाः तैः सुभगः परिपूर्णस्तस्मिन् **सुरभौ** वसन्ते तत्समस्तं वासोवलयरत्नकाञ्च्यादिकम् **अधिकम्** आकारेणायतं **भवति**। अत्र **किं निदानम्** कोऽत्र हेतुरित्यर्थः, "निदानं त्वादिकारणम्" इत्यमरः। यानि वासोवलयकाञ्च्यादीनि पूर्वं त्वदवयवेषूपयुक्तान्यभवन् तान्येवास्मिन् वसन्तकाले वृहदाकारतया प्रतीयन्तेऽवयवानां सम्प्रतिकृशत्वात्, कोऽत्र कार्श्यहेतुरितिभावः। विभावनाऽत्रालङ्कारः। वसन्ततिलका च वृत्तम्॥४०॥

प्रौढा प्रोषितभर्तृका यथा—

माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची किञ्च त्वयि यदुपते प्रस्थिते प्रस्थितैव।
अन्यद् ब्रूमः किमिह धमनी विद्यते वा न वेति
ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति॥४१॥

---

**मालेति**। बालेतिस्पर्शसौकुमार्यव्यञ्जनम्। अम्बुजेति तापोपशामकतावच्छेदकशक्तिसूचनम्। दलेति तदवच्छेदेनाङ्गसंयोगलाभार्थम्। पुष्पान्तरसंवलननिषेधाय मयीत्युक्तम्। विभक्तानां तेषां स्वकार्यानुपधायकत्वान्मालेत्युक्तं, तत्प्रचुरेत्यर्थः। तत्प्रकृतवचने मयट्। "हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिकः" इत्यमरः। मुक्तानामुत्तमत्वसूचनार्थं मौक्तिकीत्युक्तम्। किञ्चेतिपदं काञ्च्यामपि मौक्तिकीत्यस्यानुषङ्गलाभार्थम्। तेनोभयत्र तापापनोदकत्वं व्यङ्ग्यम्।

मुक्ताविद्रुमवज्रेन्दुवैडूर्यस्फटिकादिकम्।
मणिरत्नं सरं शीतं कषायं स्वादु लेखनम्॥

इति वैद्यकोक्तेः। प्रवसतीति सतिसप्तम्या प्रवासप्रस्थानयोस्तुल्यकालत्वम्। एवकारो विप्रतिपत्तिनिरासार्थः। अन्यदित्यत्र वक्ष्यमाणस्य प्रतियोगित्वेनान्वयः। किं ब्रूम इत्यन्वयः।

इह पाणिमूले धमनी नाडी वर्तते वा न वेत्यन्यतरज्ज्ञातुं

प्रौढां च प्रोषितभर्तृकामाह—**प्रौढेति**। **मालेति**। **हे यदुपते**! श्रीकृष्ण! **त्वयि प्रस्थिते** गोकुलाद्व्रजति सति। **बालो** नवीनश्चासावम्बुजः कमलं **तद्दलानि** तन्मयी "प्राचुर्ये मयट्" नूतनकमलदलप्रचुरेतियावत्। **माला** स्रक्। **मौक्तिकी** मुक्तामयी **हारयष्टिः** हारलतेत्यर्थः। **किञ्च** अथ च **काञ्ची** मेखला **प्रस्थितैव** त्वद्विरहव्याकुलतया देहकार्श्यात् स्वस्थानाच्च्युतैवेति भावः। **अहह** खेदेऽव्ययम्। **अन्यद्** इतः परं **किं ब्रूमः** किं कथयामहे यत् **इह**ास्मिन्देहे **धमनी** नाड़ी "नाड़ी तु धमनी शिरा" इत्यमरः। **वर्तते वा न वेति ज्ञातुं बाहोः वलयं** करकङ्कणं **पाणिमूलं** भुजादिभागं **प्रयाति** गच्छति। जीवितेऽप्यस्याः संशय इति व्यङ्ग्यम्। उत्प्रेक्षालङ्कारः। मन्दाक्रान्ता वृत्तम्॥४१॥

**परकीया प्रोषितभर्तृका यथा—**

**श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते**
**सद्यो मर्मरशङ्कया न च तया संस्पृश्यते पाणिना।**
**यातुर्वाचि सुहृद्गणस्य वचसि प्रत्युत्तरं दीयते**
**श्वासः किन्तु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा ॥४२॥**

---

निर्णेतुम्। "वाहोरिति षष्ठीति" केचित्, वस्तुतो वाहोः सकाशाद्वलयं कर्तृ पाणिमूलं प्रयाति। याने प्रकर्षश्चान्यकृतव्यापारानपेक्षत्वम्। तेन कार्श्यं व्यङ्ग्यम्। "करस्याङ्गुष्ठमूले या धमनी जीवसाक्षिणी" इति वैद्यकोक्तेः। एतेन मरणस्य जातप्रायत्वं सूचितम्। अतएवाह हेति खेदातिशयार्थम्। पूर्वार्द्धे अरतितापादयो व्यङ्ग्याः। वलयस्थापनं च सौभाग्यलक्षणतया बोध्यम्। अत्र कार्श्यहेतुकवाहुवलयपाणिमूलसंयोगे उक्तजिज्ञासाहेतुकनाडीसंयोगारोपादुत्प्रेक्षा। मन्दाक्रान्तावृत्तम् ॥४१॥

परकीया च प्रोषितभर्तृकेत्यत्र भर्तृशब्दो जारपरः। "एवं सामान्यवनितायामपि" इति केचित्। तन्न। सामान्यवनितायां जारस्याप्यनन्वयात्। स्वभर्तृभिन्नत्वे सति स्वानुरागविषयपुरुषस्य जारपदार्थत्वात्। तस्मादनुरागविषयमात्रपर इति व्याख्येयम्।

**श्वश्रूरिति**। अनेनावश्यग्राह्यत्वसूचनम्। पद्मदलदानं सौभाग्यार्थं धारणोद्देशेन ज्ञेयम्। अस्याः प्रियश्चिरं जीवत्वितीच्छया दत्तस्यापि स्वप्रेमविषयोपनायकेऽपि मङ्गलपर्यवसानादवश्यधारणीयत्वं व्यङ्ग्यम्

---

अथ परकीयां प्रोषितभर्तृकामुदाहर्तुमुपक्रमते—**परकीयेति**। **श्वश्रूरिति**। **श्वश्रूः** पतिप्रसूः "पतिपत्न्योः प्रसूः श्वश्रूः" इत्यमरः। पाणिग्रहीतुरेव जननी न जारजननीतिभावः। यदित्यध्याहार्यम्। **पद्मदलं** कमलपत्रं **ददाति** प्रयच्छति, सौभाग्यसूचकत्वाद्धारणायाशी रूपेणेतिभावः। **तदपि** पद्मदलं **कुरङ्गीदृशा** मृगलोचनया **तया** नायिकया परकीययेतिभावः। **भ्रूसंज्ञया** भ्रूभङ्गसूचनेनेति भावः। "नामचेतनयोः संज्ञा सूचनायाम्" इति शाश्वतः। **गृह्यते** स्वीक्रियते। तु किन्तु **सद्यः** तत्क्षणमेव **मर्मरशङ्कया** मर्मरः शुष्कपर्णध्वनिः, मर्मरोऽस्त्यस्मिन्निति मत्वर्थीयोऽच्, "मर्मरो

अतएव तदपीत्युक्तम् । भ्रूसंज्ञया भ्रूव्यापारेण गृह्यते स्वीक्रियते न तु हस्तेन । व्यवधानेन तच्छोषे आतपादिजन्यत्वेनापि समाधानं स्यादतः सद्य इति। स्पर्शाव्यवहितोत्तरमेवेत्यर्थः। मर्मरपदं शोषार्थकम्। शङ्का निश्चयः । ग्रहणोत्तरं मुष्टिबन्धेनापि तच्छोषे निह्नवः स्यादित्याशङ्कायां त्वङ्गुलिपीडनेन शुष्कपत्राणां शब्दः श्रूयेतेति तच्छोषानुमानं स्यादिति मर्मरेत्युक्तम् । पाणिना न संस्पृश्यते इत्यत्र श्वश्रूरित्यस्यैवान्वयः। "कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा" इत्यादिना प्राप्तं तस्याः पादस्पर्शमपि न करोति। तापप्रत्यक्षं तस्याः स्यादितिभियेत्यर्थः। एतेन "भ्रूसंज्ञयेत्यत एव पाणिव्यावृत्तौ पाणिना न संस्पृश्यत इति वाच्यवृत्त्याभिधानं न चमत्कारावहम्" इति चोद्याभासो निरस्तः। "परिसङ्ख्यायां व्यावर्त्यस्य क्वचिदार्थत्वं क्वचित्तु शाब्दत्वमिति" काव्यमीमांसकसिद्धान्ताच्च। "यातुर्देवरपत्न्या" इति केचित्। तन्न, देवरपदेन कनिष्ठभ्रातैवोच्यत इति क्षीरस्वाम्यादिभिरुक्तत्वात्। यातृपदस्य च भर्तृभ्रातृमात्रपत्नी-वाच्यतया सङ्कोचानौचित्यात्। तस्या वाचि लौकिककलहादिरूपा-याम्। तासां प्रायेण परस्परद्वेषवत्त्वात्। सुहृदगणस्य वचसि सुहृद्वचनयोग्यं प्रत्युत्तरं दीयते न तु कोपगर्भम् । तत्सत्त्वेऽपि अत्युष्णः श्वासोऽपि न मुच्यते। किन्त्विति तत्प्रसक्तिर्व्यङ्ग्या। अल्पाक्षेपे ऽप्येतावदुष्णश्वासमोक्षे तत्स्पर्शादन्येषां स्ववृत्तान्ततर्को माभूदिति तदभिप्रायः। हुतवहादपि क्रूर इतित्वपदार्थत्वादुपेक्ष्यम्। यातृवचने सुहृद्वचने चोत्तरं दीयतेऽत्यावश्यकत्वान्नान्यवचन इत्युपेक्ष्यम्।

वस्त्रभेदे स्याच्छुष्कपर्णध्वनौ तथा" इति मेदिनी । तस्य शङ्कया सन्देहेन **पाणिना** करेण **न संस्पृश्यते** न परामृश्यत इत्यर्थः । **यातुः** पतिभ्रातृभार्यायाः। "भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्" इत्यमरः। **वाचि** वाक्ये **सुहृद्गणस्य** सख्यादेश्च **वचसि** वाक्ये पृच्छायामिति यावत् । **प्रत्युत्तरं** प्रतिवाक्यं **दीयते किन्तु हुतवहक्रूरः** अनलविषमः **श्वासः न मुच्यते** विसृज्यते । श्वश्रूः यातरश्च न मे विरह-सन्तापं जानीयुरिति पत्यतिरिक्तपुरुषानुरक्तायास्तद्विरहे स्थितिः कथंचिद् वर्ण्यते। लुप्तोपमयोः संसृष्टिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥४२॥

सामान्यवनिता प्रोषितभर्तृका यथा—

विरहविदितमन्तः प्रेम विज्ञाय कान्तः
पुनरपि वसु तस्मादेत्य मे दास्यतीति।
मरिचनिचयमक्ष्णोर्न्यस्य बाष्पोदबिन्दून्।
विसृजति पुरयोषिद् द्वारदेशोपविष्टा ।।४३।।

---

किन्त्वित्यादिस्वरसविरोधात्। पूर्वार्द्धवदुत्तरार्द्धेऽपि चरणद्वये वाक्यैकवाक्यत्वप्रत्ययात् ।।४२।।

**विरहेति**। विरहपदमत्र विप्रलम्भमात्रपरम्। पारिभाषिकविरहस्य उत्काप्रकरण एवोदाहरिष्यमाणत्वात्। तेन विदितं ज्ञातमाभ्यन्तरं प्रेम मदीयं विज्ञाय। "यदीयमेवं विरहवती तर्हि मय्यतीवप्रीतिमतीति स्वविषयकमत्प्रेम विज्ञायेति यावद्" इति केचित्। तच्चिन्त्यम्। विदितमित्यस्यानुपयोगापत्तेः। नायकज्ञानविषयत्वं नायिकाज्ञानविषयत्वं वा प्रतिपाद्यम्? नाद्यः। विज्ञायेत्यत एव पर्याप्तेः। नान्त्यः। तत्र विरहस्याहेतुत्वात्। इदं च पूर्वत्रापि योज्यम्। तस्मादयमर्थः— विरहदशायां विदितं, लोकैरितिशेषः। अश्रुमत्तालिङ्गेन तद्विप्रलम्भानुमानवद्भिर्लोकैर्नायिकागमनानन्तरं तस्मै तदभिधानात्तस्यापि तज्ज्ञानं भविष्यतीति भावः। तस्मात्पूर्वदत्तादपि धनादधिकं वसु मह्यं दास्यति। पुनरिति, पूर्वमपि धनस्य दत्तत्वात्। "तस्माद्देशान्तरादेत्य" इति कश्चित्। तच्चिन्त्यम्। अप्रयोजनत्वात्। मरिचेति। तच्चूर्णसंयोगादश्रूत्पत्तेः। निचयमश्रुबाहुल्यार्थम्। अङ्गान्तरे

क्रमप्राप्तां सामान्यां प्रोषितभर्तृकामुदाहर्तुमुपक्रमते—**सामान्येति**। **सामान्यवनिता** वाराङ्गनेति यावत्। तस्यां भर्तृपदमधिकधनदकामुकपरमेव। तत्प्रवासेऽर्थसङ्कोचात्। उदाहरति—**विरहेत्यादि**। **कान्तः** प्रियो धनिककामुक इति यावत्। **तस्माद्** देशान्तराद् **एत्य** आगत्य। **विरहेण** स्वविश्लेषेण तज्जनितकृशता दिनेतिभावः। **विदितं** ज्ञातम् **अन्तःप्रेम** हृद्गतस्नेहं **विज्ञाय** अवबुध्य **पुनरपि** भूयोऽपि **मे** मह्यम् **वसु** धनमधिकतरमिति भावः। **दास्यति** इत्याशयेतिशेषः। **द्वारदेशोपविष्टा** द्वारदेशे प्रतीहारस्थाने "स्त्रीद्वार्द्वारं प्रतीहारः" इत्यमरः। उपविष्टा निषण्णा

**अन्योपभोगचिह्नितः प्रातरागच्छति पतिर्यस्याः सा खण्डिता। प्रातरित्युपलक्षणम्। अस्याश्चेष्टाः—अस्फुटालापचिन्तानिःश्वासतूष्णीम्भावाश्रुपातादयः ॥**

---

तदनुपयोगादक्षीति। एकनेत्राश्रुणा दुःखाननुमानाद्द्वित्वम्। न्यस्येति। सर्वमरिचचूर्णस्य यथा तत्र प्रवेशः स्यादित्यर्थः। मन्थौदनेत्यादिना उदकशब्दस्योदादेशः। विन्दुपदं कणमात्रव्यावृत्त्यर्थम्। वहुत्वमविच्छेदसूचनार्थम्। विसृजतीति नेत्रविभागलाभः। तेन वेगविशेषो व्यङ्ग्यः। पुरयोषिदिति वस्तुतो विप्रलम्भाभावव्यञ्जनार्थम्। अन्तरेवावस्थाने लोकैर्लिङ्गज्ञानाभावेन तदनुमानानुपपत्त्या द्वारेति। सन्निहिताभ्यन्तरभागस्थत्वे लोकानवेक्षणस्यापि सम्भावितत्वात्। देशेति। अल्पकालावस्थानेऽश्रुदर्शनसत्त्वेऽपि व्याप्तिज्ञानादिविलम्बेन विप्रलम्भानुमितिर्न स्यादत उपविष्टेति चिरकालावस्थानलाभार्थम्। "ननमयययुतेयं मालिनी भोगिलोकैः" इति वृत्तरत्नाकरः ।।४३।।

**अन्योपभोगेति**। तथा च भरतः—

व्यासङ्गादुचिते यस्यावासके नागतः प्रियः।
तदनागमनार्ता तु खण्डितेत्यभिसंज्ञिता ।। इति।

व्यासङ्गान्नायिकान्तरासक्तिरूपात्। अन्यस्य विरहोत्कण्ठितायामेव वाच्यत्वात्। तत्पदमन्यसम्भोगचिह्नाभावविशिष्टप्रियपरम्। तस्य यदनागमनम्। अन्यसम्भोगचिह्नाभावविशिष्टपतिसमागमनाभावः। स च विशेष्याभावमात्र-प्रयुक्तो न चमत्कारी भेदान्तरत्वानुपयोगी

**पुरयोषित्** गणिका **अक्ष्णोः** स्वनयनयोः **मरिचनिचयं** मरिचस्य कोलकस्य निचयं मात्राधिक्येन कोलकचूर्णमितियावत्। मृडधातोर्बाहुलकादीचः, ह्रस्वमध्यमपि। "मरीचं कोलकं कृष्णम्" इत्यमरः। **न्यस्य** प्रक्षिप्य **वाष्पोदबिन्दून्** अश्रुपृथुकानितियावत्। **विसृजति** मुञ्चति।

परदेशादागतः कामुकः स्ववियोगेऽश्रुपूरितां मां जनैर्ज्ञात्वाऽधिकधनं दास्यतीति मत्वा रुरोदेति भावः। काव्यलिङ्गमलङ्कारः। मालिनी छन्दः ।।४३।।

वेति सम्भोगचिह्नाभावरूपविशेषणाभावप्रयुक्त एव ग्राह्यः। तथा चान्यसम्भोगचिह्नविशिष्टपत्यागमनेऽपि बोध्यम्। आगमनस्यापि स्वरूपतो दुःखाजनकत्वादागमनदर्शनेत्युक्तौ चागमनपदवैयर्थ्यादुक्त-पतिदर्शनजन्यदुःखाश्रयत्वं लक्षणार्थः फलितः। अत एव पश्चादुक्तम्——

निद्राखेलालसगतिं सचिह्नं सरदव्रणम्।
एवंविधं पतिं दृष्ट्वा वैमनस्यं भवेत् स्त्रियाः।।
तीव्रासूयितवचना रोषाद्बहुशः प्रवेपमानोष्ठी।
साध्वितिसुष्ठ्वितिवाच्यैः शोभस इत्यभिनयं युञ्ज्यात्।।

उपलक्षणमिति। अन्यनायिकासम्भोगोत्तरकालस्येत्यर्थः। पतिरित्यपि प्रियमात्रपरमन्यथा परकीयावेश्ययोरव्याप्तेः। अत्र वदन्ति——पराङ्गनासङ्गजन्यमानवत्याः खण्डितायाश्च भेदः कथमिति? अत्रेदमुत्तरम्। अत्र माननिरूपणमात्रार्थमुदाहृतम्, न तु मानवतीभेदान्तरम्। प्रेमसौन्दर्यगर्वितयोर्मानवत्याश्च पूर्वोक्त-भेदेष्वपरिगणितत्वात्, अन्यथा षोडशानामुक्तत्रैविध्ये तेषां चाष्ट-विधत्वे तेषामप्युत्तमादित्रैविध्ये बहुभेदापत्तेः। षोडशनिरूपणोत्तरमेता अन्यसम्भोगेत्यादि निरूप्य एताः षोडशाप्यष्टभिरवस्थाभिरित्या-देरुक्ततया तासां तिसृणां भेदान्तरत्वेनानभिमतत्वात्। एतेन हेतुदर्शनकाले खण्डिता तज्जन्यानुमितिकाले मानवतीत्यपि न कल्पनीयम्।

पार्श्वमेति प्रियो यस्याः अन्यसम्भोगचिह्नितः।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता।।

इत्यादि दर्पणादिलक्षणविरोधाच्च सम्भोगानुमित्यैवेर्ष्योदयादिति

प्रोषितभर्तृकां निरूप्य खण्डितां लक्षयति——**अन्येत्यादि**। **अन्योपभोगचिह्नितः** अन्यस्याः स्वेतरनायिकाया उपभोगस्य सङ्गमस्य चिह्नं सञ्जातं यस्य तादृशः, **पतिः** कान्तः **यस्याः** सकाशमिति शेषः। **प्रातः** सम्भोगान्तकाले **आगच्छति सा** खण्डिता तदाख्या नायिकेत्यर्थः। स्वाधीनपतिकात्वाभिमानस्य खण्डनात् खण्डिता-त्वमस्याः। **प्रातरित्युपलक्षणम्** प्रातःपदं सम्भोगानन्तरत्वसूचकमित्यर्थः।

**मुग्धा खण्डिता यथा—**

**वक्षः किमु कलशाङ्कितमिति किमपि द्रष्टुमिच्छन्त्याः।**
**नयनं नवोढसुदृशः प्राणेशः पाणिना पिदधे ॥४४॥**

**मध्या खण्डिता यथा—**

**वक्षोजचिह्नितमुरो दयितस्य वीक्ष्य।**
**दीर्घं न निःश्वसिति जल्पति नैव किञ्चिद्।**

---

दिक्। आदिपदं चिन्तानिःश्वासखेदेष्विति प्रागुपन्यस्तभरतवाक्ये ये उक्ता अत्र च नोक्तास्तत्परम्।

वक्ष इति। "मौग्ध्येन वास्तवान्यनायिकाकुचाभोगचिह्नाज्ञानात् कलशाङ्कितत्वभ्रम" इति केचित्। तन्न। कुचाश्लेषचिह्ने कलशसंस्थानस्यानुपपन्नत्वात्। उच्चत्वपीनत्वयोस्तत्र कथमप्यशक्यत्वात्। तटावच्छेदेनैव कुचाश्लेषात् तिर्यगवच्छिन्नपरिरम्भे चिह्नोत्पत्त्यनुकूलयन्त्रणानुदयात्, तत्र प्रमाणाभावाच्च। कलशाङ्कितत्वज्ञानेन खण्डितालक्षणस्यासङ्गतिप्रसङ्गाच्च। तस्मात्प्रियस्य वक्षः किं कुचाङ्कितम्? कलशपदं साध्यवसानलक्षणया कुचपरम्। इति सखीं प्रष्टुमिच्छन्त्या इति योज्यम्। न च सखीप्रश्नेच्छाज्ञानं नायकस्य कथमिति वाच्यम्; स्वप्रश्नेच्छाज्ञानमपि कथमित्यस्य तुल्यत्वात। लिङ्गात्तदनुमानस्यापि तुल्यत्वात्॥४४॥

लक्षणमुक्त्वा तच्चेष्टा आह—**अस्या इति। अस्याः** खण्डिताया **चेष्टा**स्तावत् **अस्फुटालापः** गद्गदवचनं **चिन्ता** आध्यानम् **सन्तापो** दुःखमूष्मा वा **निःश्वासः** दुःखसूचिका श्वासक्रिया **तूष्णीम्भावः** मौनम् **अश्रुपातः** नेत्रवाष्पोद्गिरणम् **आदयः** एवंभूता भवन्तीत्यर्थः।

अथ खण्डितां क्रमशः उदाहरन्नाह—**मुग्धेति। वक्ष इति। वक्ष** उरः। तवेति शेषः। **कलशेन** घटेन तदुपमितनायिकान्तरकुचेनेत्यभिप्रायः। **अङ्कितं** चिह्नितं **किमु** प्रश्नसूचकमव्ययम्। **इति** एवं **किमपि** प्रश्नं **प्रष्टुमिच्छन्त्याः** पिपृच्छिषन्त्या **नवोढसुदृशः** नवोढा चासौ सुदृशी च तस्या मुग्धासुलोचनाया इति भावः। **नयनं** लोचनं **प्राणेशः** प्रियतमः **पाणिना** करेण **पिदधे** आच्छादयत्। यथा नेयं नायिकान्तर-

प्रातर्जलेन वदनं परिमार्जयन्ती
बाला विलोचनजलानि तिरोदधाति ॥४५॥

**प्रौढा खण्डिता यथा—**

मामुद्वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तकै-
रालिप्ताननमानतीकृतमुखी चित्रार्पितेवाभवत् ।
रूक्षं नोक्तवती न वा कृतवती निश्वासकोष्णे दृशौ
प्रातर्मङ्गलमङ्गनाकरतलादादर्शमादर्शयत् ॥४६॥

---

**वक्षोजेति** । स्तनालिङ्गनचिह्नयुक्तं वक्षो वीक्ष्य । अन्यस्य तथात्वे क्षतिविरहात् । दयितस्येति । चिह्नपदं कुङ्कुमादिपरम् । "दृढालिङ्गनेन स्तनमुद्रापरम्" इत्यन्ये । दीर्घं यथास्यात्तथा न निःश्वसिति लज्जाधीनत्वात् । किञ्चित्प्रियमप्रियं वा नैव जल्पति, पूर्ववत् । किन्तु प्रभाते जलेन वदनं मुखं प्रक्षालयन्ती बाला अश्रुजलानि तिरयति । वदनक्षालनजलमेतदिति बुद्ध्या परेषामश्रुत्वज्ञानानुत्पत्तेः । कालान्तरे वदनक्षालनेऽन्येषां शङ्का स्यादतः प्रातरिति, कुङ्कुमादिना मार्जनस्य प्रकृतानुपयोगात् । जलेनेति । नेत्रमात्रक्षालने रोदनज्ञानं स्यादेवातो वदनमिति । तस्याप्यन्यभागावच्छेदेन क्षालने तद्गोपनं न स्यादतः परीति । अनेन निश्वासतूष्णींभावाश्रुपाता उक्ता । निश्वासे दीर्घताया एव निषिद्धत्वात् ॥४५॥

कुचकुङ्कुमाङ्कितं मदुरः पश्येदिति भावः । काव्यलिङ्गानुप्रासयोः संसृष्टिरलङ्कारः । उपगीतिर्वृतम् ॥४४॥

मध्याखण्डितामुदाहरति—**वक्षोजेति** । **प्रातः** प्रभातकाले **दयितस्य** प्रियतमस्य "दय दानादौ" इति भौवादिकात् क्तः । उरः वक्षः **वक्षोजाभ्यां** कुचाभ्यां सपत्न्याः इति शेषः । **चिह्नितम्** अङ्कितं सपत्नीकुचालिप्तकुङ्कुमादियुक्तमितियावत् । **वीक्ष्य** अवलोक्य **बाला** अप्रगल्भेत्यर्थः । **दीर्घम्** आयतं यथास्यात्तथा **न निःश्वसिति** निःश्वासं न मुञ्चति । लज्जयेतिभावः । **नैव किञ्चित् जल्पति** दयितं न किमप्युपालभते । **किन्तु वदनं** मुखं **जलेन** वारिणा **परिमार्जयन्ती** प्रक्षालयन्तीतियावत् । **विलोचनजलानि** नेत्राश्रूणि **तिरोदधाति** आच्छादयति । काव्यलिङ्गमलङ्कारः । वसन्ततिलका वृत्तम् ॥४५॥

**मामिति**। विपक्षत्वं नायिकानिरूपितं ग्राह्यम्। पक्ष्मले प्रशस्तपक्ष्मयुक्ते दृशौ यस्याः सा। अम्बुजतुल्ययोः पादयोरलक्तकैर्यावकद्रवैरालिप्तं समन्ताद्रञ्जितमाननं मुखं यस्य तादृशं मामुद्वीक्ष्य उत्तानकरणाच्चरणप्रणामाच्चेतिभावः। हृदयादिगतचिह्नस्यावरणसम्भवादाननेति। तत्रापि स्वल्पावयवावच्छेदेन यावकसंयोगे कदाचिददर्शनमपि स्यादतो लिप्तेति। स्वल्पयावकावयवानां मुखे बह्ववयवावच्छिन्नसंयोगेऽपि तथात्वात्। आङिति। आनतीकृतमिति। च्विप्रत्ययेन पूर्वकाले आनतत्वाभावलाभाद्दर्शनानन्तरकालीनतया तदनुमितसपत्नीसम्भोगक्रोधजन्यत्वमानतत्वस्य लभ्यते।

यत्तु "आनतेत्यनेन मामयं विहाय तस्यां गुणशून्यायामासक्तो गुणानभिज्ञ एतस्मिन्समासक्तिर्मूर्खत्वनिबन्धनेति लज्जावत्त्वं व्यङ्ग्यमिति" तन्न। स्वीयात्वव्याघातात्। एवं च नतत्वमत्र तिर्यक्त्वमेव न त्वधोमुखत्वम्। अत एव सहसैव क्रोधज्ञानं माभूदिति। आङ ईषदर्थे व्याख्येयः। नत्वियमधीरा। उत्तरार्धविरोधात्। चित्रेऽर्पितालिखितेवाभवत्। मद्विषयकचाक्षुषादिरहितत्वात्। रूक्षं परुषं नोक्तवती धीरात्वात्। वाकारः समुच्चयार्थः। निःश्वासैर्दुःखजवाष्पैः। "कोष्णे ईषदुष्णे" इति केचित्। तन्न। निःश्वासपदस्य वाष्पवाचकत्वाभावात्। तस्मान्नितरां श्वासो ययोस्ते निःश्वासे। सामानाधिकरण्यं संसर्गः। तादृश्यौ च ते कोष्णे चेति कर्मधारयः। निःश्वासं क्रोधवाष्पं च नाकरोदितियावत्।

"प्रातरिति पृथग्" इति केचित्। तत्र मङ्गलमिति समासो वा। "विशेषास्त्वङ्गनाभीरुः कामिनी वामलोचना" इत्यमरः। अङ्गं प्रशस्तमस्त्यस्याः इति पामादित्वान्न प्रत्ययः। "अङ्गात्कल्याणे" इति तदन्तर्गणसूत्रम्। तथा च प्राशस्त्यं प्रत्ययार्थः प्रकृत्यर्थे। स च सम्बन्धे प्रत्ययार्थान्तरे विशेषणम्। प्रशस्ताङ्गवती स्त्रीति बोधः। करतलादिति "ल्यब्लोपे कर्मण्यधिकरणे चेति" अधिकरणे पञ्चमी। स्वकरतले स्थापयित्वेत्यर्थः। एतेन वाहृयादरसूचनम्। आशब्दश्चिह्नदर्शनपर्यन्तत्वसूचनार्थः। तत्र यावकमवलोक्य स्वयमेव मत्कोप-

परकीया खण्डिता यथा—

कान्तं निरीक्ष्य वलयाङ्कितकण्ठदेशं
मुक्तास्तया परभिया परुषा न वाचः।
दूतीमुखे मृगदृशा स्खलदम्बुपूरा
दूरात्परं रुरुधिरे नयनान्तपाताः ॥४७॥

सामान्यवनिता खण्डिता यथा—

---

कारणं ज्ञास्यतीति भावः। न च तेन तस्य ज्ञातत्वाद्वैयर्थ्यम्, मन्निष्ठ-ज्ञानविषयत्वं सपत्नीभोगस्य तेन ज्ञायतामित्यत्र तात्पर्यात् ॥४६॥

**कान्तमिति** । एतेन स्वानुरागविषयत्वसूचनम् । निरीक्ष्येति पूर्ववत्। वलयैः सपत्नीकङ्कणैरङ्कितश्चिह्नितः कण्ठदेशो यस्य तद्बाहुदृढपरिरम्भादितिभावः । परेभ्योऽन्येभ्यो भिया भीत्या "भयभीतिभीभिः" इति वार्तिकात्समासः। "उत्कृष्टया भीत्या शत्रुभीत्या च" इत्यपि केचित्। परुषाः क्रोधप्रकाशिकाः । तथा च मन्युप्रक्रमे भरतः—

शोभसे साधु दृष्टोऽसि गच्छ कस्माद्विलम्बसे।
मा मां स्प्राक्षीः प्रिया यत्र तव या हि हृदिस्थिता ॥

मृगदृशेति दृष्टिचातुर्यसूचनम् । स्खलत्प्रकाशभीत्या विच्छिन्न अम्बुपूरोऽश्रुप्रवाहो येषु। सम्यग्दूतीदर्शने प्रकाशापत्त्या नयनान्तेति। अन्तानामपि चिरं तत्र न्यासे दोषतादवस्थ्यमन्तःपातेति। विषयान्तरसञ्चारव्यवधानविशिष्टाः। सकृत्पाते दूत्या तदभिप्राया-नवबोधाद् बहुत्वम्।

तया प्रोत्साहनं कार्यमनुरागानुकीर्तनम्।
यथोक्तकथनं चैव तथा भावप्रदर्शनम् ॥

इति दूतीकृत्येषु भरतोक्त्या त्वदन्यत्र नाहं स्वप्नेऽप्यनुरक्त इत्यादेर्नायकसन्देशस्य सङ्घट्टनसमये पूर्वमुक्तत्वात्तद्विसंवादेन त्वयाहं प्रतारितेत्यभिप्रायेण दूतीति। रुरुधिरे इत्यनेन नयनानां कदाचिदन्यत्र सञ्चारेऽपि स्थैर्यं तन्मुख एवेति व्यङ्ग्यम्। "निदधिरे" इति केचित् ॥४७॥

उरस्तव पयोधराङ्कितमिदं कुतो मे क्षमा
ततो वसु निधीयतां मयि पुरा यदङ्गीकृतम् ।
इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया
क्वणत्कनककङ्कणं करतलात् समाकृष्यते ॥४८

---

उरस्तवेति । उर इत्याश्लेषव्याप्यत्वं तच्चिह्नस्य व्यङ्ग्यम् । तवेति पूर्वप्रतिज्ञातवैपरीत्यम् । इदमिति प्रत्यक्षत्वम् । पयोधरपदं स्तन एव पयोधरो मेघ इति श्लेषमूलकाभेदारोपेण रसवत्ताव्यञ्जनद्वारा दृढालिङ्गनसूचनार्थम् । अतएवाङ्कितत्वं सङ्गच्छते ।

प्रौढां खण्डितामुदाहरति—**प्रौढेति । मामुद्वीक्ष्येति । माम्** दयितम् **विपक्षपक्ष्मलदृशः** प्रशस्तानि पक्ष्माणि सन्त्यस्या इति पक्ष्मला, सिध्मादित्वाल्लच् । पक्ष्मले दृशौ यस्याः सा पक्ष्मलदृक्, विपक्षा च सा पक्ष्मलदृक् तस्याः सपत्न्या इत्यर्थः । "सपत्नोऽसहनो विपक्षः" इति हैमः । **पादाम्बुजालक्तकैः** पादपङ्कजस्थयावकैः । **आलिप्तानतम्** दिग्धवदनम् **उद्वीक्ष्य** अवलोक्य **आनतीकृतमुखी** पूर्वमनतमपि बलान्नतं कृतं मुखं यस्यास्तथाभूतेत्यर्थः । **चित्रार्पितेव** आलेख्यलिखितेव **अभवत्** । तथापि **रूक्षं** परुषं **नोक्तवती** नावदत् । **न वा दृशौ** नेत्रे **निःश्वासकोष्णे कृतवती** किन्तु **सा अङ्गना प्रातः** प्रभातकाले **मङ्गलं** शुभसूचकम् **आदर्शं** मुकुरं **करतलात्** स्वहस्ते स्थापयित्वेत्यर्थः । **अदर्शयत्** दर्शितवती । दयितया नितरां ह्रेपितस्य दयितस्येयमुक्तिः । अत्रानुप्रासोत्प्रेक्षाकाव्यलिङ्गालङ्काराः । शार्दूलविक्रीडितं च वृत्तम् ॥४६॥

परकीयां खण्डितामुदाहरति—**कान्तमिति । तया मृगदृशा** हरिणलोचनया नायिकयेतियावत् । **दूरात्** विप्रकृष्टादिव **वलयेन** कङ्कणेन सपत्न्या इति शेषः । **अङ्कितः** चिह्नितः **कण्ठदेशः** ग्रीवाप्रान्तो यस्य तादृशं **कान्तं** प्रियं **निरीक्ष्यावलोक्य परभिया** परेभ्यो दूतीनायकाभ्यामितरजनेभ्यो या भीः भयं तया रहस्योद्भेदनभीत्येत्यर्थः । **परुषाः** क्रूराः **वाचः** वचनानि **न मुक्ताः** नोदीरिताः । **परं** किन्तु **दूतीमुखे** सञ्चारिकावदने **स्खलदम्बुपूराः** स्खलन् विच्छिन्नोऽम्बुपूरोऽश्रुप्रवाहो येभ्यस्ते **नयनान्तपाताः** कटाक्षविक्षेपा इति यावत् । **रुरुधिरे** अवरुद्धाः स्थापिता इत्यर्थः । लोकभीत्या परुषाक्षराण्यनुच्चार्य तवैवेदमौद्धत्यमिति क्रूरकटाक्षपातेन दूती प्रतिबोधितेतिभावः । लुप्तोपमाऽनुप्रासश्चालङ्कारौ । वसन्ततिलका वृत्तम् ॥४७॥

**पतिमवमत्य पश्चात्परितप्ता कलहान्तरिता। अस्याश्चेष्टा भ्रान्तिसन्तापसम्मोहनिःश्वासप्रलापादयः।**

---

"स्तनश्चान्यसामान्यवनितायाः" इति केचित्। तन्न। स्वभिन्ननायिकामात्रस्य वाच्यत्वात्।

वाह्ये चाभ्यन्तरे चैव दुःखे चोत्पादिते क्वचित्।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता॥

इति स्मृतिः। अङ्गीकृतं देयत्वेन प्रतिज्ञातम्। मयीत्यनेन सौन्दर्यविशेषशालित्वं व्यङ्ग्यम्। तेन च प्रतिज्ञातधनस्य वहुत्वम्। रूपोत्कर्षेणैव च तदुत्कर्षात्। मयीतिसप्तम्या स्वस्य तदाधारत्वसूचनात् प्रतिज्ञासमय एव मदीयस्वत्वसम्पत्त्याऽवश्यदेयत्वसूचनम्। प्रवलत्वं वलात्तया ग्रहणे वैरस्य पर्यवसानात्। चेत इति मुखरागादेरभिन्नत्वसूचनार्थम्। प्रियतमत्वं तत्त्वेनाभिमतत्वम्। "द्रव्यवत्त्वेन तद्" इति केचित्। "वारस्त्री गणिका वेश्या" इत्यमरः। अत्र पुरुषकरकङ्कणस्यैकत्वौचित्यात्कथं क्वणनमित्याशङ्क्य "कङ्कणविशेषस्य नूपुरवदन्तर्गतगुलिकस्य शब्दसम्भवो बोध्य" इति केचित्। करतलमित्येव पाठः। क्वणत्कनककङ्कणमिति तु क्रियाविशेषणम्। "कङ्कणाश्च वेश्याया एव" इत्यन्ये। वेश्याकङ्कणसङ्घट्टनेनैव नायककरकङ्कणस्य क्वणनमिति तु रहस्यम्। आकर्षणे फलोपहितत्वलाभार्थः संशब्दः। "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति वृत्तरत्नाकरः॥४८॥

खण्डितां सामान्यस्त्रियमुदाहरति—उर इति। तव नायकस्य **इदमुरः** एतद्वक्षःस्थलं **पयोधराङ्कितं** पराङ्गनाकुचकुङ्कुमसंलिप्तम् अतः **मे** मम **क्षमा** त्वदागःसहनसामर्थ्यं **कुतः** कस्मात्स्यात्। **ततः** तस्मात्कारणात् **पुरा** पूर्वसङ्गमे **यद् वसु** यद्द्रव्यं दातुमितिशेषः। **अङ्गीकृतं** त्वया स्वीकृतं **तत् मयि** मत्पुरत इतियावत्। **निधीयतां** स्थाप्यताम्। **इति** एवमुक्त्वा **प्रवलचेतसः** स्थिरचित्तस्यापीत्यर्थः। प्रचलचेतस इति पाठो युक्तः प्रतीयते। रहस्यभेदनात्, द्रव्यनाशात्, प्रणयभङ्गाद्वा भीत्या चञ्चलमनस इतियावत्। **प्रियतमस्य** कान्तस्य **करतलात् क्वणत्** शब्दायमानं **कनककङ्कणं** सुवर्णवलयं **वारस्त्रिया** वेश्यया **समाकृष्यते** वलाद् गृह्यते इति भावः। अनुप्रासोऽलङ्कारः। पृथ्वीवृत्तम्॥४८॥

मुग्धा कलहान्तरिता यथा—

अनुनयति पतिं न लज्जमाना
कथयति नापि सखीजनाय किञ्चित्।
प्रचरति मलयानिले नवोढा
वहति परन्तु चिराय शून्यमन्तः ॥४९॥

---

पतिमिति प्रियमात्रपरम् । अवमत्य तदनुनयमगृहीत्वा, अवमन्येति नकारसहितपाठान्तरम्। अनुनासिकलोपस्य वैकल्पिकत्वादिति तदभिप्रायः । स चायुक्तः। मान्तानिटां वा नान्तानिटां च नादीनां नित्यमिति व्यवस्थितविकल्पस्याकरसिद्धत्वात् । पश्चादिति क्त्वाप्रत्ययार्थप्रदर्शनमात्रम् । परितप्ता स्वविशेष्यकानुचितकर्तृत्वप्रकारकज्ञानाश्रयः। प्रियावमाननजन्यपश्चात्तापवतीत्यर्थः । तदुक्तं मुनिना—

ईर्ष्याकलहसन्तप्तो यस्या नागच्छति प्रियः।
सामर्षवशसन्तप्ता कलहान्तरिता भवेत्॥

अमर्षवशेन प्रियानुनयप्रत्याख्यानकालीनेत्यर्थः।

**अनुनयतीति** । अनुनयः स्वव्यापारप्रयोज्यक्रोधाभावः। पतिं नानुनयति पतिनिष्ठो यः क्रोधाभावस्तदनुकूलव्यापारं न करोति, इत्यर्थः। सखीजनायापि किञ्चित् प्रियोऽनुनीयतामित्यादि न कथयति। उभयत्र लज्जमानेति हेतुः। मलयानिलपदं वसन्तसूचनद्वारां कामवेदनाबाहुल्यलाभार्थम्। प्रसरतीति दुर्वारत्वं व्यङ्ग्यम्।

अथ क्रमप्राप्तां कलहान्तरितां लक्षयति—**पतिमिति। पतिं** प्रियम् **अवमत्य** तिरस्कृत्य कृतानुनयमपीति शेषः। **पश्चात्** प्रियगमनानन्तरं **परितप्ता** सन्तापमनुभवन्ती **कलहान्तरिता** कलहात् प्रियेण सह विग्रहात् अन्तरिता दूरीभूतेत्यर्थः। उच्यत इतिशेषः। तत्क्रियामाह—**अस्या इति**। अस्याः कलहान्तरितायाः **चेष्टाः** क्रियास्तावत् । **भ्रान्तिः** अतस्मिंस्तद्बुद्धिः। **सन्तापः** दुःखं ग्लानिरितियावत्। **सम्मोहः** चित्तवैक्लव्यम्, **निःश्वासः** दीर्घश्वासवत्त्वं खेदसूचकमित्यर्थः। **ज्वरः** देहौष्ण्यम्, **प्रलापः** असम्बद्धभाषणम् आदिपदेन मूर्च्छानिधनप्रभृतयः।

**मध्या कलहान्तरिता यथा—**

**विरमति कथनं विना न खेदः**
**सति कथने समुपैति कापि लज्जा ।**
**इति कलहमधोमुखी सखीभ्यो**
**लपितुमनालपितुं च नाचकाङ्क्ष ॥५०॥**

---

चिराय नायकमिलनपर्यन्तम्। शून्यं विषयान्तरसञ्चाररहितम्। अन्तश्चित्तम् । वहति दधाति । जडता नाम सर्वकार्याप्रतिपत्तिरिति भरतः ॥४९॥

**विरमतीति** । कथनं सुहृद्भ्यो निवेदनं विना खेदो दुःखं न विरमति न मन्दीभवति । सखीनां सम्प्रलापश्चेति पूर्वोक्तभरतवचनादनुभवाच्च तस्य दुःखमान्द्यहेतुत्वात् । कथने चिकीर्षिते सति कापि दुर्वारा लज्जा समुपैति उपतिष्ठते । सं-पदं प्रतिबन्धोपधानसूचनार्थम्। लज्जया कथयितुं न शक्यत इति भावः। कथ्यतेऽनेनेति कथनं करणे ल्युट्। कथनानुकूलो व्यापार इति यावत् । स चेच्छास्वरूप एव ग्राह्यः । लज्जाविरहविशिष्टस्यैव तस्य दुःखनिवेदनानुकूलशब्दोच्चारणहेतुत्वात् । लज्जासत्त्वे प्रतिबन्धकसम्पत्तेरिति फलितम्। कलहं पत्युः स्वकर्तृकमवमानम्। सखीभ्यो वक्तुमवक्तुं चैच्छत्। पूर्वोक्तहेतुद्वयवशात् । अधोमुखी नायकव्यापारप्रतिबन्धदुःखवशात्।

अथ मुग्धाया इमां दशामुदाहर्तुमुपक्रमते—**मुग्धेति**। उदाहरति-**अनुनयतीति**। **नवोढा** नवपरिणीता मुग्धेत्यर्थः। **लज्जमाना** सव्रीडेत्यर्थः। प्रणयकलहे तिरस्कृतं **पतिं** प्रियं **न अनुनयति** न प्रसादयति। **नापि** न च **सखीजनाय** सहचरीवर्गाय **किञ्चित्** किमपि। तमनुनेतुमित्यर्थः। **कथयति** वदति परन्तु **मलयानिले** मलयमारुते **प्रसरति** सञ्चरति वसन्तकाले समागते सतीत्यर्थः। **चिराय** बहुकालं यावत् **शून्यं** प्रतिपत्तिरहितं विरहवेदनयेति शेषः। **अन्तः** हृदयमिति यावत्। **वहति** धारयति। काव्यलिङ्गमलङ्कारः पुष्पिताग्रा च वृत्तम् ॥४९॥

मध्यां कलहान्तरितामुदाहरिष्यन्नाह—**मध्येति** । **विरमतीति**। **कथनं** ख्यापनं प्रणयकलहस्येति शेषः। **विना खेदः** दुःखं **न विरमति** न शाम्यति।

**प्रौढा कलहान्तरिता यथा——**

**अकरोः किमु नेत्र शोणिमानं किमकार्षीः करपद्मतर्जनं वा।**
**कलहं किमधाः क्रुधा रसज्ञे हितमर्थं न विदन्ति दैवदुष्टाः ॥५१॥**

---

यत्तु "लज्जावशाद्" इति। तन्न। उक्तेच्छाद्वयकाले तदभावात्। अत्रौत्सुक्यलज्जयोः सन्धिः ॥५०॥

अकरोरिति। "नायिका स्वनेत्रादीन् प्रत्याह" इति केचित्। तथाहि——हे नेत्र! शोणिमानं रक्तत्वं किं कस्मादकरोः। मां प्रसादयन्तं नायकं प्रतीति भावः। हे करपद्म तर्जनं वा किमकार्षीः, रसज्ञे जिह्वे क्रुधा कोपेन कलहं किमधाः कृतवती। नेत्रारुण्यादीनामन्यथाप्युपपत्त्या क्रोधमात्रज्ञापककलहकारिण्यास्तव महानेवापराधः। एवं रसज्ञाया एवमनौचित्यमिति व्यङ्ग्यम्। अथवा सानुरागवीक्षणतत्परिरम्भमधुरादिभिर्भवद्भिरेव तच्चित्तस्य मत्प्रवणत्वकरणाद्भवतामनुपालम्भनीयतया दैवमत्रापराध्यतीत्याह–हितमिति। "हितमायतिसुखम्" इति विज्ञानेश्वरः। दैवदुष्टाः प्रतिकूलं दैवं येषां ते। "वाहिताग्न्यादिषु" इति निष्ठायाः परनिपातः दैवेन दुष्टा इति वा योज्यम्।

अपरे त्वाहुः——सखी नायिकां प्रत्याह——अरसज्ञे रसानभिज्ञे नेत्रारुण्यादिकलहपर्यन्तं कुतो विहितवत्यसि। हितमर्थमित्यपि तुल्यमेवेति। यत्तु "नायिकापरितापाप्रदर्शनेन लक्षणासङ्गत्याऽपव्याख्यानमेतद्" इति। तदसत्। नायकप्रत्याख्यानजन्यपश्चात्तापवतीं प्रत्येवैतादृशोक्तरवताराल्लक्षणसङ्गतेः सुस्थत्वात्। अतएव हितपदं सङ्गच्छते। आयतिसुखं तदप्रत्याख्यानमेव, प्रत्याख्याने त्वायतौ दुःखमेव तवोपस्थितमितिप्रतीतेः। करपद्मतर्जनं चेतिपाठो व्याख्यातः। करपल्लवे निरोधमिति पाठान्तरम्। तत्र पूर्वोक्तार्थस्योक्तिसम्भव एव नेति स्पष्टम्। त्वत्कुचादिस्पर्शोद्यते तस्य करपल्लवे निरोधं तदिष्टप्रतिबन्धं कुतोऽकार्षीः। पल्लवपदं तत्कृतमदनादेरपि सुखावहत्वसूचनार्थम् ॥५१॥

**परकीया कलहान्तरिता यथा—**

**भर्तुर्यस्य कृते गुरुर्लघुरभूद् गोष्ठी कनिष्ठीकृता**
**धैर्यं कोशधनं गतं सहचरी नीतिः कृता दूरतः।**
**निर्मुक्ता तृणवत् त्रपा परिचिता स्रोतस्वती बिन्दुवत्**
**स क्रोधादवधीरितो हतधिया मातर्बलीयान् विधिः ॥५२॥**

---

"निवेद्य दुःखं सुखीभवति" इति लोकोक्तेः। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। **कथने** तन्निवेदने सति **कापि** अनिर्वचनीया **लज्जा** त्रपा **समुपैति** उपतिष्ठते। **इति** हेतोः **अधोमुखी** लज्जानतानना **सखीभ्यः** सहचरीभ्यः रहस्यज्ञाभ्योऽपीत्यर्थः। **कलहं** प्रियेण प्रणयविग्रहं "...रणाः कलहविग्रहौ" इत्यमरः। **लपितुं** निवेदयितुम् **अनालपितुम्** अनिवेदयितुं च **समाचकाङ्क्ष** समीहितवती। वक्तुमवक्तुं चैच्छत् किमति नावददिति भावः। अनन्तभट्टोक्तः संशयालङ्कारस्त्वत्र न समीचीनः एकविशेष्यकविरुद्धनानाधर्मप्रकारकज्ञानोपादानाभावात्। पुष्पिताग्रा वृत्तम् ॥५०॥

प्रौढां च तामुदाहरति—**प्रौढेति। अकरोरिति।** द्विविधमस्य व्याख्यानमुपलभ्यते। प्रथमे नायिका प्रियावमानद्वारीभूताङ्गान्याह—**हे नेत्र!** अस्मन्नयन! **शोणिमानम्** आरुण्यं प्रेयसि मानापनोदाय प्रार्थयति सतीति शेषः। **किमु** किमर्थम् **अकरोः** अकार्षीः। **वा** अथ चास्मदीय**करपद्म** हस्तकमलं तेन **तर्जनं** भीतिप्रदर्शनमङ्गुल्यादिनेत्यर्थः। **किमकार्षीः** किमर्थमकरोः। **रसज्ञे** ऽस्मज्जिह्वे! **क्रुधा** कोपेन नदपराधशङ्काजन्येनेतिभावः। **कलह** विग्रह **किमधाः** किमर्थं व्यधासीः। **दैवदुष्टाः** भाग्योपहताः सन्तः **हितमर्थं** पथ्यविषयं **न विदन्ति** नावगच्छन्ति।

द्वितीयेऽर्थे स्वपरितापं विज्ञापिता सखी नायिकामाह—प्रेयसाऽपराधक्षमापनाय प्रार्थिताऽपि तदानीं त्वं **नेत्रशोणिमानं** नयनारुण्यं क्रोधप्रदर्शकमितियावत्। **किम्वकरोः। करपद्मतर्जनं** पाणिकमलेन भीतिप्रदर्शनं **किमकार्षीः। हे अरसज्ञे** अचतुरे इतिभावः **क्रुधा कलहं किमधाः।** शेषं पूर्ववत्।

अत्र प्रथमेऽर्थे नायिकाया परितापः स्फुटो द्वितीये त्वनुमेयः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। मालभारिणी च वृत्तम् ॥५१॥

परकीयां चोदाहरति कलहान्तरिताम्—**परकीयेति। भर्तुरिति। भर्तुः** सौन्दर्यादिगुणान् धारयितुः **यस्य** जनस्य, प्रेयस इति यावत्, **कृते** यत्प्राप्तये **गुरुः** महानपि प्रयासो **लघुः** स्वल्पसाध्योऽ**भूत्**। यल्लब्धये कठिनतमानपि प्रयासानहं

भर्तुरिति । नायिका सखीमाह। मातरिति । स्वहितैषित्व-व्यञ्जनद्वारा स्वातिक्रमनिवेदनार्हत्वव्यञ्जनार्थम्। यस्येति समानाधिकरणार्थं षष्ठी। यद्रूपस्य भर्तुः प्रियस्य कृते तदर्थमिति यावत्। "यत्कृतेऽरीन्निगृह्णीम" इति भट्टिः। गुरुः श्वसुरादिर्लघुरभूत् । तदुल्लङ्घनात्। केचित्तु "यस्य कृते भर्तुर्गुरुरित्यन्वयः स्वमान्यभर्तृमान्यस्यातिमान्यत्वेऽपि तदनादराद्भर्तुरप्यनादर" इति। तन्न। व्यवहितत्वात्। गुरुपदेनैव भर्तृश्वसुरयोर्द्वयोरनादरलाभाच्च । यदपि "लघुर्दूत्यादिर्जनो गुरुरत्यन्तं सेव्योऽभूद्"इति। तदपि न। उद्देश्यविधेययोर्वैपरीत्यप्रसङ्गात्। अनौचित्यसमभिव्याहारविरोधाच्च । प्रतिबन्धकानादरस्यैवाग्रे प्रतिपाद्यत्वादत्रापि तथा निर्णयात् । "समज्या परिषद् गोष्ठी" इत्यमरः। सा चार्थात्सतीनां ग्राह्या। सा कनिष्ठीकृता । अनादृतत्वात्। च्विप्रत्ययेन तस्या अकनिष्टत्वलाभः। यद्वा स्वविरोधिनां सपत्न्यादीनां सभा ग्राह्या। तस्या अपवादजनकत्वात्। केचितु "गोष्ठी स्वघटिता सभा कनिष्ठीकृता तदेकदेशस्य सभासतीत्वेऽन्यासामपि तथात्वस्य लोकेन ज्ञानादिति भावः" इत्याहुः। "मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला" इति दर्पणः।

शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च।
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजा॥ इति भरतः।

कोषधनेतिस्वाधीनत्वस्यावश्यरक्षणीयत्वस्य सूचनम्। गतमिति। तद्धानेरनिष्टत्वं व्यङ्ग्यम्। सहचरीति हितहेतुत्वं व्यङ्ग्यम्। नीतिपदं सर्वाश्रयणीयत्वार्थम्। स्त्रीजनस्य सहजाभरणरूपापि लज्जा तृणेन तुल्यं परित्यक्तेत्यर्थः। स्रोतस्वतीति। प्रवाहविशेषवत्त्वाद्दुस्तरत्वं व्यङ्ग्यम् । बिन्दुवदिति रागौत्कट्यसूचनम् । अत्र त्रपाधैर्ययोः स्वरूपसत्प्रतिबन्धकयोरनादरोऽन्येषां तु ज्ञातप्रतिबन्धकानामिति विभागः। गुरुरित्यदृष्टभयस्यानादरः। गोष्ठीति सजातीयभयस्य। नीतिरिति दृष्टजनान्तरभयस्य स्रोतस्वतीति कारणविघटकस्येति विशेषः। "अवधीरस्त्ववज्ञायाम्" इति कल्पद्रुः। हतधियेति बहुव्रीहिः कर्मधारयो वा। हतत्वं निन्द्यत्वं तच्च बलवदनुतापरूपानिष्टसाध-

सामान्यवनिता कलहान्तरिता यथा—

यत्पङ्केरुहलक्ष्मपाणिकमलं भाग्यालये यद्गुरु-
र्न्यस्तं वा मम तल्ललाटफलके भाग्याक्षरं वेधसा।

नत्वनदति तदनुबन्धित्वाभावप्रकारकत्वम्। नन्वेतावत्पूर्वमेव कुतो न पर्यालोचितमित्यत आह—बलीयान् विधिरिति। अदृष्टवशेन यथोक्तभ्रमसम्पत्तेः। जारगमनवदिति भावः ॥५२॥

**यत्पङ्केरुहेति**। तथा च वराहः—

पद्मस्वस्तिकवेदिकाव्यजनकैर्यस्याङ्कितं वर्तते।
हस्तं पादतलेऽथवा स भवति त्रैलोक्यभूमीश्वरः॥ इति।

भाग्यालये धनस्थाने जन्मलग्नाद्द्वितीयकोष्ठे इति यावत्। गुरुर्बृहस्पतिस्तदुक्तम्—

एक एव सुरराजपुरोधाः केन्द्रगोऽथ नवपञ्चमगो वा।
लाभगो भवति यस्य विलग्ने शेषखेचरगणैरबलैः किम्॥

भाग्यस्याक्षरं लिपिः। ज्ञाप्यज्ञापकभावरूपसम्बन्धः। "भाग्यं शुभात्मकविधौ" इति विश्वः। "भागाद्यच्च" इति स्वार्थे यत्। "विधात्रा विहिता यासौ ललाटेऽक्षरमालिका" इत्यादि प्रसिद्धम्। यथार्थमिति।

साधारणान् मत्वाऽकरवमिति भावः। "गुरुः पितृप्रभृतिः श्वसुरादिर्वा लघुस्तद्वचनावहेलनादगण्योऽभूत्" यद्वा "लघुर्दूत्यादिः गुरुः श्वश्र्वादिवच्छ्रेष्ठोऽभूत्" इति व्याख्याकृतामर्थद्वयं तु न समीचीनम्, परपुरुषानुरागस्यात्यन्तगोपनीयत्वात् तदाज्ञावहेलने रहस्योद्भेदस्यावश्यम्भावनीयत्वात्। **गोष्ठी** परिषत् समाज इतियावत्। "समज्या परिषद् गोष्ठी" इत्यमरः। **कनिष्ठीकृता** अनादृता मयेति शेषः। **कोशधनं** सञ्चितं वित्तं **धैर्यं** धीरत्वं **गतं** विनष्टं ममेति शेषः। **सहचरी** सध्रीची **नीतिः** नयशास्त्रमिति यावत्। **दूरतः कृता** अपसारितेति भावः। **त्रपा** लज्जा **तृणवत्** निःसारवत् **निर्मुक्ता** परित्यक्ता। **परिचिता** ज्ञाताऽपि**स्रोतस्वती** नदी दुस्तरेति भावः। **बिन्दुवत्** जलकणवत्। एवं प्रयत्नेन लब्धः **स दयितः क्रोधात्** रोषात् **हतधिया** नष्टधिषणया मयेति शेषः। **अवधीरितः** तिरस्कृतः **हे मातः! विधिः** भाग्यमेव **बलीयान्** श्रेष्ठतमः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, शार्दूलविक्रीडितं च वृत्तम् ॥५२॥

**तत्सर्वं सखि यो यथार्थमकरोत्तस्मिन्प्रकोपः कृतो**
**धिङ् मां धिङ मम जीवितं धिगतनुं धिक् चेष्टितं**
**धिग्वयः ॥५३॥**

---

तत्रतिपाद्यस्य बहुतरधनलाभस्य तेनैव सम्पादितत्वात्। अनेन सम्भावनामात्रत्वं निरस्तम्। तस्मिन्निति। तत्सम्बन्धिन्यपीदृशमनर्हं किं पुनस्तस्मिन्नेवेत्यनुतापातिशयो व्यङ्ग्यः। किञ्चित्कोपस्य रत्यनुगुणत्वात् प्रेति। तत्प्रत्याख्यानपर्यन्त इत्यर्थः। कृत इति। स्वयमेव न तु सख्याद्युपदेशेन, येन ता उपालभ्येरन्। अतएवाह—धिङ्मामिति। ननु भूयसो धनस्य लब्धत्वादतः परं तद्वैमुख्येऽपि न क्षतिरतो धिङ मम जीवितमिति। विशिष्टधनप्राप्त्यभावविशिष्टमुत्तरकालजीवनं निन्द्यमित्यर्थः। तद्विषयकरत्यवच्छेदकतया दुःखाधिक्यस्य तादृशकोपजनकत्वाद्रतिजनकस्योपालम्भमाह—धिगतनुमिति। नहि रत्यभावे तस्यान्यस्त्रीसम्भोगज्ञानाद्दुःखविशेषः सम्भवतीति भावः। अत्र धिगपरमिति पाठो निर्मूलः। प्रयोजनाभावात्। ननु धनदानहेतोस्तन्निष्ठतद्विषयकरतेरुत्पादकत्वात्कामस्य प्रकृतानुगुण्यमेवेत्यतो धिक्चेष्टितमिति। तत्तिरस्कारकः कायिकवाचिकव्यापारो निन्द्यस्सत्यप्यन्तःकोपे तल्लिङ्गज्ञानाभावे तस्य कोपाननुमाने मद्वैमुख्यानुपपत्तेरित्यर्थः। तच्चेष्टाजनकमेव निन्दति-धिग्वय इति। तादृशगर्वविशेषजनकत्वाद् बलवदनिष्टानुबन्धित्वज्ञानविरहप्रयोजकत्वाच्चेति भावः॥५३॥

सामान्यां तामुदाहर्तुमाचष्टे—**सामान्येति**। **यदिति**। **हे सखि! मम यत्** विद्यमानमित्यर्थः। **पाणिकमलं** करसरोरुहम्, **पङ्केरुहलक्ष्म** कमलचिह्नाङ्कितमिति ।ঢ়ঢ়৳ भाग्यवत्तायाः सामुद्रिकनिर्दिष्टं लक्षणमेतत्। **भाग्यालये** भाग्यभवने जन्मलग्नतो नवमगृहे इति भावः। **यद् गुरुः** बृहस्पतिर्वर्तते। जन्मकुण्डलीफलादेशानुसारमेतत्। **वा** अथवा **मम** नायिकाया **ललाटफलके** भालपटले **वेधसा** विधात्रा **यद्भाग्याक्षरं** या भाग्यसूचिका लिपिः **न्यस्तं** लिखितेति यावत्। **तत्सर्वं** सामुद्रिकादिनिर्दिष्टं **यः** नायकः **यथार्थं** सार्थकमिति भावः। **अकरोत्** विपुलधनदानादिनेति शेषः। **तस्मिन्** भाग्योदयकारिणि नायके **प्रकोपः** विपुलो रोषः **कृतः** मयेति शेषः। **अतो मां धिक्** कृतघ्नाऽहं निन्दनीयेत्यर्थः। **मम जीवितं धिक**

**सङ्केतनिकेतने प्रियतममनवलोक्य समाकुलहृदया विप्रलब्धा । अस्याश्चेष्टाः-निर्वेदनिःश्वाससन्तापाऽऽलाप-भय-सखीजनोपालम्भचिन्ताश्रुपातमूर्च्छादयः।**

---

**सङ्केतेति ।** सङ्केतस्थाने दत्तसङ्केतप्रियराहित्यजन्यदुःखवत्त्वं लक्षणार्थः । सङ्केतस्थानपदस्य तद्योग्यदेशपरतया तद्दर्शनजन्यविप्रलम्भवत्यामतिव्याप्तिवारणाय दत्तसङ्केतेति प्रियविशेषणम्। तदुक्तम्—

अहरहरनुरागाद् दूतिकां प्रेष्य पूर्वं
सरभसमभिधाय क्वापि सङ्केतके वा ।
न मिलति खलु यस्या वल्लभो दैवयोगात्
कथयति भरतस्तां नायिकां विप्रलब्धाम् ।।

तथा च भरत :—

यस्या दूतीं प्रियः प्रेष्य दत्त्वा सङ्केतमेव वा ।
नागतः कारणेनेह विप्रलब्धा तु सा स्मृता ।।

तद्रहितभिन्नस्थाने तद्वारणाय सङ्केतस्थानेति । दर्शनपदं च न चाक्षुषमात्रपरम्, अन्धकारे प्रियानवलोकनेऽपि तत्स्पर्शने विप्रलब्धात्वविरहात् । तथा च तादृशप्रियाप्राप्तिजन्येति फलितम् ।

रुष्टान्नायकादग्रे धनादिलाभाभावाज्जीवनमपि धिगित्यर्थः। **अतनुं** देहरहितं मदनमित्यर्थः **धिक्**। कोपहेतुमितियावत् । **मम चेष्टितं** व्यापारं **धिक् वयः** मम यौवनमित्यर्थः । **च धिक्** निन्दनीयमेवेत्यर्थः ।

अत्र वेधसोऽपेक्षया कामुकस्योत्कर्षप्रतीतेः प्रतीयमानो व्यतिरेकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।।५३।।

अतः परं विप्रलब्धां लक्षयति—**सङ्केतेत्यादि। सङ्केतनिकेतने** पूर्वनिश्चिते मिलनस्थले सम्भोगाय नियतप्रदेश इति यावत्। **प्रियतमम्** दयितम् **अनवलोक्य** न पश्यन्ती **समाकुलहृदया** व्यग्रचित्तेति यावत् । **विप्रलब्धा** तदाख्या नायिकेत्यर्थः । वञ्चितेति यावत्। उच्यते इति शेषः। विप्रलभ्यते स्मेति वि प्र पूर्वकात् "डुलभष्" प्राप्तौ धातोः क्तः । "विप्रलब्धस्तु वञ्चितः" इत्यमरः ।।

अथास्याश्चेष्टा आह—**अस्या इति । अस्याः** विप्रलब्धायाश्चेष्टाः **निर्वेदः** ईर्ष्यया दुःखेन वाऽऽत्मन्यवज्ञा । **निःश्वासः** प्रसिद्ध एव । **सन्तापः** दुःखम् । **आलापो**-

**मुग्धा विप्रलब्धा यथा—**

**आलीभिः शपथैरनेककपटैः कुञ्जोदरं नीतया**
**शून्यं तच्च विलोक्य विक्षुभितया न प्रस्थितं न स्थितम् ।**
**न्यस्ताः किन्तु नवोढनीरजदृशा कुञ्जोपकण्ठे तृषा-**
**ताम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशो दृष्टयः ॥५४॥**

---

**आलीभिरिति।** अनेन स्नेहविश्वासपात्रत्वसूचनम् । तेन प्रतारकत्वशङ्कानिरासः । बहुवचनमैकमत्यलाभार्थम् । शपथैर्यदि त्वं तत्र नायासि तर्हि मां मारयसीत्यादिरूपैः । कपटैस्तत्र विलक्षण-कुसुमादि द्रक्ष्याम इत्यादिरूपैः । अनुरागं सङ्केतं च विज्ञाय लज्जया-नागमनमाशङ्क्य शपथाद्युपन्यासो ज्ञेयः । सङ्केतयोग्यत्वसूचनाय कुञ्जेति। बहिरनावृतत्वादुदरमिति। नीतया प्रापितया। अनेन तस्या अनागमनेच्छा व्यङ्ग्या। आलीनिष्ठव्यापारजन्यो यः कुञ्ज-मध्यसंयोगस्तद्वत्येति बोधः। मध्येगमने च योग्यानुपलब्ध्या प्रिया-भावं चाक्षुषमित्याह-शून्यमिति। अभाववान् शून्यपदार्थः। अर्थात्तु प्रतियोगितया प्रियस्यान्वयः। भ्रमत्ववारणाय निरीक्ष्येति, यद्यत्र प्रियः स्यात्तत उपलभ्येतेति योग्यानुपलब्धिसहकाराच्चक्षुषा तदभावसाक्षा-त्कार इतिभावः। विशेषेण क्षुभितया दुःखितया नवोढनीरजदृ-शेत्यन्वयः। अनेन दृष्टेर्दोषराहित्यसूचनम्। न प्रस्थितं प्रत्यावर्तन-यत्नो न कृतः। प्रियदर्शनव्यतिरेकेण गमने सखीनां तदागमनस्य प्रियदर्शनेच्छाजन्यत्वज्ञानं माभूदिति लज्जावशादित्यर्थः। न स्थित-मिच्छापूर्वकस्थितिरपि न कृता, प्रियराहित्येन तत्रावस्थानस्य निष्प्र-योजनत्वमिति लज्जामदनयोस्तुल्यत्वं दर्शितम्।

ऽसम्बद्धभाषणम् । भयं स्वापराधजन्यनायकरोषात् त्रासः । **सखीजनोपालम्भः** सहचरीजनेभ्यः सनिन्दभाषणम्। **चिन्ता** अनागमनहेत्वभिध्यानम्, **अश्रुपातः** **मूर्च्छा** इन्द्रियवैकल्यम् ।

मुग्धां विप्रलब्धामुदाहरति—**मुग्धेति**। **आलीभिरिति**। **आलीभिः** वयस्याभिः **अनेककपटैः** नैकविधकैतवैः **शपथैः** समयैः "समयाः शपथाचार" इत्यमरः । शपथ-

मध्या विप्रलब्धा यथा—

सङ्केतकेलिगृहमेत्य निरीक्ष्य शून्य-
मेणीदृशो निभृतनिःश्वसिताधरायाः।
अर्द्धाक्षरं वचनमर्द्धविकाशि नेत्रं
ताम्बूलमर्द्धकवलीकृतमेव तस्थौ ॥५५॥

केचित्तु "गमने कदाचित्पश्चादागतस्य प्रियस्य दर्शनं न स्यात् स्थितौ च निकुञ्ज-स्तद्विरहे दुःखद इतिविचारे तात्पर्यम्" इत्याहुः। कुञ्जोदरस्य दुरवेक्ष्यत्वादुपकण्ठेति । सन्निहितदेशे इत्यर्थः । क्रुधा, कोपेनेति केचित्। तृषेति पाठान्तरम्। प्रियदर्शनतृष्णयेतियावत्। पश्चादागमनस्यापि सम्भावितत्वात्। पक्षे मकरन्दरसास्वादनेनेत्यर्थः ताम्यन्तो ग्लायन्तो भृङ्गाः भ्रमरास्तेषां कदम्बः समूहः तस्य डम्बर-श्चेष्टाविशेषः, तस्य चमत्कारो विलासस्तत्स्पृशस्तत्सदृश्य इति यावत्। यद्वा कोपात्सखीदर्शनपरिहारार्थं कुञ्जे दृक्पातः। मार्गा-न्तरविलोकनार्थं वा। "कदाचित् प्रियोऽत्र परिहासार्थमेताभिर्निगूहितः स्यादिति वा" इति केचित्। ताम्यदिति दृष्टेर्ग्लानत्वसूचनम् । कद-म्बेति धारावाहिकत्वम्। डम्बरेति निगूहनार्थं विलासविशेषणत्वं च व्यङ्ग्यम्। यद्वा। तृषा ताम्यन् यो भृङ्गसमूहो मधुपानोत्सुक इति-यावत्, तस्य डम्बरे सरभसं मधुपानविषयकप्रवृत्तौ यश्चमत्कारः कौतूहलविशेषस्तद्वत्य इति व्याख्येयम्। तद्दर्शनव्याजेन एते समी-हितप्राप्त्या धन्याः अहं तु प्रवृत्तिविसंवादान्नेति निर्वेदध्वनिः ॥५४॥

पूर्वकं वस्त्वन्तरादिदर्शनव्याजेनेत्यर्थः। कुञ्जोदरं सङ्केतलतामण्डपाभ्यन्तरं नीतया गमितया तच्च कुञ्जोदरं शून्यं दयितरहितमितियावत्। निरीक्ष्यावलोक्य विक्षुभितया आकुलया नवोढनीरजदृशा नवोढा चासौ नीरजदृक् च तया, मुग्धया सरोजाक्ष्या नायिकया, न प्रस्थितं ततः कुञ्जान्न प्रयातम्, न च स्थितम् तत्रेति शेषः। किन्तु तृषा तृष्णया ताम्यतः दूयमानस्य भृङ्गकदम्बस्य भ्रमर-समूहस्य यो डम्बरः समारम्भः तस्य चमत्कारं विच्छित्तिं स्पृशन्ति आश्रयन्तीति ताः, लोलतमा इति यावत्। दृष्टयः कटाक्षाः कुञ्जोपकण्ठे लतागृहप्रान्तदेशे

प्रौढा विप्रलब्धा यथा—

शून्यं कुञ्जगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभवं
दूती नापि निवेदिता सहचरी पृष्टापि नो वा तया।

---

सङ्केतेति। निभृतं सखीज्ञानविषयत्वरहितं निश्वसितं यत्र तादृगधरो यस्याः। एतेन लज्जया निश्वासवेगप्रतिरोध उक्तः। अर्द्धान्यसम्पूर्णान्यक्षराणि यत्र। विवक्षितवाक्यघटकानि यावन्त्यक्षराणि प्रियानागमनानवबोधकाल उक्तानि तावद्भ्योऽधिकानि नोक्तानीति भावः। वचनं वाक्यम्। उच्यते प्रतिपाद्यतेऽर्थोऽनेनेति व्युत्पत्तेः। वर्णमात्रस्य तदप्रतिपादकत्वात्। अर्द्धविकाशीति शून्या दृष्टिरुक्ता। "अर्द्धं विकासो यत्र" इति केचित्। तन्न। न कर्मधारयान्मत्वर्थीय इति सिद्धान्तात्। अर्द्धविसकतीति तु युक्तम्। अर्द्धकवलीकृतमर्द्धचर्वितमेव। तस्थाविति सर्वान्वितम्॥५५॥

शून्यमिति। एकत्वं च कुञ्जान्तरस्य सङ्केतितत्वाभावात्तदनुसारि निषेधार्थम्। कुटिलमिति। उक्तसमयेऽपि तदलाभे मदनवेदनाविनोदनोपायाभावात्। तावत्पर्यन्तं च मिलनाशया तदभावात्। दूती न निवेदिता प्रियः कथं नागत इति स्वजिज्ञासा तस्यै नोक्तेति भावः।

न्यस्ताः निक्षिप्ताः। अत्रानुप्रासोपमासंसृष्टा निदर्शनाऽलङ्कारः। शार्दूलविक्रीडितं छन्दः॥५४॥

मध्यां विप्रलब्धां व्याहरति—मध्येति। सङ्केतेति। सङ्केतकेलिगृहम् एकान्तसमागमाय निश्चितं क्रीडास्थानम् एत्य आगत्य, तच्च शून्यं दयितेन रहितमिति यावत्। निरीक्ष्य विलोक्य, निभृतं तूष्णीमिव न कस्यापि ज्ञानविषयमिवेति भावः। निःश्वसितं निःश्वासः सञ्जातो यत्र तादृग् अधरो यस्यास्तस्याः एणीदृशः मृगाक्ष्याः वचनम् उक्तिः कथनमिति यावत्। अर्धाक्षरं असमस्तोच्चारितवर्णम्, नेत्रं नयनं च अर्धविकासि अर्धोन्मीलितवदिति भावः। ताम्बूलं च अर्धकवलीकृतम् अर्धचर्वितमेव तस्थौ अतिष्ठत्। सा च जडीभूतेवामवदित्यर्थः। अप्रस्तुतप्रशंसाकाव्यलिङ्गयोः सङ्करोऽलङ्कारः। वसन्ततिलका वृत्तम्॥५५॥

**शम्भो शङ्कर चन्द्रशेखर हर श्रीकण्ठ शूलिन् शिव**
**त्रायस्वेति परं तु पङ्कजदृशा भर्गस्य चक्रे स्तुतिः ॥५६॥**

---

ननु दूत्याः प्रियसङ्घटनकारिण्यास्तद्विसंवादेनानादरेऽपि सखी प्रष्टव्या स्यादित्यत आह—सहचरीति। उभयत्र हेतुरार्तयेति। तदनागमनदुःखितयेतिभावः। किन्तु—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥

इतिन्यायाच्छिवस्मरणमेव कृतमित्याह—परन्त्विति। "स्वव्यथाजनकमदनपरिपन्थितया तदनुसन्धानसङ्गतिः" इतिकेचित्। वस्तुतो रतेरत्यन्तनिवृत्तौ वैरस्यापत्त्याऽभिलषितार्थप्रदानसामर्थ्यवत्तया तदितिबोध्यम्।

अतएवाह—शम्भो इति। शं सुखं भवत्यस्मादितिव्युत्पत्तेः। ननु सुखजननस्वरूपयोग्यत्वेऽपि फलोपधानं सहकार्यन्तरमपेक्ष्यैवेत्यत आह—शङ्करेति। स्मरणादिसत्त्वे सुखोपधायकत्वमर्थः। तथा च ममापि तत्सद्भावे सुखोत्पादनं युक्तमिति तात्पर्यम्।

केचित्तु "सुखजनकत्वेऽपि सर्वदा तद्वत्त्वे प्रमाणाभावादाह—शंकरेति। शं करे हस्ते यस्येत्यनायाससाध्यत्वं व्यङ्ग्यमिति"। तदसत्। तत्पदं हि जनकत्वपरं सुखपरं वा, नाद्यः, जनकत्वस्य व्याप्यवृत्तित्वात्। नान्त्यः, शम्भुपदेन सुखवत्ताया अनुक्तेः। हेतुत्वे सम्बन्धान्तरेण कार्यवत्ताया अनुपयोगात्।

ननु नामव्यवहारस्य रूढिमात्रेणापि सम्भवात्कथमवयवार्थान्वयनिर्णयोऽत आह—चन्द्रशेखर इति। चन्दयत्याह्लादयति चन्द्रः। स शेखरश्चूडामणिर्यस्य। स शेखरे यस्येति त्वयुक्तं "सप्तमी विशेषणे बहुव्रीहौ" इति शेखरपदस्य पूर्वनिपातापत्तेः। तथाच "समानशीलव्यसनेषु सख्यम्" इतिरीत्या तवापि सुखप्रदत्वनिर्णय इति भावः।

तद्विपक्षदुःखनाशकत्वादपि तथेत्याह—हरेति। दुःखं हरतीति व्युत्पत्तेरभिमतत्वात्। तदपि कथमत आह—श्रीकण्ठेति, सुरासुरभयङ्करकालकूटकवलनादिति भावः। प्रतिबन्धकसद्भावेन कार्या-

परकीया विप्रलब्धा यथा—

दत्वा धैर्यभुजङ्गमूर्ध्नि चरणावुल्लङ्घ्य लज्जानदी-
मङ्गीकृत्य घनान्धकारपटलं तन्व्या न दृष्टः प्रियः।

---

नुत्पत्तिमाशङ्क्याह—शूलिन्निति। सर्वप्रसिद्धानुभावशूलायुधत्वादिति भावः। सुखहेतुत्वाभिप्रायादेतावदुक्तं किं बहुना सुखस्वरूपत्वमित्याह—शिवेति। तथा च स्वतादात्म्यवतः सुखस्यैव दानमुचितमिति प्रियसङ्घटनं कार्यमितिभावः।

स्यादेतत्। स्वीयायां दूतीप्रेषणकुञ्जगमनादिकमनुपपन्नमिति चेन्न। सपत्न्यादिप्रतिबन्धकान्तरानुरोधात्तदुपपत्तेः। उक्तं च काव्यप्रकाशे—"तदत्रैवाभिहितेन स्वकान्तस्नेहेनापि सम्भवति" इति। अन्यथा स्वीयामप्यन्तर्भाव्य भेदाष्टकं कथयतामभियुक्तग्रन्थानामसङ्गतिप्रसङ्गात्॥५६॥

दत्त्वेति। धैर्यं व्याख्यातं तदेव भुजङ्ग उल्लङ्घयितुमशक्यत्वात्। तस्य मूर्ध्नि चरणौ दत्त्वा तदनादृत्येत्यर्थः। मुखस्य दंश-

प्रौढां तामुदाहर्तुमुपक्रमते—प्रौढेति। शून्यमिति। कुञ्जगृहं लतानिकेतनं शून्यं प्रियरहितं निरीक्ष्य अवलोक्य, तथा चेतोभवं मनसिजं काममिति यावत् कुटिलं क्रूरं पीडाकरमिति भावः। विज्ञाय विभाव्य तया नायिकया दूती सञ्चारिका अपि न निवेदिता प्रियमानेतुं नोक्तेत्यर्थः। नो वा न च सहचरी वयस्या पृष्टा अनुयुक्ता, परन्तु पङ्कजदृशा सरोजाक्ष्या तया हे शम्भो ! शं सुखं भवति यस्मात् हे सुखोत्पादकेत्यर्थः। हे शङ्कर ! शं सुखं करोतीति सुखकरेत्यर्थः। चन्द्रशेखर ! चन्द्र इन्दुराह्लादक इतियावत् शेखरः चूडामणिर्यस्य। हर ! दुःखनाशकेत्यर्थः। श्रीकण्ठ ! श्रीः शोभा नीलप्रभेतियावत् कण्ठे यस्य, विषकण्ठेत्यर्थः। "धृतं कण्ठे विषं घोरं ततः श्रीकण्ठतामगात्" इति मुकुटः। शूलिन् ! शूलमायुधमस्यास्तीति। शिव शिवमस्यास्ति शिवयतीति वा," शिवो मोक्षे महादेवे...सुखे क्षेमे जले क्लीवम्" इति कोशः। त्रायस्व मां रक्ष इति एवं भर्गस्य स्मरहरस्य "भृज्यते कामादयोऽनेनेति" भृजीभर्जने धातोः पचाद्यच्, न्यङ्क्वादित्वात्कुत्वम्। "हरः स्मरहरो भर्गः' इत्यमरः। कामपीडाहरस्येत्यर्थः। स्तुतिः प्रार्थना चक्रे। काव्यलिङ्गानुप्राणिताप्रस्तुतप्रशंसालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥५६॥

**सन्तापाकुलया तया च परितः पाथोधरे गर्जति**
**क्रोधाक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशो योजिरे ॥५७॥**

साधनत्वात्तत्र चरणदानमशक्यम् । तत्कृतं साहसोत्कर्षं गमयति। चरणेत्यनादरातिशयः। "धैर्यभुजङ्गयोः" इतिकेचित्। लज्जैव नदी दुस्तरत्वात्। केचित्तु "उपमितसमासो लज्जासहिता नदीव" इति व्याचख्युः। तन्न। उत्तरपदार्थप्राधान्यस्यैवात्र विवक्षणीयतया रूपकस्यैव न्याय्यत्वात्। "घनमित्यस्यान्धकारपटलेत्यत्रान्वयः" इति केचित्, घनानां मेघानामिति बोध्यम् । अन्यथा तारकाभिः किञ्चिद्दर्शनसम्भवात्। तथा च प्रतिबन्धकसद्भावो मार्गदर्शनसामग्र्यभावश्चोक्तः। खलान्धकारेतिपाठे तु प्रतिबन्धकत्रयस्याप्यनादरो बोध्यः। तन्वीपदेन औत्सर्गिकस्यापि त्यागो व्यङ्ग्यः। सन्तापेत्यत्र प्रियानवेक्षणमेव हेतुः। आकुलेति तत्प्राबल्यार्थम्। पाथोधरो धाराधरवत्साधुः। आकाशैकदेशमात्रवारणाय परित इति। गर्जति शब्दायमाने। "क्रोधाक्रान्तेति कृतान्तान्वितम्" इति केचित्। वस्तुतो महिषस्यैव विशेषणम्। तत्प्रकारकतयैव यमस्य भयहेतुत्वात्। कृतान्तसम्बन्धस्तु हिंस्रत्वलाभार्थः। मत्तपदं विवेकाभावसूचनार्थम्। गर्जन्मेघविशेष्यकाभेदसंसर्गकयथोक्तमहिषप्रकारकभ्रान्त्येति भावः।

न च भ्रान्तेर्दृग्योग्ये कथं हेतुत्वम् चक्षुःसंयोगजन्यत्वात्तत्तद्भ्रान्तेरिति वाच्यम्; अयत्नसिद्धचक्षुःसंयोगेन भ्रमोत्पत्तावपि भयात्पुनस्तद्दर्शनप्रवृत्तिसम्भवात्। अनुभवसिद्धत्वात्। यद्वा उपलक्षणे

अथ परकीयां विप्रलब्धामुदाहरन्नाह—**परकीयेति** । **दत्त्वेति**। **धैर्यभुजङ्गमूर्ध्नि** धैर्यमेव भुजङ्गः सर्पस्तन्मूर्ध्नि मस्तके **चरणौ दत्त्वा** पादावारोप्य । **लज्जा** त्रपा एव **नदी** सरित् तामुल्लङ्घ्य तीर्त्वा। **घनं** निबिडमन्धकारपटलं तिमिरसमूहम् **अङ्गीकृत्य** स्वीकृत्य **तन्व्या** नायिकया सङ्केतस्थलं प्राप्तयेति शेषः। **प्रियः** नायको **न दृष्टः** तत्र नावलोकितः। **अथानन्तरम् सन्तापाकुलया** दुःखाक्रान्तया **तया गर्जति** स्तनति **पाथोधरे** जलधरे "कबन्धमुदकं पाथः" इत्यमरः। **परितः** सर्वतः **क्रोधेन** रुषा **आक्रान्तो** व्याप्तो यः **कृतान्तो** यमः तस्य **मत्तः** क्षीवो यो **महिषः** सैरिभो वाहन इति यावत्। तस्य **भ्रान्त्या** तद्भ्रमेण **दृशौ** स्वलोचने **योजिते** निक्षिप्ते इत्यर्थः।

सामान्यवनिता विप्रलब्धा यथा--

कपटवचनभाजा केनचिद्वारयोषा
सकलरसिकगोष्ठीवञ्चिका वञ्चितासौ।
इति विहसति रिङ्गद्भृङ्गविक्षिप्तचक्षु-
र्विकचकुसुमकान्तिच्छद्मना केलिकुञ्जः ॥५८॥

---

तृतीया। उपलक्षणं च जन्यत्वेन बोध्यम्। न च मेघचाक्षुषस्यान्धकारेऽनुपपत्त्या कथं तद्विशेष्यको भ्रम इति वाच्यम्; विद्युत्संयोगेन सम्भवात्। स्वरूपसत एव तस्य हेतुत्वाद्व्याप्यत्वज्ञानाद्यनावश्यकत्वात्। अन्यथा भ्रान्त्या परितो दिग्विदिक्षु दृशौ योजिते; इति व्याख्याया अप्यनुपपत्तिप्रसङ्गात्। त्वक्संयोगाभावेन मेघविशेष्यकस्पार्शनभ्रमस्य वक्तुमशक्यत्वात् ॥५७॥

**कपटेति**। तच्चासत्यम्। तत्र मया समागन्तव्यमिति। तदर्थविसंवादात्। वारयोषेति वञ्चनस्वरूपयोग्यत्वम्। विशेषणेन तदुपहितत्वं व्यङ्ग्यम्। न च "रसादिभ्यश्च" इति मतुब्विधानस्य इनिठनोर्निवृत्त्यर्थत्वाद्रसिक इति कथमिति वाच्यम्; "उर्वशी वैरूपिण्यप्सरसां रसिको नट" इत्यादि प्रयोगानुरोधेन तन्नियमस्य भाष्येऽनङ्गीकारात्। सकलेति रसिके गोष्ठ्यां वा विशेषणम्। वञ्चिका कृत्रिमानुरागप्रदर्शनेन तद्धनोपादानात्। रसिकेति विशेषदर्शनसत्त्वेऽपि रागौत्कट्यात्तत्र प्रवृत्तिरिति व्यञ्जनार्थम्। एकवञ्चने चातुर्यविशेषाभावाद् गोष्ठीति। त्रिचतुरादिघटितगोष्ठीवञ्चनेऽपि तथात्वात् सकलेति।

अतिसाहसेन सङ्केतस्थलं गता तत्र प्रियमनागतं वीक्ष्य मृत्युमुत्प्रेक्षमाणा गर्जन्तं कृष्णमेघसमूहं कृतान्तमहिषभ्रान्त्या ददर्शेति भावः। रूपकसंसृष्टो भ्रान्तिमदलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥५७॥

अथ सामान्यां विप्रलब्धामाह—**सामान्येति**। **कपटेत्यादि**। **सकलानां सर्वेषां रसिकानां** विदग्धानां **गोष्ठी** समूह इतियावत्। तस्याः **वञ्चिका प्रतारिका**, कृत्रिमविलासमुपदर्श्य द्रव्यग्रहणात् विदग्धसमूहं वञ्चयन्तीति भावः। असौ

सङ्केतस्थलं प्रति भर्तुरनागमकारणं चिन्तयति सा उत्का। अवधिदिवसानागतप्रोषितपतिकायां नाव्याप्तिः, तस्या भर्तुरवधिदिवसे भवनागमननियम इति सङ्केतपदेन तद्व्यावर्तनात्। अस्याश्चेष्टाः-अरतिसन्तापजृम्भाङ्गाक्रुष्टिकम्परुदितस्वावस्थाकथनादयः॥

---

"रिङ्गद्भृङ्गरूपं विक्षिप्तं चक्षुर्येन" इति केचित्। तन्न। निष्ठायाः पूर्वनिपातापत्तेः। तदयमर्थः। विक्षिप्तचक्षुरिति कर्मधारयः। रिङ्गद्भृङ्गरूपं तद्यस्य। यद्वा विक्षिप्तमिति भावे क्तान्ता दर्श आद्यच्। भृङ्गरूपं विक्षेपयुक्तं चक्षुर्यस्येति समासः। तेन न पूर्वनिपाततादवस्थ्यम्। यद्वा। यथोक्तविक्षिप्तपदस्यैव तद्वति लक्षणा। नचोक्तदोषः तत्र निष्ठाशब्देन विहितस्यैवोपादानं न तु "नपुंसके भावे क्त" इत्यस्येति सिद्धान्तात्। अन्यथा "चारुस्मितं मुखम्" इत्यादिविरोधात्।

नेयं फुल्लकुसुमकान्तिः किन्तु हसितमित्यपह्नुतिः। निरुपपदकुसुमपदाभिधाने श्वेतमेव प्रतीयते इति सम्प्रदायः। केचित्तु "देशान्तरीयतथाविधवार्ताश्रवणेनाप्युक्तहाससम्भवाद्वञ्चितोदाहरणमसङ्गतमेतद्" इत्याहुः। तदशुद्धम्। चक्षुरित्यन्तविशेषणेन वाराङ्गनायाश्चाक्षुषवर्णनात्तदारोपेण कुञ्जस्थाया एव प्रियानागमरूपविप्रलम्भलाभात्॥५८॥

सङ्केतस्थलमिति। इदं च प्रोषितभर्तृकावारणायेति स्पष्टमुक्तम्। तथा च भरतः—

अनेककार्यव्यासङ्गाद्यस्या नागच्छति प्रियः।
तस्यानागमदुःखार्ता विरहोत्कण्ठिता मता॥ इति।

सङ्केतस्थलमुपगतेयं वारयोषा वारः समूहः "समूहनिवहव्यूह. . .वारसङ्घातसञ्चया" इत्यमरः। तस्य योषा स्त्रीतियावत्। वेश्येत्यर्थः। **कपटवचनभाजा** मिथ्यावचनपटुना **केनचित् यूना वञ्चिता** प्रतारिता। **इति** एवं **रिङ्गन्तः** भ्रमन्तः गोलाकारेणेतस्ततश्चलन्त इति भावः। ये **भृङ्गाः** द्विरेफाः त एव **विक्षिप्ते** परितः प्रेरिते **चक्षुषी यस्यैवंभूतः केलिकुञ्जः** क्रीडालतागृहं **विकचानां** फुल्लानां **कुसुमानां**

मुग्धा उत्का यथा—

यन्नाद्यापि समागतः पतिरिति प्रायः प्रपेदे परा-
मित्थं चेतसि चिन्तयत्यपि सखीं न व्रीडया पृच्छति।

---

यदिति। अद्यापि सङ्केतितसमयोत्तरमपीत्यर्थः। आगत इतिसिद्धावपि सं-पदं स्वविषयकसाम्मुख्यविशिष्टागमनाभावबोधे स्वानुकूलत्वरूपसाम्मुख्यस्यापि प्रसङ्गादभावो बुद्ध्यतामित्यभिप्रायम्। पतिरिति। गत्यन्तराभावः स्वस्य द्योत्यः। प्रिय इतिपाठे तदनागमनजन्यदुःखविशेष इति तुल्यम्। इतिर्ज्ञापकहेत्वर्थः। परामन्यां नायिकां

कान्तिः रुचिः तस्याश्छद्मना व्याजेन **विहसति** इवेति शेषः। सर्ववञ्चिकेयमनेन यूना वञ्चितेति केलिगृहं तमुपहसतीवेति भावः। सापह्नवोत्प्रेक्षारूपकयोः संसृष्टिरलङ्कारः, मालिनी छन्दः॥५८॥

अथोत्कां लक्षयति—**सङ्केतस्थलमिति। सङ्केतस्थलं प्रति** सङ्केतीकृते स्थाने **भर्तुः** दयितस्य **अनागमनकारणम्** अनुपस्थितिहेतुं **या चिन्तयति** याऽभिध्यायति **सोत्का** उत्कण्ठितेत्यर्थः। ननु आगमनदिनानि निश्चित्यानागते भर्तरि प्रोषितपतिकाप्युत्का स्यादिति लक्षणेऽतिव्याप्तिमाशङ्कते—**अवधीति। अवधिः** सीमा एतावद्दिवसानन्तरं मयाऽऽगम्यत इति। तस्याः **दिवसे** दिनेऽ**नागतः** नायातः **प्रेयान्** यस्यास्तस्यां **प्रोषितपतिकायां** पूर्वलक्षितायां **नातिव्याप्तिः** लक्षणस्य लक्ष्यदेशातिरिक्तेऽपि स्थितिः न भवतीति भावः। समाधत्ते—**तस्याः** प्रोषितपतिकायाः **भर्तुः** प्रियस्य **अवधिदिवसे** नियतदिने **भवनागमननियमः** गृहागमननिश्चयः इति लक्षणस्थेन **सङ्केतपदेन व्यावर्तनात्** अतिव्याप्तिनिवृत्तेः। अवधिदिवसावसाने स गृहमागच्छति न तु सङ्केतस्थलमिति तात्पर्यम्।[1]

अथोत्कायाश्चेष्टा गणयति—**अस्या इति। अस्याश्चेष्टाः** उत्काव्यापाराः **अरतिः** विषयेष्वरुचिः **सन्तापः जृम्भा** गात्रविनामः मुखादिविकास इतियावत्। **अङ्गाकृष्टिः** अङ्गमोटनम् **कपटरुदितम्** व्यपदेशान्तरेण रोदनम्, **स्वावस्थाकथनम्** स्वदशावर्णनमितियावत्।

---

१. अत्र शृङ्गारमञ्जरीकारकृतं लक्षणं समीचीनं प्रतिभाति "निवास एव कार्यान्तरव्यासङ्गप्रयुक्तविरहवती विरहोत्कण्ठिता" इति। अस्या अवस्थाया न क्वापि समावेशः। रसमञ्जरीकारादि कृतं लक्षणं तु प्रकारान्तरेण विप्रलब्धाया एव। सहृदया एवात्र प्रमाणम्।

दीर्घं न श्वसितं दधाति चकितं न प्रेक्षते केवलं
किञ्चित्पक्वपलाण्डुपाण्डुररुचिं धत्ते कपोलस्थलीम् ॥५९॥

मध्या उत्का यथा—

आनेतुं न गता किमु प्रियसखी भीतो भुजङ्गात् किमु
क्रुद्धो वा प्रतिषेधवाञ्चि किमसौ प्राणेश्वरो वर्तते।
इत्थं कर्णसुवर्णकेतकरजः पातोपघातच्छला-
दक्ष्णोः कापि नवोढनीरजमुखी बाष्पोदकं मुञ्चति ॥६०॥

---

प्रपेदे प्राप्तवान्। प्राय इति सम्भावनार्थः। अनागमनस्य हेत्वन्तरादपि सम्भवेन नायिकान्तरगमननिर्णायकत्वानुपपत्तेः। चेतसिपदं चिन्तायाः शब्दप्रयोगाभावेन सखीज्ञानविषयत्वाभावलाभार्थम्। अपिशब्दः प्रश्नयोग्यत्वार्थः। व्रीडयेत्युत्तरत्रापि हेतुः। दीर्घनिःश्वासकरणे हेत्वन्तरबाधसहकारेण सखीनां तदनागमनजन्यदुःखानुमितिः स्यादिति भावः। स्वेच्छाजन्यानां लिङ्गानां निगूहनेऽपि स्वरूपसच्चिन्ता-जन्यमिच्छानपेक्षं कार्यं भवत्येवेत्याह—केवलमिति। अतिपक्वतायां पाण्डुरत्वातिशयाकिञ्चिदिति। पाकाभावे तदभावात्पक्वेति। पलाण्डुः कन्दविशेषः। तद्वत्पाण्डुरा रुचिर्यस्यास्तादृशीं कपोलभूमिं धत्ते बिभर्ति। अतएव पक्वपाण्डुरपदयोरन्यतरस्य वैयर्थ्यमित्यपास्तम्। रक्तादिव्यावृत्त्यर्थं पाण्डुरपदसार्थक्यात्। चिन्ताख्यव्यभिचारिभा-वादयः। "ध्यानचिन्वाहितानाप्तेः शून्यताश्वासतापकृत्" इति दर्पणः। एतेन संशयालङ्कार इत्यपास्तम् ॥५९॥

**आनेतुमिति**। "भुजङ्गात् कामुकान्तराद्" इति केचित्। तन्न। स्वीयात्वव्याघातात्। तस्मात्सख्या अगमने हेतुद्वयं सन्दिह्यते। भीतो भयान्न गता, किमु किंवा भुजङ्गात्स्वीयप्रच्छन्नकामुकानुरोधा-दित्यर्थः। यद्वा आनेतुं न गता किन्तु स्वयं तत्सम्भोगार्थमितिभावः किंवा भुजङ्गादिति भावप्रधानम्। नायिकान्तरासक्तत्वरूपात् स्वनिष्ठादेव भुजङ्गत्वाद्भीतः। तदनुरोधान्नागत इति भावः।

यद्वा तादात्म्यं हेतुतावच्छेदकसम्बन्धः । यस्माद्भुजङ्गस्ततो नागत इति योज्यम्।

यत्तु "किमु न गता किन्तु गतैव। भुजङ्गात् सर्पात् किं भीतोऽपि तु नैव। पौरुषविशेषशालित्वादेवमुत्तरत्रापि" इति। तदसत्। सर्पस्य विशिष्योल्लेखे प्रयोजनाभावात्। अनागमनकारणानामेव चिन्तनीयत्वाच्च। तथा च भरतः—

व्याक्षेपाद्विमृशेच्चापि नायकागमनं प्रति।
शुभकार्येण मित्रैर्वा मन्त्रिणां राज्यचिन्तया।।
अनुबद्धः प्रियः किन्तु धृतो वल्लभयापि वा।

वासकसज्जाप्रकरणोक्तस्याप्यस्य विरहोत्कण्ठितायामपि विवक्षितत्वात्। अतएव—

अन्यत्र व्रजतीति का खलु कथा नाथस्य तादृक्सुहृद्-
यो मां नेच्छति नागतश्च सहसा कोऽयं विधेः प्रक्रमः।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि।।

इति काव्यप्रकाशादावुक्तम् । प्रतिषेधवाचि पूर्वसमयान्तरोक्तायां सत्यां क्रुद्धो वा वर्तते। तेन क्रोधस्य वर्तमानत्वपर्यवसानम्।

यत्तु "असौ प्रियतमः प्राणेश्वरः प्राणस्वामी किमु न वर्तत इति काकुः 'विप्रकृष्टेऽप्यसौ' इति निर्देशेन प्राक्तनोऽत्यन्तयोगो

अथ मुग्धामुत्कामुदाहर्तुमुपक्रमते—**मुग्धोत्केति**। **यदिति**। **यत्** यस्माद्धेतोः **प्रियः** दयितः **अद्यापि** एतावत्कालपर्यन्तमपि **न समागतः** नायातः अतो हेतोः **प्रायः** भूम्ना **पराम्** मदितरां प्रेयसीं **प्रपेदे** प्राप्तः । इति मन्ये इति शेषः। **इत्थम्** अनेन-प्रकारेण **चेतसि** मनसि **चिन्तयन्ती** विचारयन्ती **अपि** **व्रीडया** लज्जया **सखीं** सहचरीं **न पृच्छति** नानुयुङ्क्ते। तदनागमनहेतुमिति शेषः । **दीर्घं श्वसितं** आयताश्वासं **न दधाति** **चकितं** चञ्चलं यथास्यात्तथा **न प्रेक्षते** न पश्यति । **केवलं किञ्चिद्** ईषद् **पक्वं** परिणतं यत् **पलाण्डु** सुकन्दकं तद्वत् **पाण्डुरा** श्वेतगौरी **रुचिः** कान्तिः यस्यास्ताम् **कपोलस्थलीं** गण्डप्रदेशमिति यावत् **धत्ते** धारयति । विशेषोक्तिरलङ्कारः । शार्दूल-विक्रीडितं वृत्तम् ।।५९।।

व्यङ्ग्य" इति। तन्न। प्राणस्वामित्वस्य सार्वदिक्तया तदानीमागमने हेतुत्वाभावात्, असावित्यस्य विप्रकृष्टवाचित्वाच्च। अदसस्तु विप्रकृष्टमिति वचनात्। तस्मान्न किञ्चिदेतत्, सन्निहितत्वलाभाय।

कर्णेति। सुवर्णाकारं केतकं केतकीपुष्पं शोभनवर्णमित्यन्ये। रजोबाहुल्यलाभाय केतकेति। पुष्पसंयोगादश्रुसम्भवाभावाद्रज इति। अश्रुजननोपहितत्वार्थं पुञ्जेति। असंयुक्तानां तदयोगात्। उपघातेति। वस्तुतो दुःखजन्यत्वव्यञ्जनाय। छलादिति। रजःपातोपघातेति पाठान्तरम्। तत्र रजःपातेनोपघातः पीडेति योज्यम्। नवोढा चासौ नीरजमुखीति समासः।

यत्तु "मध्यात्वानुपपत्तिः" इति। तन्न। पारिभाषिकनवोढाया अनुपादानात्। यत्तु "ऊढं धृतं यत्कमलं तद्वन्मुखं यस्याः। ततो नवा चासौ ऊढनीरजमुखी चेति समास" इति। तन्न। मध्यापेक्षया मुग्धाया एव नवत्वेन ग्रहणापत्तिसाम्यात्। "नवोढं तरुणं यन्नीरजम्" इत्यन्ये। "चिन्ताक्लिष्टे मुखे नूतनकमलसाम्यायोगादूढपदवैयर्थ्याच्च तदयुक्तम्" इत्यपरे। तन्न। चिन्तापूर्वकालमादायोपपत्तेः क्लिष्टत्वसूचकतया ऊढपदसार्थक्यस्य स्वयमुक्तस्यात्रापि दुर्वारत्वाच्चेतिदिक्॥६०॥

मध्यामुत्कामुदाहरति—**मध्योत्केति**। **आनेतुमिति**। **प्रियसखी** प्रिया चासौ सखी च विश्वस्ता सहचरीति भावः। **आनेतुं** सङ्केतस्थलमागमयितुं दयितमिति शेषः। **न गता किमु**? वितर्कार्थोऽव्ययः। **भुजङ्गात्** कौटिल्यात् स्वीयप्रच्छन्नकामुकानुरोधात् नायिकान्तरासक्तेर्वा। सर्पादिति त्वप्रासङ्गिकम्। **भीतः किमु** त्रस्तो वा सः। **वा** अथवा **असौ प्राणेश्वरः** स दयितः **प्रतिषेधवाचि** मत्कृते सम्भोगनिषेधसूचके वचसि **क्रुद्धः वर्तते किम्** रुष्टोऽस्ति किम्। **इत्थम्** एवंप्रकारेण विचारयन्तीति शेषः। **कापि** अनिर्वचनीयरूपा **नवोढनीरजमुखी** नवोढं तरुणं यन्नीरजं कमलं तद्वन्मुखं यस्याः सा। **अक्ष्णोः** नेत्रयोः **कर्णसुवर्णकेतकं** कर्णस्थं यत् पीतकेतकीकुसुमं, तस्य **रजसां** परागाणां **पातेन** पतनेन **उपघातस्य** पीडायाः **छलाद्** व्याजात् **वाष्पोदकम्** अश्रुजलं **मुञ्चति** विसृजति।

प्रौढोत्का यथा—

भ्रातर्निकुञ्ज सखि यूथि रसालबन्धो
मातस्तमस्विनि पितस्तिमिर प्रसीद।
पृच्छामि किंचिदिह नीरधराभिरामो
दामोदरः कथय किं न समाजगाम ॥६१॥

---

भ्रातरिति। एकजन्यत्वारोपेण स्वहितैषित्वं व्यङ्ग्यम्। तस्य यथा पितुरभावे कन्याया वरसंयोगानुकूलत्वं तथा तिमिरस्याभावेऽपि निविडतरत्वात्प्रियसंयोगानुगुणत्वमिति साधर्म्यम्। सखीति। यूथी लताविशेषः। सति प्रियसंयोगे तदनुगुणाधायकत्वात्। रसालेति। निकुञ्जसन्निहितत्वं समानो धर्मः। बन्धोरपि भ्रातृसन्निहित-सम्बन्धाश्रयत्वात्।

न चारोप्यस्य पूर्वनिदेशोपक्रमादुपसंहारेऽपि तथात्वाच्चात्रापि बन्धो-इत्यस्य पूर्वं प्रयोगो युक्तः, इति वाच्यम्; विधेयस्यैव पश्चान्निर्देशस्यौचित्यात्। "तच्छब्दयोगः पश्चात्त्वं साध्यत्वं च विधेयता" इत्यभियुक्तोक्तेः। मातरिति। तमस्विनीति प्रियसंयोगानुकूल-तमोरूपधर्मविच्छिन्नत्वदर्शनम्। निकुञ्जाभावेऽन्यत्रापि प्रियसंयोग-

अश्रूद्गमहेतुभूतप्रियानागमनदुःखं निरस्य परागपातपीडास्थापनाद् अपह्नुतेः नवोढनीरजमुखीत्युपमया संसृष्टिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥६०॥

प्रौढोत्कामुदाहर्तुमुपन्यस्यति—**प्रौढोत्केति**। **भ्रातरिति**। हे **भ्रातः निकुञ्ज** भ्रातृवत्स्नेहकारक लतागृह इति भावः। **सखि** आलि **यूथि** मागधिके "मागधी गणिका यूथिकाम्बष्ठा" इत्यमरः। **बन्धो** स्वजन **रसाल** आम्रतरो "आम्रश्चूतो रसालोऽसौ" इत्यमरः। **मातः** जननि **तमस्विनि** रजनि "विभावरी तमस्विन्यौ रजनी यामिनी" इत्यमरः। **पितः** तात **तिमिर** अन्धकार! सर्वत्रोपकारकत्वस्मर-णेनादरभावः। **प्रसीद** प्रसादं कुरु मत्प्रश्नस्योत्तरं देहीति भावः। **इह** अत्र **किञ्चित् पृच्छामि** स्वल्पं प्रश्नं करोमि यत् **नीरधरस्येवाभिरामः** घनश्याम इत्यर्थः **दामोदरः** श्रीकृष्णः **किम्** किमर्थं न **समाजगाम** नायातः सङ्केतस्थलमिति शेषः। तत् **कथय** ब्रूहि। दयितानागमनकारणं स्पष्टतया पृच्छन्त्या राधायाः स्फुटमेव **प्रौढात्वम्**। रूपकोपमयोः संसृष्टिरलङ्कारः। वसन्ततिलका वृत्तम् ॥६१॥

परकीया उत्का यथा—

> स्नातं वारिदवारिभिर्विरचितो वासो घने कानने
> शीतैश्चन्दनविन्दुभिर्मनसिजो देवः समाराधितः।
> नीता जागरणव्रतेन रजनी व्रीडा कृता दक्षिणा
> तप्तं किं न तपस्तथापि स कथं नायातिनेत्रातिथिः ॥६२॥

---

हेतुत्वान्मातृत्वम्। सर्वेभ्योऽप्यसाधारणमाह—पितस्तिमिरेति। तथा च याज्ञवल्क्यः—

> पिता पितामहो भ्राता सकुल्यो जननी तथा।
> कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥ इति।

पितृत्वं प्रियप्राप्तौ पूर्वोक्तकारणनिरपेक्षकारणत्वात्।

यत्तु "दुश्चरितगोपनहेतुत्वान्मातृत्वाद्यारोप" इति। तन्न। स्वीयात्वव्याकोपात्। किञ्चिदुत्कटजिज्ञासाविषयम्। पृच्छामि त्वामिति शेषः। दामोदरपदं मातृक्लेशो माभूदिति बन्धाङ्गीकारात्कारुणिकत्वसूचनार्थम्। नीरधराभिराम इति तापोपशामकत्वं व्यङ्ग्यम्, तेन मात्रादिसकलाभिमतगुणवत्त्वं लभ्यते। तदुक्तम्—

> कन्या वरयते रूपं माता वित्तं पिता श्रुतम्।
> बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः॥

न च दामोदरः किं न समाजगामेति वाक्यमध्ये कथयेत्यस्योपादानाद् गर्भितत्वं दोष इति वाच्यम्; अवश्यवक्तव्यत्वतात्पर्यकत्वात्॥६१॥

**स्नातमिति**। भावे क्त प्रत्ययः। वर्षति बलाहके समागमनाद्रागौत्कटचम्। पक्षे "वर्षासु स्थण्डिलेशयः" इत्यनावृतस्थानसूचनम्। घनपदं सङ्केतार्हत्वव्यञ्जनार्थम्। पक्षे वनभुवः पुण्यत्वात्। औपाधिकौष्ण्यत्वनिरासाय शीतैरिति। पुष्पैरितिपाठे समुच्चयः। चन्दनेत्याह्लादकत्वम्। चन्द्रपदव्युत्पत्त्यनन्तरं चन्दनमप्यस्य भवतीति निरुक्तकारोक्तेः। द्रवत्वाभावे तस्य शैत्यानवबोधाद्बिन्दुभिरिति। आराध्यतावच्छेदकधर्मदर्शनाय देव इति। "अभीष्टदायी स्मरणादपि

**सामान्यवनिता उक्ता यथा—**

**कथं न कान्तः समुपैति कुञ्जमित्थं चिरं चेतसि चिन्तयन्ती।**
**अक्षालयन्निष्पतदश्रुधारा वाराङ्गना कापि धनाभिलाषान् ॥**

---

स्मरस्तथापि चाभ्यर्थनया विशेषतः" इति प्रपञ्चसारोक्तेः। सम्यक्त्वं भक्त्यादिपूर्वकत्वम्। केचित्तु "वर्षासु चन्दनस्य शैत्यादननुगुणत्वेऽपि कौमुद्यां स्वतिरोधानार्थं तद्धारणाद्रागातिशयो व्यङ्ग्यः । पक्षे मनःकल्पनाविषयो देव" इत्याहुः। आकस्मिक-जागरणवारणाय व्रतेनेति। जागरः कार्यं इत्येवं बुद्धिपूर्वकेणेत्यर्थः। व्रीडात्यागस्य सम्भोगाङ्गत्वलाभाय दक्षिणेति । तस्याः कर्मान्ति-राङ्गत्वात्। "स एष यज्ञो हतो न ददृक्षे तं दक्षिणाभिरदक्षयन्" इति श्रुतेः। "व्रतोपवासनियमैः शरीरोत्तपनं तपः" इति देवलः। किं न तप्तं नार्जितमिति काकुः। अथ च तत्प्राप्त्यनुगुणः सर्वोऽपि यत्नः कृत इत्यर्थः। अतिथिपदेनाद्यापि दर्शनविषयतामनापन्नस्य पुनरागमनेऽपि चुम्बनालिङ्गनादिकं दुर्लभमेव रजन्या गतप्रायत्वा-दिति व्यङ्ग्यम् ॥६२॥

**कथमिति** । कान्तो धनदातृत्वज्ञानेच्छाविषयः । कथं केन

अथ परकीयामुत्कामुदाहरति—**परेति। स्नातमिति। वारिदवारिभिः** मेघजलैः वर्षद्भिरित्यर्थः। **स्नातं** तत्कृते वर्षत्यपि बलाहके क्लिन्नाहमत्रागतेति भावः। **घने कानने** निविडारण्ये **वासो** वसतिः **विरचितः** कृत इत्यर्थः। **शीतैः** शीतलैः **चन्दनविन्दुभिः** मलयजलवैः **देवः** आराध्य इति यावत् **मनसिजः** कामः **समाराधितः** सम्यगुपासितः, **जागरणव्रतेन** शयनाभावनियमेन **रजनी** रात्रिः **नीता** व्यतीता । **व्रीडा** त्रपा **दक्षिणा कृता** दत्ता त्यक्तेत्यर्थः। (यथा कश्चित्तपस्वी वर्षासु स्थण्डिलस्थः स्नाति, अरण्ये वसति, शीतलचन्दनादिभिरन्तः स्वमाराध्यमुपासते कीर्तनादि-व्याजेन रात्रौ जागर्ति दक्षिणां च वितरति तद्वत्) मया **किं नाम तपो न तप्तं** का नाम तपस्या न कृता । **अद्यापि** साम्प्रतमपि स दयितः **नेत्रयोरतिथिः** दृग्गोचर इति यावत् । **कथं न** भवतीति शेषः। तपसा देवसाक्षात्कारवदनेन प्रियसाक्षात्कारो कथं न भवतीति भावः। समागमकारणसत्त्वेऽपि विरहवत्तयाऽनुक्तनिमित्ता विशेषोक्तिरलङ्कारः। शार्दूलविक्रीडितं च वृत्तम् ॥६२॥?

**अद्य मे प्रियवार इति निश्चित्य या सुरतसामग्रीं सम्पादयति सा वासकसज्जा। वासको वारः। अस्याश्चेष्टाः- मनोरथ-सखीपरिहास-दूतीप्रश्न-सामग्रीसम्पादन-मार्गविलो- कनादयः।**

---

प्रकारेण निमित्तेनेति यावत्। चिरमित्यनागमनाशा सूचिता। "धनाभिलाषाद्धनेच्छया निपततामश्रूणां धारा आस्रावयत् पातयामास" इति केचित्। तन्न। निष्पतदित्यस्य वैयर्थ्यात्। तस्मादक्षालयदिति, धनाभिलाषानिति च पाठ एव युक्तः। निःशेषेण पतन्त्योऽश्रुधारा यस्यास्तादृशी धनविषयकानभिलाषानक्षालयत् दूरीचकारेत्यर्थः। इच्छायाः फलानुपधानं निश्चितवतीति यावत्।।६३।।

**अद्येति**। प्रिय आयास्यतीति, एतद्दिनवृत्तिध्वंसप्रतियोगि- प्रागभावप्रतियोगिप्रियसमागमनमितियावत्। । तन्निश्चयजन्य- सुरतसामग्रीसम्पादनप्रवृत्तिमत्त्वं वासकसज्जात्वमित्यर्थः। क्वचित्तु प्रियवार इति निश्चित्येति पाठः। तत्र प्रियागमवासर इत्यर्थः। न च अद्येत्यस्याप्यस्मिन्दिन इत्यर्थकत्वादन्वयापत्तिः, स्वस्य स्वावृत्तित्वादिति वाच्यम्; दिनोपाधिद्वयेनाधाराधेयभावसम्भवात्। अतएव मदीयेऽप्यार्याकोषे—

दयिततमस्योज्जीवनहेतोः प्राणस्य वैष सखि।
आगमने गमने वा दिवसः समुपैत्यवधिरद्य।। इति।

सामान्यामुक्तां दर्शयति—**सामान्येति**। **कथमिति**। **कान्तो** धनदः कामुकः **कुञ्जं** सङ्केतलतागृहं **कथं न समुपैति** किमर्थं नायाति। **इत्थम्** एवं **चिरं** दीर्घकालं यावत् **चेतसि** मनसि **चिन्तयन्ती** विचारयन्ती **कापि वाराङ्गना** वेश्या **निष्पतन्त्यः** निर्गच्छन्त्यः **अश्रुधाराः** नेत्रसलिलप्रवाहो यस्याः एवं भूता सती **धनाभिलाषान्** धनविषयकेच्छाः **अक्षालयत्** दूरीचकार। अनुप्रासोऽलङ्कारः उपजातिश्छन्दः।।६३।।

अथावसरप्राप्तां वासकसज्जां लक्षयति—**अद्येति**। **अद्य** अस्मिन्नहनि **मे** **प्रियस्य** दयितस्य **वासरः** मिलनाय निश्चितं दिनमिति यावत्। **इति निश्चित्य**

**मुग्धा वासकसज्जा यथा—**

**हारं गुम्फति तारकातिरुचिरं ग्रथ्नाति काञ्चीलतां**
**दीपं न्यस्यति किन्तु तत्र वहलस्नेहं न धत्ते पुनः।**
**आलीनामिति वासकस्य रजनौ कार्यानुरूपां क्रियां**
**सा विस्मेरमुखी नवोढसुमुखी दूरात्समुद्वीक्षते ॥६४॥**

---

अत्र भरतः—

उचिते वासके या तु रतिसम्भोगलालसा।
मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका॥

**हारमिति।** गुम्फति गुम्फनेन सम्पादयतीत्यर्थः। "स्वर्गकामो यजेत" इत्यत्र यागेन स्वर्गं भावयेदिति बोधात्। भाव्यान्तरोपादाने धात्वर्थस्य करणत्वेनान्वयात्। तारका नक्षत्राणि तद्वदतिरुचिरम्। शुद्धमौक्तिकघटितमिति यावत्। यद्वा सप्तविंशतिमुक्ताफलघटितम्। महतोऽनुपादेयत्वात्। "सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः" इत्यमरः। कान्तीति पाठे "तारो मुक्तादिः" इत्यमरः। दीर्घसंस्थानवत्तया काञ्च्यां लतात्वारोपः। तथा च भरतः—

या **सुरतसामग्रीं** सम्भोगकालोचितमलङ्करणादि **सज्जीकरोति** परिष्करोतीत्यर्थः। **सा वासकसज्जा** तदाख्या नायिकेत्यर्थः।

वासकशब्दार्थं बोधयति—**वासको वारः** वासकशब्दो वारशब्दवाचक इत्यर्थः। वासकशब्दस्य वारवाचकत्वं "भरताद्यैरभिदधे स्त्रीणां वारस्तु वासकः" इत्युद्धरणानुसारि न तु कोशादिसम्मतम्। वस्तुतस्तु उष्यतेऽस्मिन्निति वासः वास एव वासकः स्वार्थे कः, वासकं सज्जयतीति वासकसज्जेति युक्तम्।। यथाह भोजराजः—

सा तु वासकसज्जा स्यात् सज्जिते वासवेश्मनि।
प्रियमास्तीर्णपर्यङ्के भूपिता या प्रतीक्षते॥ इति॥

अस्याश्चेष्टां वर्णयति—**अस्या इति।** **अस्याः** वासकसज्जायाः **चेष्टाः मनोरथः** प्रियदर्शनाभिलाष इति यावत्। **सखीनां परिहासो** नर्मवचः **दूतीप्रश्नः** प्रेष्यां प्रति पृच्छाकरणम्। **सामग्र्याः** सम्भोगोपयोगिसम्भारस्य **सम्पादनमेकत्रीकरणम्।** **मार्गस्य** प्रियागमनपथो **विलोकनादयः** क्षणे क्षणे तत्पथि दृष्टिदानादीत्यर्थः।

वासोपवारे नात्यर्थं भूषणग्रहणं भवेत्।
रशना नूपुरप्रायं स्वनवच्च प्रशस्यते।। इति।

दीपन्यास उपचारसम्पत्तिपूरणार्थः । बहुस्नेहादानं च प्रकाशे प्रियकरग्रहणलज्जया बोध्यम्। अत्र च सखीनामेव कर्तृत्वं बोध्यम्। वासकस्य प्रियागमनवासरस्य रजनावित्यन्वयः। न च वासकपद-वैयर्थ्यं, रजन्यन्तरव्यावर्तकत्वात्। केवलवासरोक्तावेव वैयर्थ्यात्। इत्येवंरूपामालीनां क्रियां दूरात् पश्यति । समीपगमनात्तासामु-त्कण्ठाप्रकाशापत्तेः। स्वेच्छासंवादात्स्मेरेति । गोपनार्थं साचीति। स्नेहपूर्वकत्वार्थं वीति। आवृत्तिलाभाय उदिति। तिर्यग्भावे तद्दर्शना-नुपपत्त्या समिति। तां वञ्चयित्वा क्रियादर्शनमित्यर्थः। केचित्तु "पूर्वार्धे नायिकैव कर्त्री। वास एव वासकः। अधिकरणे घञ् ततः स्वार्थे कः प्रासाद इति यावत्। 'साकन्या जातमात्रैव कान्तिद्योतित-वासका' इति बृहत्कथादर्शनात्। तत्सम्बन्धिनीनां सखीनां निगूढामिति शेषः। कामस्य मदनस्येच्छाया वा अनुरूपां क्रियां कुर्वती। आभ्य-न्तरसखीभ्योऽपि गोपनाल्लज्जातिशयः। समुद्वीक्षते इत्यत्र अर्था-त्प्रियपद्धतिमित्यन्वयः" इत्याहुः। तन्न। निगूढां कुर्वती प्रियपद्धति-मिति पदत्रयस्याहारापत्तेः। केचित्तु "आसमन्ताल्लीनामिति क्रिया-मित्यस्य विशेषणम्" इत्याहुः।।६४।।

मुग्धां वासकसज्जामुदाहरति—**हारमिति।** **तारका** नक्षत्राणि तद्वद**तिरुचिरं** मनोहरमितियावत्। **हारं** मुक्तामाल्यं **गुम्फति** सन्दर्भयति । काचिदालीति शेषः। **काञ्चीलतां** लतावन्मेखलां **ग्रथ्नाति** विरचयति । अन्या सखीति शेषः। काचिच्च सखी **दीपं** प्रकाशसाधनं प्रदीपं **न्यस्यति** स्थापयति **किन्तु पुनः** भूयः तत्र दीपे **बहलम्** अधिकं **स्नेहं** तैलं न दत्ते । **इति** एवंविधाम् **आलीनां** सखीनां **कामानुरूपां** मदनानु-कूलां स्वाभिलाषानुसारिणीमिति यावत्। **क्रियां** व्यापारं **वासकस्य** प्रियमिलन-वासरस्य **रजनौ** रात्रौ **सा नवोढसुमुखी** नवोढा चासौ सुमुखी च मुग्धासुवदनेत्यर्थः। **विस्मेरमुखी** स्नेहपूर्वकं स्मयमानमुखीति भावः। **दूरात्** विप्रकृष्टादेव **समुद्वीक्षते** सस्पृहं विलोकयति । अतिचतुराः सख्योऽनुक्ता अपि मदिच्छानुरूपं व्यवहरन्तीति दूरादेव भूयो भूयः पश्यतीति भावः। उपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ६४।।

मध्या वासकसज्जा यथा—

शिल्पं दर्शयितुं करोति कुतुकात्कह्लारहारस्रजं
चित्रप्रेक्षणकौतुकेन किमपि द्वारं समुद्वीक्षते।
गृह्णात्याभरणं नवं सहचरी भूषाजिगीषामिषात्
इत्थं पद्मदृशः प्रतीत्य चरितं स्मेराननोऽभूत्स्मरः ॥६५॥

---

शिल्पमिति। "कुतुकं तु कुतूहलम्" इत्यमरः। शिल्पं कलाभिज्ञत्वं दर्शयितुं प्रकाशयितुं कार्योत्कर्षेण कारणोत्कर्षसिद्धेः। "शिल्पं कर्म कलादिकम्" इत्यमरः। "हारसदृशीं स्रजम्" इति केचित्। "सौगन्धिकं तु कह्लारम्" इत्यमरः। "के जले ह्लादते शारदं चैतद्" इति स्वामी। चित्रपदेन दर्शनार्हत्वम्। प्रपदेन वारं वारं दर्शनं व्यङ्ग्यम्। किमप्यनिर्वाच्यं तद्व्याजेनोत्कण्ठासंवरणादभिलाषानुरूपमिति यावत्। अन्यथा लज्जया सकृत्प्रेक्षणेऽप्युद्देश्यसिद्धेः। तिर्यगिति केचित्। तथा च भरतः—

वामेन तोरणं ग्राह्यं कपाटं दक्षिणेन तु।
हस्तेन तन्मुखीभूत्वा प्रतीक्षेत प्रियागमम्॥

सहचरीभूषाणां जिगीषा अभिभवेच्छा तस्या मिषाद्व्याजात्। "जि अभिभवे" इत्यस्यायं प्रयोगः। तद्भूषणस्पर्द्धयेत्यर्थः। तथा च भरतः—

मध्यां च तामुदाहर्तुमुपक्रमते—**मध्येति**। **शिल्पमिति**। **शिल्पं** स्वकीयं कलानैपुण्यं **दर्शयितुं** प्रकटयितुं लोकानां पुरत इति भावः। **कुतुकात्** कौतूहलात् "कुतुकं तु कुतूहलम्" इत्यमरः। **कह्लाराणां** सौगन्धिकानां **हारस्रजं** मनोहरमालां **करोति** गुम्फतीत्यर्थः। **चित्राणाम्** आलेख्यानां **प्रेक्षणकैतवेन** अवलोकनव्याजेन **द्वारं** प्रतीहारं **किमपि** किञ्चित् प्रियागमनरूपमिति गम्यते। **समुद्वीक्षते** विलोकयति। **सहचरीणां** वयस्यानां **भूषाया** अलङ्करणस्य **जिगीषा** अभिभवेच्छा **तन्मिषात्** तद्व्याजात् **नवं** नूतनम् **आभरणम**लङ्कारं **गृह्णाति** धारयति। **इत्थम्** एवंप्रकारकं **पद्मदृशः** सरोजनयनायाः **चरितमा**चरणं **प्रतीत्य** विज्ञाय **स्मरः** मदनोऽपि **स्मेराननः** **अभूत्**। कैतवापह्नुतिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥६५॥

**प्रगल्भा वासकसज्जा यथा—**

**कृतं वपुषि भूषणं चिकुरधोरणी धूपिता**
**कृता शयनसन्निधौ क्रमुकवीटिकासम्भृतिः ।**
**अकारि हरिणीदृशा भवनमेत्य देहत्विषा**
**स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्दिनम् ॥६६॥**

---

गृहीतमण्डना किञ्चित्प्रतीक्षेत प्रियागमम् ।
लीलया मण्डनं शेषं कुर्याद्यन्न विरुद्ध्यते ॥

नवं प्रियसङ्गमोत्सवानुरूपमित्यर्थः । "स्मेराननत्वं स्मरस्य प्राप्तोऽयं मत्प्रभुतासमय इति धिया" इति केचित् । वस्तुतो मयि समुज्जृम्भमाणेऽपि लज्जां न सम्यक् परित्यजतीति विस्मयात्तत् । तेन मध्यात्वसङ्गतिः ॥६५॥

**कृतमिति** । भूषणं संस्कारः । कृतमिति कर्मणि क्तः । अलङ्कारपरत्वे तु कृतं निहितमित्यर्थः । वपुषीत्येकमात्रावयवावच्छिन्नत्ववारणाय नतु सर्वावयवावच्छेदेन भूषणग्रहणार्थम् । पूर्वोक्तमुनिवचनविरोधात् । "चिकुरः कुन्तलो वालः" इत्यमरः । धोरणी सङ्घातः धूपिता संस्कृता । क्रमुकाणि पूगीफलानि । वीटिका नागवल्लीदलानि सोपकरणानि । तेषां रतिसामग्रीत्वात् । अनुवादाद्विशेषणस्य शयनस्यापि सम्पादनम् उपलक्षणं चैतत् । यत्कामशास्त्रम्—

विलेपनं पुष्पयोगाः प्रदीपाः पुष्पमालिकाः ।
भृङ्गाराः सपतद्ग्राहाः स्वास्तीर्णं शयनं तथा ॥
वितानमुत्तमा भक्षविकाराः सहिताः फलैः ।
ताम्बूलं पेयवस्तूनि तालवृन्ताङ्घ्रिपीठिका ॥
मुखवासप्रभेदाश्च द्रव्याणि सुरभीण्यपि ।
आदर्शः पानपात्राणि स्वभ्यस्तं शास्त्रमुत्तमम् ॥
उपधानानि भूयांसि तथा चित्रपटा अपि ।
वस्त्रालङ्कारपात्राणि धूपयोगा अनेकशः ॥
यथोचिता निविष्टैषा सामग्री रतिमन्दिरे ।

**मनोरथश्च यथा--**

**आवयोरङ्ग यद्द्वैते भूयो विरहविप्लवः।**
**अद्वैते च स्मितं स्फीतं न स्यादन्योन्यवीक्षणम्॥६७॥**

---

सुखाय यूनोर्भवति रतारम्भावसानयोः॥

भरतोऽप्याह--

गन्धमाल्यं गृहीत्वा तु वर्णवार्शास्तथैव च।
स्थापयेन्नायकक्कृते कुर्याच्चात्मप्रसाधनम्॥इति।

भवनमेत्यानेनोत्कण्ठातिशयादभ्यन्तरं प्रविश्य पुनर्नायकदर्शनार्थं वहिर्गमनं व्यङ्ग्यम्। देहत्विषेत्यभेदे तृतीया। तदभिन्नाभिः कुसुमकान्तिभिरित्यन्वयः। दुर्दिनं वृष्टिरकारि। प्रसारित्वादित्यर्थः। "ममैव वार्हनिशमश्रुदुर्दिनैः प्रसह्य वर्षासु ऋतौ प्रसञ्जिते" इतिनैषधोक्तेः। यद्वा दुर्दिनं मेघान्धकारः। अकारि प्रक्षिप्तः। "क्रु विक्षेपे" इत्यस्मात्कर्मणि चिण्। प्रकाशसम्पादनादित्यर्थः। "दुर्दिनं जलदध्वान्तम्" इति रत्नकोषः। केचित्तु "त्विषेति करणे तृतीया। दुर्दिनं दिननिषेधः। तत्प्रभाभिभव इतियावत्। "दुःस्यात्कष्टनिषेधयोः" इति विश्वः। यद्वा कष्टदिनमतिवाहयितुमशक्यत्वात्। यद्वा सुरतसामग्रीत्वेन सम्पादितं केतकीदीप्तिभिर्दुर्दिनं मेघच्छन्नदिनं स्फुरत्प्रकाशयुक्तमकारि। प्रियागमने सौकर्यार्थमिति" व्याचख्युः॥६६॥

चेष्टासूक्तं मनोरथमाह--**आवयोरिति**। प्रियस्य मम चेत्यर्थः।

तामेव प्रगल्भामुदाहरति--**प्रगल्भेति**। **कृतमिति**। **हरिणीदृशा** मृगेक्षणया **वपुषि** देहे **भूषणं कृतम**लङ्करणमारचितमिति भावः। **चिकुराणां** कुन्तलानां **धोरणी** सङ्घातः केशसमूह इतियावत्। **धूपिता** सुरभिणा धूपेन वासितेत्यर्थः। **शयनसन्निधौ** तल्पोपान्ते **क्रमुकाणां** पूगीफलानां **वीटिकानां** सोपकरणताम्बूलानां च **सम्भृतिः** सङ्कलना **कृता** विहिता **भवनं** भोगावासम् **एत्य** आगत्य **देहत्विषा** स्वशरीरकान्त्या **स्फुरन्त्यः** उल्लसन्त्यः ताः **कनककेतकीकुसुमानां** पीतक्रकचच्छदपुष्पाणां **कान्तयः** रुचयः ताभिः **दुर्दिनम्** अन्धकार इति यावत्। **अकारि** प्रक्षिप्तं दूरीकृतमिति भावः। अतिशयोक्तिरलङ्कारः पृथ्वीवृत्तम्॥६६॥

**परकीया वासकसज्जा यथा—**

**श्वश्रूं स्वापयति च्छलेन च तिरोधत्ते प्रदीपाङ्कुरान्**
**धत्ते सौधकपोतपोतनिनदैः साङ्केतिकं चेष्टितम्।**
**शश्वत्पार्श्वविवर्तिताङ्गलतिकं लोलत्कपोलद्युति**
**क्वापि क्वापि कराम्बुजं प्रियधिया तल्पान्तिकं न्यस्यति ॥६८॥**

---

द्विधा प्रकारद्वयेन इतं प्राप्तं द्वीतम्, तस्य भावो द्वैतम्। तदुक्तं भट्टपादैः "द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते।" कैयटस्त्वाह "द्वयोर्भावो द्विता तदेव द्वैतमिति। स्वार्थे अण्" इति। भेदे इति यावत्। भूय इति पूर्वपिक्षयोक्तम्। विप्लवो दुःखं स्यादित्यनुषङ्गः। अद्वैते परस्परभेदाभावे तु स्मितेन स्फीतमवदातपरस्परदर्शनं न स्यात्। ननु स्वस्यापि दर्शनं भवत्येवेत्यत उक्तम्—अन्योन्येति। विषयताव्यधिकरणेनावच्छेदकतासम्वन्धेनेत्यर्थः। तथा च स्वदर्शनस्य रतिविशेषानाधायकत्वान्न तेन कृतार्थत्वमिति तात्पर्यम्। अतोऽर्द्धनारीश्वरप्रायत्वं भवत्वितीच्छेति व्यङ्ग्यमित्याहुः ॥६७॥

**श्वश्रूमिति**। भक्तिलिङ्गेनाङ्गसंवाहनादिना श्वश्रूं स्वापयति। शाययति। "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ" इति श्वश्र्वाः कर्मत्वम्। सुपेरकर्मकत्वात्। श्वश्रूः शेते इत्यण्यन्तावस्थायां च कर्त्रीत्वात्। "अतिप्रभाते जामातृसदने महोत्सवविलोकनाय गन्तव्यमस्तीत्यादि कपटमत्र" इति केचित्। अङ्कुरेति नवदीपितत्वाच्चिरकालावस्थायित्वसूचनम्। तिरोधत्ते यत्र तदवस्थित्या श्वश्र्वादिसन्निहितानिष्टदेशे तच्चक्षुःसंयोगः स्यात्, नायकागमनमार्गे स्वशयने च प्रकाशो न स्यात्तादृशदेशे

अस्याश्च स्वीयावासकसज्जाया चेष्टान्यतममनोरथद्वारा तामुदाहर्तुमुपक्रमते—**मनोरथ इति**। **आवयोरिति**। **आवयोः** मम च प्रियस्य चेति भावः **अङ्गयो**-रवयवयोः **द्वैते** भेदे सति **भूयः** पुनः **विरहस्य विप्लवः** वियोगोपद्रवः। **अद्वैते**ऽभेदे सति **स्मितेन** ईषद्धास्येनानुरागातिशयजन्येनेति भावः। **स्फीत**मुत्कृष्टं प्रवृद्धं वा **अन्योन्यवीक्षणं** परस्परावलोकनं न स्यात्। परिकरालङ्कारः। अनुष्टुब् वृत्तम् ॥६७॥

ऽवस्थापयतीत्यर्थः। विषयावच्छिन्नालोकसंयोगस्यैव चाक्षुषहेतुतया श्वश्र्वादिभिः स्वापच्युतावप्यागच्छन् शयनस्थो वा प्रियो मा दृश्यतां प्रियेण च प्रतिकूलाः परिहारार्थं दृश्यन्तामित्यभिप्रायः। केचित्तु "प्रकाशकतया सन्तापकतया च नायाति भवत्या निद्रेत्यादि कपटमत्र" इत्याहुः।

सौधवर्तिनो ये कपोतपोताः पारावतार्भकास्तन्निनदसदृशैर्निनदैः साङ्केतिकं सङ्केतोपयोगि चेष्टितं धत्ते। अहमत्रैवास्मि त्वया प्रच्छन्नमागन्तव्यमिति स्वाभिप्रायं यथा प्रियो जानीयात्तथाशब्दं करोतीत्यर्थः। एतेन संयोगकालीनसीत्कृतानामपि गोपनोपायो दर्शितः। तच्च लावककपोतकोकिलेत्यादि प्रागुक्तकामशास्त्रात्।

पार्श्वयोर्वामदक्षिणभागयोर्विवर्तिता सम्मुखीकृताङ्गलतिका यत्र। पूर्वमनागमनज्ञानेऽप्यनन्तरमागमनसम्भावनोत्पत्त्या शश्वदिति। उभयभागावच्छेदेन हस्तस्पर्शस्य विवर्तनव्यतिरेकेणाप्युपपत्तौ समागतस्य प्रियस्य परिरम्भविलम्बो माभूदित्याशयेन ,विवर्तनोपयोगः। मीलन्ती कपोलयोर्द्युतिर्यत्रेति द्वयं क्रियाविशेषणम्। "प्रियागमनसम्भावनया मुखप्रसादाद्" इति केचित्। वस्तुतो विवलनसमये एकगण्डस्थलतिरोधानाल्लोलत्वं बोध्यम्।

गृहाभ्यन्तरागतस्य तल्पागमने विलम्बाभावादन्यत्र गवेषणा-

परकीयां वासकसज्जामुदाहर्तुमुपन्यस्यति—परकीयेति। श्वश्रूमिति। श्वश्रूं भर्तृजननीं छलेन केनापि व्याजेन स्वापयति शाययति। प्रदीपाङ्कुरं दीपकज्योतिषमित्यर्थः तिरोधत्ते अन्तरितं करोति। सौधकपोतपोतनिनदैः सौधस्थानां प्रासादवर्तिनां कपोतपोतानां पारावतशिशूनां निनदैः रवैः साङ्केतिक प्रियाह्वानादिसूचकं चेष्टितं व्यापारं धत्ते करोति। शश्वत् भूयोभूयः पार्श्वयोः कक्षाधोभागयोः विवर्तिता विवलिता अङ्गलतिका गात्रवल्ली यस्मिन् कर्मणि तत्। लोलन्ती चञ्चला कपोलयोः गण्डस्थलयोः द्युतिः कान्तिः यस्मिस्तत् यथास्यात्तथा। तल्पान्तिकं शय्यासमीपं प्रियधिया उपपतिबुद्ध्या, तमसि क्वापि निलीनः स्यादिति मत्वेत्यर्थः, क्वापि क्वापि क्वचित्क्वचित् कराम्बुजं पाणिकमलं न्यस्यति स्थापयति। रूपकालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥६८॥

**सामान्यवनिता वासकसज्जा यथा—**

**चोलं नीलनिचोलकर्षणविधौ चूडामणिं चुम्बने**
**याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः काञ्चनीम् ।**
**इत्थं चन्दनचर्चितैर्मृगमदैरङ्गानि संस्कुर्वती**
**तत्किं यन्न मनोरथं वितनुते वारेषु वाराङ्गना ॥६९॥**

---

नुपयोगात् । तल्पान्तिक इति । प्रियधिया प्रियनिश्चयार्थम् । अध्ययनेन वसतीतिवद्धेतौ तृतीया । करन्यासप्रवृत्तिजनकेच्छाविषयतया हेतुत्वात् । "तदागमनसम्भावनया" इति केचित् । अन्धकारे चाक्षुषासम्भवात् कराम्बुजमिति । स्पर्शनार्थमितिभावः । अम्बुजसदृशं करमित्युपमितसमासः । एतेन रूपकमित्यपास्तम् । पद्मस्य स्पार्शनानुपयोगात् । यद्देशावच्छेदेन करस्पर्शे नायकाभावनिश्चयो जातस्तद्देशसन्निहितनायकावच्छेदयोग्यदेशेऽपि तस्य जातत्वात्करन्यासवैयर्थ्यात् । तदधिकदेशावच्छेदेन स्पर्शलाभाय क्वापीत्युक्तम् । तादृशानेकदेशलाभाय वीप्सेति दिक् ॥६८॥

**चोलमिति** । निचोल उत्तरीयम् । "निचोलः प्रच्छदपटः" इत्यमरः । "नीलपदमभिसारसौकर्यार्थं गौरवत्वद्योतनार्थञ्च" इति केचित् । "चूडामणिः शिरोरत्नम्" इत्यमरः । कुचयोरिति सप्तमीद्विवचनं करार्पणेत्यनेन मर्दने नखक्षते च वस्त्वन्तरप्रार्थनेच्छा व्यज्यते । वाह्यसम्भोग एवैतादृशप्रार्थनायां चाभ्यन्तरसम्भोगेऽत्यन्ताभ्यर्हितानेकवस्तुजिघृक्षा व्यङ्ग्या ।

ननूभयत्र विधिपदोपादानमनुपपन्नम् । मैवं । कर्षणरूपे विधाविति पूर्वत्र विधिशब्दस्य कर्मणि व्युत्पत्तेः । करार्पणस्य विधावित्युत्तरत्र भावे कृद्योगे कर्मणि षष्ठीति भेदात् ।

इत्थमिति मनोरथान्वितम् । यमित्यस्य यद्विषयकमिति लक्ष्यम् । न चैवमुपसर्जनत्वात्पदाद्यत्वं न स्यात् सर्वाद्यन्तर्गणकार्यत्वादिति-वाच्यम्; वृत्त्यनुप्रविष्टस्यैव तदङ्गीकारात् । लक्षणामात्रेण तदनापत्तेः । यद्विषयकं मनोरथं न कुरुते तद्वस्तु किम् । बहुविषयिकामिच्छां

**सदा साकूताज्ञाकरप्रियतमा स्वाधीनपतिका। अस्याश्चेष्टाः वनविहारादिमदनोत्सवमदाहङ्कारमनोरथावाप्तिप्रभृतयः।**

**मुग्धा स्वाधीनपतिका यथा--**

---

तनोतीत्यर्थः। केचित्तु "मनोरथपदं तद्विषयपरम्, यद्वस्तु मनोरथविषयं न करोति तद्वस्तु किम्" इति व्याचख्युः ॥६९॥

सदेति। कदाचिदाज्ञाया अन्यप्रियेणापि करणात्सदेति। स्वेच्छानुविधायिप्रवृत्तिमत्प्रियकत्वमर्थः। यद्भरतः—

सुरतातिशयैर्बद्धो यस्याः पार्श्वगतः प्रियः।
सामोदगुणसम्पन्ना भवेत्स्वाधीनभर्तृका॥ इति।

तामेव सामान्यवनितामुदाहरति—**सामान्येति**। **चोलमिति**। **नीलस्य** नीलवर्णस्य **निचोलस्य** प्रच्छदपटस्य "निचोलः प्रच्छदपटः" इति हैमः। **कर्षणविधौ** दयितेन सम्भोगहेतोः कृष्यमाणे सतीत्यर्थः। **चोलं** कूर्पासकं (भाषायां चोलीत्याख्यम्) **याचिष्ये** ऽर्थयिष्ये। **चुम्बने** ऽधरदशनादौ **चूडामणिं** शिरोभूषणं याचिष्ये, **कुचयोः** स्तनयोः **करार्पणविधौ** मर्दनाय करप्रेरणे सतीत्यर्थः पुनः। **काञ्चनीम्** सुवर्णघटितां **काञ्चीं** मेखलां याचिष्ये। **इत्थमनेन** प्रकारेण **चन्दनर्चाचितैः** मलयजमिश्रितैः **मृगमदैः** कस्तूरिकाभिः **अङ्गानि** स्वावयवानि **संस्कुर्वती** शोधयन्ती **वाराङ्गना** गणिका **वारेषु** कामुकसमागमाय निर्णीतदिवसेषु **यन्मनोरथं** यदभिलाषकं **न वितनुते** न विस्तारयति **तत्किम्**। न किमपीत्यर्थः। अनुप्रासोऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥६९॥

अथावसरप्राप्तां स्वाधीनपतिकां लक्षयति—**सदेति**। **सदा** सर्वदा **साकूतं** साभिप्रायमाज्ञामादेशं करोतीति तदभिप्रायानुरूपादेशपालक इतियावत्। एवंविधः **प्रियतमः** दयितः यस्याः सा **स्वाधीनपतिका** उच्यत इति शेषः। तद्व्यापारानाह—**अस्या इति**। **अस्याः** स्वाधीनपतिकायाश्**चेष्टाः** क्रियाः **वनविहारादि** उद्यानक्रीडादीत्यर्थः। आदिपदेन जलक्रीडादि। **मदनमहोत्सवः** कामपूजोत्सवः। अत्र पतिः पूजादिना प्रसाद्यते। **मदो** हर्षोत्कर्षः, **अहङ्कारः** आत्मनि दयितवशीकारौपयिकगुणाभिमानः। **मनोरथानां** अभिलषितानाम् **अवाप्तिः** प्राप्तिरित्यादयः।

तत्र मुग्धां स्वाधीनपतिकामुदाहर्तुमुपक्रमते—**मुग्धेति**। **मध्य इति**। ममेति

**मध्ये न कृशिमा स्तने न गरिमा देहे न वा कान्तिमा**
**श्रोणौ न प्रथिमा गतौ न जडिमा नेत्रे न वा वक्रिमा।**
**लास्ये न द्रढिमा न वाचि पटिमा हास्ये न वा स्फीतिमा**
**प्राणेशस्य तथापि मज्जति मनो मय्येव किं कारणम् ॥७०॥**

---

**मध्ये इति**। कृशस्य भावः कृशिमा। पृथ्वादित्वादिमनिच्। "र ऋतोहलादेर्लघोः" इति ऋकारस्य रेफादेशः। अवयवान्तरोपचयाभावान्मध्ये कृशत्वप्रत्ययानुदयात्। अत एवाह—स्तने न गरिमेति। गरिमा गुरुत्वं गुरोर्गरादेशः।

रूपयौवनलावण्यैरुपभोगोपवृंहितैः।
अलङ्करणमङ्गानां शोभेति परिकीर्तिता॥
विज्ञेया च तथा कान्तिः शोभैवापूर्वमन्मथा।

इति भरतः। तस्या मा लक्ष्मीरुल्लासो ज्ञानं वेति व्याख्येयम्। एतेन स्फीतिमेतिव्याख्यातम्। वक्रिमेत्यत्र तु यद्यपि मुग्धिमादिष्विमनिज्मृग्य इति वामनेनोक्तं तथापि प्रयोगप्राचुर्यं गतिः। "मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितम्" इत्यादि दर्शनात्। तथा च यौवनस्य सम्यगनवतारात्पारिभाषिकशोभाया एव विरहे मदनोत्कर्षविशिष्टशोभारूपकान्तिरप्यनवकाशेति भावः। श्रोणिर्नितम्वः। तत्र

सर्वत्रान्वेति। **मध्येऽवलग्ने** देहमध्यभागे कटयामितियावत्। **कृशिमा** कृशस्य भावः कृशिमा कार्श्यं नास्ति। **स्तने गरिमा** गुरुभावः पीनत्वमित्यर्थः न। **न वा** न च **देहे** शरीरे **कान्तिमा** दीप्तिमत्तेति यावत्। **श्रोणौ** नितम्वे **प्रथिमा** पृथोर्भावो विस्तार इत्यर्थः न। **गतौ** गमने **जडिमा** स्तैमित्यं न। **न वा** न च **नेत्रे** चक्षुषि **वक्रिमा** वक्रत्वं कौटिल्यमितिभावः। **लास्ये** नर्तने न **द्रढिमा** दृढत्वमभ्यासोत्कर्ष इति यावत्। **वाचि** वचने **पटिमा** पटुत्वम् न। **हास्ये** न **स्फीतिमा** वृद्धिः। "स्फीतिर्वृद्धौ" इत्यमरः। तथापि **प्राणेशस्य** दयितस्य **मनः** चित्तं **मय्येव मज्जति** नान्यत्र लीयत इत्यर्थः। अत्र **किं कारणम्** को हेतुः। अत्र पृथ्वादेर्दृढादेर्वाऽऽकृतिगणत्वात् सर्वत्रैवेमनिचःसिद्धिः। मनोमज्जनहेतोरसत्त्वेऽपि मज्जनदर्शनाद् विभावनालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥७०॥

**मध्या स्वाधीनपतिका यथा—**

**यदपि रतिमहोत्सवे नकारो यदपि करेण नीविधारणानि।**
**प्रियसखि पतिरेष पार्श्वदेशं तदपि न मुञ्चति चेत्किमा-**
**चरामि ॥७१॥**

---

प्रथिमा पृथुत्वमपि नास्ति। गात्रं पूर्णावयवं पीनौ च पयोधरौ नतं मध्यमिति द्वितीययौवनकार्यं तच्च प्रथमे नास्तीति भावः। अत एव गतौ जडिमा मान्द्यमपि नास्ति। स्तननितम्बादिगौरवविशेष-विरहात्। नेत्रे इति। यद्यपि वक्रत्वमस्त्येव तथापि नायकसमक्षं लज्जया तदभावात् तज्ज्ञानविषयत्वं नास्तीत्यर्थः। न च मुग्धायां कटाक्षो न वर्ण्यत इति वाच्यम्—

वंकाच्छि येच्छिअं मा करेहि साहाविअं पलोएसु।
सो वि सुदिठ्ठो होदि तुमं वि मुद्धा कलिज्जहसि ॥*

इत्यादिदर्शनात्। लास्यं विलासविशेषः।

पानस्थानासनादीनां मुखनेत्रादिकर्मणाम्।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना ॥ इति।

तौर्यत्रिकमिति केचित्। पटिमा वक्रत्वमाधुर्यादिः। सम्भाषणस्य वक्तुमशक्यत्वात्। हास्ये हासे। स्फीतिमा विशदत्वं न। मज्जती-त्यन्यत्रानासक्तिर्व्यंङ्ग्या ॥७०॥

**यदपीति**। उत्कटेच्छाविषयत्वसूचनाय रतीति। अप्रत्याख्येयत्वाय उत्सवेति। उत्सवान्तरापेक्षया विशेषार्थं महेति। नकारः प्रतिषेध-तात्पर्यग्राहकः अनेन विब्वोकाख्यो भाव उक्तः। यद्भरतः—

इष्टानामर्थानां प्राप्तावभिमानगर्वसम्भूतः।
स्त्रीणामनादरकृतो विब्वोको नाम विज्ञेयः॥

करेणेतीच्छापूर्वकत्वसूचनम् धारणानीति बहुत्वेन एकवारं प्रियेण करापसारणेऽपि पुनर्धारणमित्यावृत्तिलाभः ॥७१॥

---

*वक्राक्षेक्षणं मा कुरु स्वाभाविकं प्रलोकय।
सोऽपि सुदृष्टो भवति त्वमपि मुग्धा कथयिष्यसे। इति संस्कृतच्छाया।

**प्रौढा स्वाधीनपतिका यथा—**

**वक्त्रस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा**
**धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम्।**
**स्वप्नेनापि न गच्छति श्रुतिपथं चेतःपथं दृक्पथं**
**क्वाप्यन्या दयितस्य मे सखि कथं तस्यास्तु भेदग्रहः ॥७२॥**

---

**वक्त्रस्येति**। एतेन चक्षुर्विषयो द्रव्यं तद्रूपं चोक्तम्। लास्यं विलासो हास्यं स्मितमिति क्रियोक्त्या अधरपल्लवस्येति तदीयरागस्य चाक्षुषत्वात्। माधुर्यविशेषो रसनेन्द्रियविषय उक्तः। वचस इति श्रोत्रेन्द्रियग्राह्योक्तिः। वाकारः सौकुमार्यग्राहकत्वगिन्द्रियविषय-समुच्चयार्थः। स्वप्नेनेति प्रकृत्यादित्वात्तृतीया। स्वप्नदशावच्छेदेना-पीत्यर्थः। विप्रकृष्टाया ज्ञानोपायः श्रवणमिति तन्निषेधति—श्रुति-पथमिति, साक्षाद्दर्शनं निषेधति—दृक्पथमिति। चित्रस्वप्नवार-णाय चेतःपथमिति। तदुक्तम्—

श्रवणं तु भवेत्तत्र दूतवन्दिसखीमुखात्।
इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम्॥

मध्यां तामेवोदाहर्तुमभिधत्ते—**मध्येति**। **यदपीति**। हे **प्रियसखि**! **यदपि** यद्यपि **रतिमहोत्सवे** सम्भोगावसरे पत्या प्रारिप्सिते इतिशेषः। **नकारो** निषेधवाचको न-शब्दः मया उच्चार्यत इति भावः। **यदपि** यद्यपि **करेण** हस्तेन **नीविधारणानि** नीवी स्त्रीकटीवस्त्रबन्धनम्, तस्या धारणानि ग्रहणानि, वसनविमोचनावसरे हस्तेन मया नीवीग्रहणं कृत्वा तन्निषिध्यते इति भावः। **तदपि** तथापि **एष मे पतिः** प्रियः **पार्श्वदेशं** मत्सान्निध्यं **न मुञ्चति** न त्यजति तत् **किमाचरामि** किं विदधामि, वदेति शेषः। निवीयते इति निपूर्वाद्व्येञ् संवरणे धातोः "नौ व्यो यलोपः पूर्वस्य च दीर्घः" इत्यौणादिक इणि 'कृदिकारात्' इति ङीप्। "नीवी स्त्रीकटीवस्त्रबन्धने" इति हैमः। विशेषोक्तिरलङ्कारः पुष्पिताग्रा च वृत्तम् ॥७१।

तामेव प्रौढामुदाहरति—**प्रौढेति**। **वक्त्रस्येति**। हे **सखि**! **धन्यानां** पुण्यवतीनां प्रियेण प्रशस्यमानत्वादिति शेषः। **अरविन्द इव सुन्दरे दृशौ** यासां तासां कमल-ललामलोचनानां कासांचित् **कान्तः** दयितः तासां **वक्त्रस्य** मुखस्य **अधरपल्लवस्य** ओष्ठकिसलयस्य **वचसः** मुखध्वनेः **हास्यस्य** स्मितादेः वा अथवा **लास्यस्य** नृत्यस्य

**परकीया स्वाधीनपतिका यथा--**

**स्वीयाः सन्ति गृहे सरोरुहदृशो यासां विलासक्वणत्-**
**काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति।**
**को हेतुः सखि कानने पुरपथे सौधे सखीसन्निधौ**
**भ्राम्यन्तीमपि वल्लभस्य परितो दृष्टिर्न मां मुञ्चति ।।७३।।**

---

जाग्रद्दशायां मन्मात्रविषयकानुरागात्तत्संस्कारेण स्वप्नेऽपि ममैव दर्शनं नान्यस्या इति भावः। "स ईयते अमृतो यत्र कामम्" इति श्रुतेः। स्ववस्येतरापेक्षयोत्कर्षकथनरूपतयोत्कर्षस्य च प्रतियोगि-निरूपणाधीननिरूपणतया तादृशनायिकान्तररूपादि प्रत्यक्षाद्यभावान्न स्तुतिमाचरतीति। स्वमात्रविषयकानुरागवत्त्वापेक्षणादन्यासामधन्यत्वं ममैव तु धन्यत्वमिति व्यतिरेकध्वनिः।।७२।।

**स्वीया इति।** अनेनायासलभ्यत्वम्। प्रवासदशानिवारणाय गृहे इति। रूपवत्त्वलाभाय सरोरुहदृश इति। अतीतत्वनिरासाय सन्तीति। अवैदग्ध्यवारणाय यासामिति। विलासोऽत्र चरणमुख-वाहुचेष्टाविशेषः। तेन क्रमेण रसनाकुण्डलवलयेषु क्रियोत्पत्त्या झणत्कारोपपत्तिः। आकस्मिकत्ववारणाय न विश्राम्यतीति। वनस्य निर्जनतया तत्र दर्शनेऽपि नानुरागातिशय लाभ इत्यतः पुरपथ

**स्तुतिं** प्रशंसां **तनोति** आचरति। **मे** मम **दयितस्य** कान्तस्य तु **काऽप्यन्या,** मदितरा कापि नायिका **श्रुतिपथं** श्रोत्रपदवीं **चेतःपथं** मनःसरणिं **दृक्पथं** नेत्रगोचरं **वा स्वप्नेनापि** निद्रयाऽपि करणे तृतीया। **न गच्छति** न याति, तेन स्वप्नेऽपि मदन्या कापि न श्रूयते नाध्यायते न च दृश्यत इत्यर्थः। **अतस्तस्य** मद्दयितस्य **भेदग्रहः** व्यतिरेकवोधः **कथमस्तु** कथं भवेत्।

भेदग्रह एव द्वयोरेकस्याः प्रशंसा सम्भाव्यते। अतोऽन्यासां प्रियस्य स्तुति-कारकत्वेन भेदग्रहात् रमण्यन्तरभावनावत्तया तासां न स्वाधीनपतिकात्वमतो नैवं धन्यत्वं मम प्रियस्य तु भेदग्रहाभावात् न स्तावकत्वमःःस्वाधीनपतिकात्वा-द्धन्यत्वमिति व्यज्यते।

श्रुत्याद्यगोचरस्य वस्तु न इतरवैलक्षण्यानवधारणस्यार्थादापतिततयाऽर्था-पत्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्।।७२।।

**सामान्यवनिता स्वाधीनपतिका यथा—**

**सन्त्येव प्रतिमन्दिरं मृगदृशो यासां सुधासागर-**
**स्रोतःस्यूतसरोजसुन्दरचमत्कारा दृशोर्विभ्रमाः।**
**चित्रं किन्तु विचित्रमन्मथकलावैचित्र्यहेतोः पुन-**
**र्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम्।।७४।।**

---

इति। तत्रापि साधारणतया तन्मात्रविषयकत्वस्यान्यैरनवबोधान्न तथेत्यतः सौध इति। तत्रापि निर्जनत्वदशायां दर्शनस्य भयानाधायकतया सखीसन्निधाविति। वस्तुतः सखीनामपि तस्य सखीत्वप्रकारकज्ञानाभावोऽत्र बोध्यः। तेन स्वचरितस्य ताभिर्ज्ञाने प्रकाशप्रसङ्गज्ञानसत्त्वेऽपि दर्शनप्रवृत्त्योत्कटरागवत्त्वं व्यज्यते। अन्यथा सखीनां तत्प्रकाशकत्वाभावादसङ्गतिः स्यात्।।७३।।

**सन्त्येवेति**। एवकारो निश्चयार्थः। प्रतिमन्दिरमिति अल्पयत्नसाध्यत्वार्थम्। मृगदृश इत्यन्विष्यमाणत्वे सति सुलभत्वं व्यङ्ग्यम्। सुधेत्याह्लादकत्वम्। सागरेति भावगाम्भीर्यम्। स्रोत इति चपलत्वाविच्छेदौ। स्यूतेति सरसत्वम्। सरोजेति तद्वत्सुन्दरश्चमत्कारो विच्छित्तिविशेषो येषां तादृशा दृशोर्विभ्रमा विलासाः कटाक्षरूपाः।

अथ परकीयां स्वाधीनपतिकामुदाहर्तुमुपक्रमते—**परकीयेति**। **स्वीया इति**। **हे सखि! यद्यपि स्वीयाः** स्वकीयाः **मृगदृशः** हरिणनयनाः **गृहे गृहे** प्रतिगृहमित्यर्थः। **सन्ति**। **यासां** स्वीयानां **विलासेन** विभ्रमेण **क्वणतां** ध्वनिवतां **काञ्ची** नीवी च **कुण्डलं** कर्णाभरणं च **हेमकङ्कणं** स्वर्णवलयं च तेषां **झणत्कारः** रवविशेषः **न विश्राम्यति** न विरमतीत्यर्थः। **तथापि कानने** वने उद्यानादावित्यर्थः, **पुरपथे** राजमार्गे **सौधे** प्रासादे **सखीसन्निधौ** सहचरीणां समीपे **वा मम परितः** मदभितः **भ्राम्यन्ती** सञ्चरन्ती **वल्लभस्य** प्रियतमस्य **दृष्टिः मां न मुञ्चति** न परित्यजति **को हेतुः** किमत्र कारणमितिभावः। स्वीयानामपेक्षया विलक्षणा गुणा मयि सन्तीत्यभिप्रायः। व्यतिरेकालङ्कारः शार्दूलविक्रीडितं च वृत्तम्।।७३।।

सामान्यां च तामुदाहरति—**सामान्येति**। **सन्त्येवेति**। **प्रतिमन्दिरं** गृहे गृहे **युवतयः** तरुण्यः स्वीयाः परकीयाश्चेति भावः। **सन्त्येव** विद्यन्त एव न दुर्लभा इति यावत्। **यासां** युवतीनां **सुधासागरस्य** पीयूषसिन्धोः **स्रोतसि** प्रवाहे **स्यूतं** सम्बद्धं

**स्वयमभिसरति प्रियमभिसारयति वा साभिसारिका। अस्याश्चेष्टाः—समयानुरूपवेषभूषणशङ्काप्रज्ञानैपुण्यकपट-साहसादय इति परकीयायाः, स्वकीयायास्तु स एव क्रमः।***

केचित्तु "विचित्रमन्मथकलावैशद्यहेतोस्तदर्थे दृशोर्विभ्रमाः सन्ति" इति योजयन्ति। तदसत्। चित्रं किन्त्वित्यादिवशाद्विचित्रे-त्यादेरुत्तरवाक्यान्तर्भावनिश्चयात्।

विचित्रा विलक्षणा मन्मथकलाः कामकेलयः तासां वैशद्यं प्रादुर्भावस्तदर्थम्। एतेन याचकतया दाननिवृत्तिः। मय्येव प्रयच्छतीत्यन्वयः। दुस्त्यजत्वलाभाय वित्तमिति। तदुत्कर्षाय चित्तहरमिति।

ननु हेतोरित्यस्योत्तरत्वान्वये किं कारणमित्यस्यान्वयो न स्यात्। तद्रूपकारणस्य स्वयमेवोपन्यासादिति चेत्। न। तदर्थं मह्यं धनदाने पूर्वार्धोक्तानां तद्वैषद्यसामर्थ्यमस्ति न वेत्यनिश्चयेन तदुपपत्तेः। यद्वा। तासामपि यथोक्तवैशद्यसामर्थ्यस्य पूर्वमभिधानात् तदर्थं मय्येव धनदाने किं कारणम्, इति सम्भवात्।

यदपि "प्रयच्छत्येवेत्येवकारो भिन्नक्रमतया योज्यः। स्वीया-परकीयाणां द्रव्यदानाप्रसक्त्या व्यावर्त्याभावात्। न च वेश्यान्तरं व्यावर्त्यम्, लक्ष्यत्वाद्" इति। तदप्यसत्। पूर्वार्धोपात्तधर्मावच्छि-न्नतया स्वभिन्नस्त्रीमात्रस्य व्यावर्त्यत्वात्। धनव्ययव्यतिरेक-साध्येऽर्थे तद्व्ययप्रवृत्त्यनर्हत्वात्। वेश्यान्तराधीनत्वेऽपि स्वाधीन-

**यत्सरोजं** कमलं तद्वत् **सुन्दरा** रुचिराः **चमत्काराः** येषां ते एवंभूता **दृशोर्नेत्रयो-र्विभ्रमाः** विलासाः। सन्तीति शेषः। किन्तु **तथापि चित्रम्** आश्चर्यमेतत् यत् **विचित्राणां** विलक्षणानां **मन्मथकलानां** कन्दर्पकौशलानां **वैशद्यं** स्फुटत्वं तस्य **हेतोः** तदर्थमितिभावः। **युवा स** तरुणः **मय्येव** मदुपर्येवासक्तः सन् **चित्तहरं** मनोहरं

*"अलक्ष्यतासम्पादकस्य श्वेताद्याभरणस्य स्वीयाभिसारिकाया-मसम्भवात्" इत्यधिकः पाठोऽनन्तभट्टैरन्यैश्च टीकाकृद्भिरत्र गृहीतः परन्तु समञ्जसाकारानभिमतत्वादस्माभिर्न गृह्यते।

भर्तृकत्वव्याघातसाम्यात् । प्रयच्छत्येवेति क्रियासङ्गतैवकारस्यात्यन्तायोगव्यवच्छेदार्थकत्वेनोदाहरणासङ्गतेश्चेतिदिक् ।।७४।।

**स्वयमिति** । तथा च दर्पणः–

अभिसारयते कान्तं या मन्मथवशंवदा।
स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका ।।

आद्या यथा––

न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि।
निपुणं तथैनमभिगम्य वदेरभिदूति काचिदिति सन्दिदिशे ।।

"कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" इत्यमरः। एवं च या स्वयमभिसरति सैवाभिसारिका मता । द्वितीयं तु प्राचीनानुरोधमात्रादुक्तम् । नन्वेवम्–

हित्वा लज्जां समाकृष्टा मदनेन मदेन वा।
अभिसारयते कान्तं सा भवेदभिसारिका ।।

इति भरतवचनविरोध इति चेत्, न तत्र णिजर्थस्याविवक्षितत्वात्, अन्यथा या स्वयमभिसरति तदसङ्ग्रहस्य तवाप्यापत्तेः, एकेनार्थद्वयस्यानभिधानात्। अत एवोक्तामरव्याख्यायां क्षीरस्वामिनोक्तं भरतवाक्यमुपन्यस्तम्। अत एवाग्रे भरतेन स्पष्टमुक्तम्––

वेश्यायाः कुलटाया वा प्रेष्याया वा प्रयोक्तृभिः।
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् ।।
समदा मृदुचेष्टा च तथापरिजनान्विता।
नानाभरणचित्राङ्गी गच्छेद्वेश्याङ्गना शनैः ।।
संलीना स्वेषु गात्रेषु लज्जासन्नमितानना ।
अवगुण्ठनसंवीता गच्छेत्तु कुलजाङ्गना ।।
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना।
आविद्धगतिसञ्चारा गच्छेत्प्रेष्याङ्गना यथा।।

अन्यैरप्युक्तम्––

या दूतिकागमनकालमपारयन्ती
सोढुं स्मरज्वरभयार्तिपिपासितेव ।

निर्याति वल्लभजनाधरपानलोभात्
सा कथ्यते कविवरैरभिसारिकेति ॥

अत एव विद्यानाथः--

कान्ताभिसरणोद्युक्ता स्मरार्ता साभिसारिका । इति दिक् ।

समयेति । अभिसारसमयः शुक्लकृष्णपक्षादिः । तदनुरूपः शुक्लकृष्णाम्बरपरिधानादिः । भूषणपदमुपलक्षणम् । अत्र व्याचक्षते--स्वीयापरकीययोरभिसारव्यापारस्तुल्य एवेत्याह । इतीत्यादि । तुशब्दश्चार्थे । प्रकृत एव पूर्वोक्त एव नान्य इति । नचालक्ष्यतासम्पादकस्य श्वेताद्याभरणग्रहस्य स्वीयायामसम्भव इतिवाच्यम् । यद्भिया गुप्तमभिसरति ततो गोपनार्थे तदुपपत्तेः । चौर्येण सम्भोगिन्या एवाभिसारिकात्वात् । अन्यथा वासकसज्जादेरप्यत्रैवान्तर्भावापत्तेः ।

यत्तु "परकीयोदाहरणानन्तरं ज्योत्स्नाभिसारिकादिभेदत्रयाभिधानान्न स्वीयायां तद्भेदा अभिमताः । अन्यथा ध्वान्ताभिसारिकोदाहरणे स्वैरिणीतिपदोपादानवैयर्थ्यात्" इति । तन्न । परकीयायामपि तत्सम्भवेन स्वैरिणीपदोपपत्तेः । अन्ययोगव्यवच्छेदे मानाभावात् । वेश्याव्यावृत्त्यर्थं तत्पूर्वपाठोपपत्तेश्च । उभयानन्तरपाठेनोभयसाधारण्यलाभात् । शङ्कादेर्वेश्यायामभावात् । ज्योत्स्नातमिस्रान्यतराभिसारिकाव्यतिरेकेण निशाभिसारिकानुपपत्त्या प्रौढाभिसारिकोदाहरणे निशास्वितिपदोपसन्दानवशात् स्वीयायामपि तद्भेदयोः सङ्गतत्वाच्च ।

**वित्तं** धनं **पुनः** भूयोऽपि **प्रयच्छति** वितरति **किमत्र कारणम्** को हेतुः । तन्न वेद्मीति भावः । अर्थापत्तिलुप्तोपमयोः संसृष्टिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥७४॥

अथ क्रमप्राप्तामन्तिमामभिसारिकां लक्षयति--**स्वयमिति । स्वयमभिसरति** कान्तसङ्गमाय स्वयं सङ्केतस्थलं गच्छति, **प्रियं** दयितम् **अभिसारयति** दूत्यादिद्वाराऽऽगन्तुं प्रेरयति वा **साभिसारिका** उच्यते इति शेषः । अस्याश्चेष्टा वर्णयति--**अस्या इति** । समयानुरूपं रात्रिदिवसज्योत्स्नातमिस्रादिकालानुकूलमित्यर्थः । **वेषं** प्रसाधनं, **भूषणम**लङ्करणं **शङ्का** रहस्यभेदविषयकातङ्कः **प्रज्ञा**नैपुण्यं अभिसारनिगूहनप्रावीण्यं **कपटः** गुरुजनादिवञ्चनम् **साहसादयः** इति एताः परकीयायाश्चेष्टा इति

**मुग्धाभिसारिका यथा——**

**दूती विद्युदुपागता सहचरी रात्रिश्चिरस्थायिनी**
**दैवज्ञो दिशति स्वनेन जलदः प्रस्थानवेलां शुभाम् ।**
**वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवै-**
**र्जातोऽयं दयिताभिसारसमयो मुग्धे विमुञ्च त्रपाम् ।।७५।।**

---

**दूतीति** । विद्युदिति प्रकाशकत्वम् । दूतीति प्रियसङ्गमघटकत्वम् । तत्सङ्गविच्छेदावश्यकत्वादाह——सहचरीति । मुख्यसखीनां सम्भोगसमये सन्निध्यनपेक्षणादाह-चिरस्थायिनीति । तेन सम्भोगस्य चिरकालानुवृत्तिर्व्यङ्ग्या । प्रस्थानसमयो दुर्लभ इत्याह-दैवज्ञ इति । एतेन तत्समयाभिसारस्य फलोपधायकत्वध्वनिः । तात्पर्यनिश्चयाय स्वनेनेति । अतएवोक्तं शुभमिति । फलायोगव्यवच्छेदसूचिकामित्यर्थः । तदानीं वृष्टिभीत्या जनान्तरसञ्चारविरहान्न मार्गे शङ्केति भावः । अनुमापकमप्याह—वाचमिति । मङ्गलं प्रयोजनं यस्यास्तां माङ्गलिकीम् । प्रारीप्सिताविघ्नसिद्धिबोधिकामिति यावत् । दूराद्दर्शनवारणाय तिमिरेति । अल्पत्वनिषेधाय स्तोम इति । "भृङ्गारी चीरुका चीरी झिल्लिका च समा इमाः" इत्यमरः । दयिताभिसारेति कर्मषष्ठ्या समासः । प्रतिबन्धकाभावार्थमाह-विमुञ्चेति ।।७५।।

शेषः । **स्वकीयायास्तु** अभिसारिकाया अपीत्यर्थः **स एव** प्रकृत **एव क्रमः** अभिसारव्यापारः । गुरुजनप्रतिबन्धादिना गृहे रत्यभावेन सङ्केतकरणे लज्जापरवशादात्मगोपनाय स्वीयाया अपि तद्विधवेषादिकं युक्तमेवेतिभावः ।

मुग्धामभिसारिकामुदाहरति——**मुग्धेति** । **दूतीति** । **हे मुग्धे विद्युत्** चपलैव **दूती** सञ्चारिका **उपागता** आनयनाय प्राप्तेत्यर्थः । चिरं तिष्ठतीति **चिरस्थायिनी रात्रिः** निशैव **सहचरी** सहायेवास्ति । **दैवज्ञः** गणकः कालोपदेष्टेत्यर्थः **जलदः** मेघः **स्वनेन** शुभाम् सुखावहां **प्रस्थानवेलां** गमनमुहूर्तं **दिशति** आज्ञापयति । **तिमिरस्तोमोऽन्धकारसमूहः अपि झिल्लीरवैः** भृङ्गनिस्वनैः **माङ्गलिकीं** कल्याणकरीमित्यर्थः **वाचं** ध्वनिं **करोति** व्याहरति अतः **त्रपां** लज्जां **मुञ्च** जहीहि **अयम्** एष

मध्याभिसारिका यथा--

भीतासि नैव भुजगात् पथि मद्भुजस्य
सङ्गे पुनः किमपि कम्पमुरीकरोषि।
अम्भोधरध्वनिभिरक्षुभितासि तन्वि
मद्वाचि साचिवदनासि किमाचरामि ।।७६।।

---

भीतेति। तन्वीति भयार्हत्वम्। भुजगादिति भयहेतुत्वम्। पथीति प्रकारान्तरेणापि भयोत्पत्तियोग्यत्वम्। एवकारस्तदभाव-निश्चयार्थः। केचित्तु "भीतैव नासि तत्कार्यं कम्पादिकं तु दूरापास्तम्" इत्याहुः। तन्न। अभिन्नक्रमत्वापत्तेः, कार्याभावेनैव भयाभावानुमानाच्च। मदिति तद्विषयानुरागवत्त्वसूचनम्। भुजपदेन स्वेच्छानुरूपचेष्टावत्त्वनियमेन तदनिष्टानुपधायकत्वध्वनिः। भुज-सम्वन्धिशस्त्रादिवारणाय सङ्गे इति। पुनरिति त्वर्थे। किमपीति सामान्ये क्लीबत्वम्। कम्पो वेपथुः। तमुरीकरोषि दधासि। किमपी-पदपि सङ्गे इत्यन्वयः। "एवं दृढालिङ्गने किं करिष्यसीति न जाने इति व्यङ्ग्यम्" इति केचित्।

यत्तु "ऊरीति दीर्घस्यैवोकारस्य ऊर्यादिगणे पाठादुरीकरोषी-त्यसाध्विति"। तन्न। ह्रस्वस्यापि प्रामाणिकत्वात्। "न खलु मुष्टिरुरीकृतवन्धन" इतिनैषधादिदर्शनात्। प्रपञ्चितं चेदं नैषधव्याख्यायामस्माभिः।

**दयिताभिसारसमयः** प्रियतमसमीपगमनकालो **जातः** उपस्थितः। त्वरयाभिसर त्रपया शुभप्रस्थानवेलातिक्रमं मा कुरु, इत्यभिप्रायः। रूपकसंसृष्टा समासोक्तिर-लङ्कारः। शार्दूलविक्रीडितं वृत्तम्।।७५।।

मध्यामभिसारिकामुपन्यस्यति—**मध्येति**। **भीतेति**। हे **तन्वि! पथि** मार्गे **भुजगात्** पन्नगात् **नैव भीतासि** भयं नोपगतासि किन्तु **मद्भुजस्य** मद्वाहोः **सङ्गे** संस्पर्शे आलिङ्गितुमुपक्रमे इति भावः। **कमपि** विलक्षणं **कम्पं** वेपथुम् **उरी-करोषि** अभ्युपगच्छसि। **अम्भोधराणां** जलदानां **ध्वनिभिः** गर्जनैः **अक्षुभितासि** साध्वसं न प्राप्तासि किन्तु **मद्वाचि** मया किमप्युक्ते सतीत्यर्थः। **साचि** तिर्यक् **वदनं**

**प्रौढाभिसारिका यथा--**

**स्फुरदुरसिजभारभङ्गुराङ्गी किसलयकोमलकान्तिना पदेन।**
**अथ कथय कथं सहेत गन्तुं यदि न निशासु मनोरथो रथः स्यात् ॥७७॥**

---

अम्भोधरेति ध्वनीनां गम्भीरत्वं व्यङ्ग्यम्। ध्वनीति निरर्थकत्वम्। बहुवचनमेकस्यानाकर्णनादपि भयं न स्यादितिशङ्कावारणार्थम्। अक्षुभिता अत्रस्तासि। मम वाचि वचने तु साचितिर्यग्वदनं यस्यास्त्वादृश्यसि वचसो वर्णात्मकतया सार्थकत्वादभीष्टानुनयादिपरतया ततः साम्मुख्यमेवोचितमिति भावः।

यत्तु "न क्षुभितासीति युक्तम्" इति। तदसत्। नह्यत्र त्रासाभावो विधेयत्वेनाभिमतो येन समासे नञः पर्युदासपरतया निषेधस्य गुणीभूतत्वमिति दोषः स्यात् ॥७६॥

**स्फुरदिति**। अनेनोन्नतत्वादिसूचनम्। उरसिजेति मर्मस्थितत्वादतिदुर्वहत्वव्यञ्जनम्। भारेति गतिप्रतिकूलत्वलाभः। भङ्गुरं गमनासमर्थमितियावत्। "पल्लवोऽस्त्री किसलयम्" इत्यमरः। कोमलपदं भावप्रधानम्। कोमलत्वस्य कान्तिरतिशयः। किसलयवत्कोमलत्वातिशयो यस्येति समासः। तेन कान्तिपदमधिकमित्यपास्तम्। एतेन मार्गसञ्चारानर्हत्वध्वनिः। यदि निशासु रात्रिषु। अनेन निम्नोन्नतकण्टकाद्यनवलोकनं व्यङ्ग्यम्। मनोरथरूपो

मुखं यस्याः एवंभूता **असि** भवसि अतः **किमाचरामि** किं करोमि त्वदावर्जनायेति शेषः॥ अत्र भयहेतुसत्त्वेऽपि तदनुद्भवात्, उद्वेजकहेत्वभावेऽपि तत्सत्त्वात् विशेषोक्तिविभावनयोः संसृष्टिरलङ्कारः। वसन्ततिलका च छन्दः॥७६॥

प्रौढामभिसारिकामुदाहरति—**प्रौढेति**। **स्फुरदिति**। **अथ यदि मनोरथः** प्रियसङ्गमाभिलाष एव **रथः** स्यन्दनः स्मरसम्भरोपयोगीतिभावः। **न स्याच्चेत्** तदा **स्फुरतोः** उल्लसतोः **उरसिजयोः** कुचयोः **भारेण** गौरवेण **भङ्गुराणि** अवनतानि **अङ्गान्यवयवानि** यस्याः एवं भूता नायिका **किसलयस्य** पल्लवस्येव **कोमला** मृद्वी **कान्तिः** शोभा यस्य तेन **पदेन** चरणेन **निशासु** तमोवहुलास्वित्यर्थः। **कथं**

**परकीयाभिसारिका यथा--**

**रभसादभिसर्तुमुद्यतानां वनितानां सखि वारिदो विवस्वान्।**
**रजनी दिवसोऽन्धकारमर्चिर्विपिनं वेश्म विमार्ग एव मार्गः॥७८॥**

---

रथो गमनसाधनं न स्यात्। अथेति वर्हीत्यर्थे। गन्तुं कथं सहेत क्षमा स्यात्। न कथमपि। मनोरथबलादेव गन्तुं पारयतीत्यर्थः। सख्यादेः सख्यादिकं प्रतीयमुक्तिः। तेन कथयेत्युपपन्नम्।

केचित्तु "मद्वचनादिनैवेयमत्रागता न तु स्वाभिलाषेणेति वदन्तं नायकं प्रति सख्या उक्तिः" इत्याहुस्तदनुपपन्नम्। वैरस्य पर्यवसायिशङ्कानौचित्यात्॥७७॥

**रभसादिति**। प्रियदर्शनौत्सुक्यात्। अभिसर्तुं प्रियसमीपं गन्तुं "वनिता जनितात्यर्थानुरागायां च योषिति" इति त्रिकाण्डशेषः। वारिद इति प्रकाशविरोधित्वं मार्गपिच्छिलत्वसम्पादकत्वं च। सोऽपि विवस्वान् सूर्यः गमनानुकूलत्वात्। अन्यथा प्रकाशे जनान्तरसञ्चारभयेन गमनानुपपत्तेः। सत्यपि घने दिने किंचित् प्रकाशसत्त्वादाह-रजनीति। सैव दिवसो गमनाधिकरणत्वात्। तत्रापि शुक्ले प्रकाशसत्त्वात्। अन्धकारमिति। "अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः। अर्चिर्गमनानुगुणत्वात्। तत्सत्वेऽन्येषां चाक्षुषानुदयादभिसारिकागमनौचित्यात्। सन्निहिते तमस्यपि गमनसम्भवात्। विपिनमिति। "वेपन्ते भयेनात्र विपिनम्" इति स्वामी। वेश्मेति। भयानुपधायकत्वात्। जनराहित्येन प्रकृतानु-

केन प्रकारेण **गन्तुं सहेत** यातुं क्षमा स्यात्, इति **कथय** त्वमेव ब्रूहि। अर्थापत्तिरलङ्कारः। पुष्पिताग्रा च वृत्तम्॥७७॥

अथ परकीयामभिसारिकामुदाहर्तुमाचष्टे—**परकीयेति**। उदाहरति—**रभसादिति**। हे **सखि रभसात्** औत्सुक्यजाद्वेगात् **अभिसर्तुं** कान्तसङ्गमाय प्रस्थातुं **उद्यतानाम्** तत्पराणां **वनितानां** योषितामत्यनुरक्तानामितियावत्। **वारिदः** जलदो मेघः **विवस्वान्** सूर्यः यथा सूर्यो लोकं कर्मणि प्रेरयति तथा प्रेरक इति भावः। **रजनी** रात्रिः **दिवसो** वासरः सञ्चारबाधक इतियावत्। **अन्धकारं** तमः **अर्चिः** ज्वाला तथा **विपिनं** वनं **वेश्म** वासः **विमार्गः** कदध्वा एव **मार्गः** पन्थाः **भवति**।

**ज्योत्स्नाभिसारिका यथा—**

**चन्द्रोदये चन्दनमङ्गकेषु विहस्य विन्यस्य विनिर्गतायाः।**
**मनो निहन्तुं मदनोऽपि बाणान् करेण कौन्दान् बिभराञ्चकार॥७९॥**

---

गुणत्वात्। तत्रापि कदाचित्कैश्चिद्गमनसम्भवादाह विमार्ग एवेति। अपथमेव मार्गः। तत्रान्यगमनानुपपत्त्या निश्शङ्कमस्मत्सञ्चारयोग्यत्वात्। यदवच्छेदेन गमनमभिमतदेशप्राप्तिजनकं तस्यैव तन्मार्गपदार्थत्वादिति भावः। विरोधालङ्कारः। एतेन लुप्तोत्प्रेक्षेत्यपास्तम्॥७८॥

**चन्द्रोदय इति**। चन्द्रेत्याह्लादकत्वसूचनम्। उदयेत्युत्कण्ठातिशयव्यञ्जनम्। चन्दनमिति समानाभिहारेण ज्योत्स्नाया आत्मनोऽन्यैरनवलोकनीयत्वार्थम्। कप्रत्ययोऽङ्गानां विरहतानवसूचनार्थः। "तेन पाण्डुरत्वेऽपि चन्दनन्यासोऽत्यन्तादृश्यत्वलाभार्थः" इत्याहुः। वस्तुतः अनुकम्प्यत्वं तदर्थः। तच्च प्रियपरिरम्भादिशून्यत्वज्ञानप्रयुक्तं ग्राह्यम्। तथा च प्रियाश्लेषव्यतिरेके एषां वैयर्थ्यमेवेति ज्ञानेन तदनुकूलचन्दनसंयोगसम्पादनसङ्गतिः। किंचिन्मात्रलेपवारणाय विशब्दः। विहस्येति। प्रकाशभयाभावात् सितत्तया गोपने चानुकूलत्वादिति भावः। निर्गमने विशेषः। प्रियदर्शनेच्छाविशिष्टप्रतिबन्धकाभावसम्पत्तिपूर्वकत्वम्। मन इति। तस्यैवानु-

---

रहस्यभेदाद्बिभ्यतीनामभिसरणायोचितावसरसूचकोऽयं श्लोको नोदाहरणतया परकीयाभिसारिकां दर्शयतीति प्रतीमः। विरोधालङ्कारः। मालभारिणी च च्छन्दः॥७८॥

परकीयाभिसारिकाया एव भेदविशेषानुदाहर्तुमाचष्टे—**ज्योत्स्नेति**। ज्योत्स्नायां याभिसरति सा ज्योत्स्नाभिसारिकेत्यर्थः। उदाहरति—**चन्द्रोदय इति**। **चन्द्रस्य** सुधांशोः **उदये** प्राकट्ये सति। **अङ्गकेषु** गात्रावयवेषु **चन्दनं** मलयजद्रवं **विन्यस्य** विलिप्येत्यर्थः। अथ च **विहस्य** विशेषेण स्मित्वा **विनिर्गतायाः** अभिसारप्रवृत्ताया नायिकाया **मनः** मानसं **निहन्तुं** वेद्धुमितिभावः **मदनः** कामः

**कृष्णाभिसारिका यथा—**

**नाम्बुजैर्न कमलैरुपमेयं स्वैरिणीजनविलोचनयुग्मम्।**
**नोदये दिनकरस्य न चेन्दोः केवले तमसि यस्य विकासः ॥८०॥**

---

रोधेनेन्द्रियान्तराणां प्रवृत्तेः। पूर्वनिहितत्वेऽप्युत्तरकाले तदभावे वैरस्यापत्त्या निहन्तुमिति। मदनः कामोऽपि करेण हस्तेन कुन्दमयान् वाणान् दधार। उक्तरीत्या वेधस्यावश्यकत्वे विजातीयवर्णवाणवेधे च ज्योत्स्नाभिसारसामग्रीविघटनापत्तौ कुन्दवाणैरेव वेधो युक्त इतिधियेतिभावः।

"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः"। इति वृत्तरत्नाकरः ॥७९॥

**नाम्बुजैरिति**। अम्बुजपदं सूर्यविकासिपरम्। कमलपदं चन्द्रविकासिपरम्। "तुल्यार्थैरतुलोपमाभ्याम्" इति तृतीया। प्रतियोगित्वं तदर्थः। सादृश्यमुपपूर्वकमाधात्वर्थः। अनुयोगित्वं यत्प्रत्ययार्थः। तदुभयप्रतियोगिकसादृश्यानाश्रय इति फलितार्थः। स्वैरिणीजनः कुलटासमुदायः, तस्य विलोचनयुग्मं समुदायघटकप्रत्येकावयवाभिप्रायेण युग्मत्वोक्तिः। दिनकरस्य रवेरुदये यस्य विकासो नास्ति, इन्दोरप्युदये नास्ति, किन्तु केवले तदुभयविरहकालीने, अनेन घनतमत्वं व्यङ्ग्यम्। तमस्यन्धकारे यस्य विकासो ग्रहणशक्तिर्भवति। तथा च सूर्योदये विकासित्वाभावात्तदुभयोदयविकासि पूर्वोक्तद्वयसादृश्याभाव इत्यर्थः।

---

अपि कौन्दान् कुन्दपुष्परूपान् **वाणान्** इषून् **करेण** हस्तेन **विभराम्बभूव** धारयामास। शुभ्रायां ज्योत्स्नायां शुभ्रं पाटीरद्रवं विलिप्याभिसृता कामेनाप्युद्दीपकशुभ्रवर्णैः कुन्दपुष्पैरुपकृतेत्यर्थः। अत्र प्रतीयमानोत्प्रेक्षालङ्कारः। उपजातिश्छन्दः ॥७९॥

अथान्धकारेऽभिसर्तुशीलामुदाहर्तुमुपक्रमते—**कृष्णेति**। **कृष्णे** तमस्यभिसरतीति सा। उदाहरति—**नाम्बुजैरिति**। **स्वैरिणीजनस्य** अभिसारिकावृन्दस्य **विलोचनयुग्मं** नयनद्वितयं **अम्बुजैः** कमलैः सूर्योदये विकासशीलैरितिभावः। **न**

**दिवाभिसारिका यथा—**

**पल्लीनामधिपस्य पङ्कजदृशां पर्वोत्सवामन्त्रणे**
**जाते सद्मजना मिथः कृतमहोत्साहं पुरः प्रस्थिताः।**
**सव्याजं स्थितयोर्विहस्य गतयोः शुद्धान्तमत्रान्तरे**
**यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥८१॥**

---

यत्तु "नोदय इत्यादावेकेनैव नञा निर्वाहे द्वितीयोपादानं चिन्त्यम्, पूर्वार्धे तु तदभावे चकारापेक्षा स्यात्। अत्र तु चकारसत्त्वाद्" इति। तन्न। उभयोदयविकासित्वाभावस्य कमलकुमुदयोरुभयोरपि सत्त्वात्तेन तत्प्रतियोगिकसादृश्याभावसिद्ध्यभावस्तत्साधारणबोधजनकनञैक्यस्यानुचितत्वात्। प्रत्येकोदयविकासित्वाभावस्य प्रत्येकप्रतियोगिकसादृश्याभावप्रयोजकस्य कस्य निश्चयार्थं नञ्द्वयस्यैवापेक्षितत्वात् ॥८०॥

**पल्लीनामिति**। बहुनिरूपितत्वस्याधिपतित्वे लाभात्तदाज्ञाया अनुल्लङ्घ्यत्वं व्यङ्ग्यम्। अधिपस्येति कर्तरि पङ्कजदृशामिति कर्मणि षष्ठी। शब्दानामनुशासनमाचार्यस्येतिवत्। पर्व पूर्णिमादिः। तत्रोत्सवार्थमामन्त्रणे आह्वाने जाते सति। एतेनोत्सवे कौतुकादपि गमनसम्भवादाज्ञासद्भावे सर्वेषामेव गमनसौकर्यध्वनिः।

केचित्तु "पल्लीप्रधानस्याङ्गनाभिरामन्त्रणे सम्पादिते सति" इत्याहुः। तत्राधिपस्येति शेषे पङ्कजदृशामिति कर्तरि षष्ठी बोध्या।

---

**उपमेयं** नोपमानार्हं **न च कुमुदैः** कैरवैः चन्द्रोदये विकासिभिरित्यर्थः। **दिनकरस्य** सूर्यस्य **उदये** उद्गमे **तस्य** स्वैरिणीनयनयुगलस्य **विकासः** स्फुटत्वं **न** भवति **न वा इन्दोः** चन्द्रस्य उदये इति शेषः। **केवले तमसि** अन्धकार एव तस्य विकासो भवतीत्यर्थः। अन्धतमसावृतमपि पन्थानं सा सुखेन पश्यतीतिभावः। कुमुदाम्बुजयोरनुपमेयत्वे हेतूक्त्या हेत्वलङ्कारः। स्वागता च वृत्तम् ॥८०॥

**एवमेव** दिवसाभिसारिकामाह—**दिवसेति**। **पल्लीनामिति**। **पल्लीनामधिपस्य** घोषपतेरित्यर्थः। **पङ्कजदृशां** नलिनेक्षणानां योषितां **पर्वोत्सवाय** कस्मिंश्चित् पर्वणि महोत्सवं कर्तुमित्यर्थः। **आमन्त्रणे जाते** आह्वाने कृते। **सद्मजनाः**

**सामान्याभिसारिका यथा--**

**लोलच्चेलचमत्कृतिप्रविलसत्काञ्चीलताझङ्कृति-**
**न्यञ्चत्कञ्चुकबन्धबन्धुरवलद्वक्षोजकुम्भोन्नति ।**

---

सद्मजना इति । प्रकारान्तरेण दुःपरिहरत्वं व्यङ्ग्यम् । मार्गमध्यात्प्रत्यावृत्तिनिषेधाय मिथ इति । उत्सवप्रशंसया परस्य प्ररोचनामुपधायेत्यर्थः । तेन तद्दर्शनव्यतिरेकेण तदिच्छानिवृत्त्यभावात्तत्पूर्वमनागमनध्रौव्यं व्यङ्ग्यम् ।

प्रकारान्तरेण प्रभोराज्ञानुल्लङ्घनात्सव्याजमिति । तात्कालिकशिरःशूलादिव्यपदेशेनेत्यर्थः । अनायासादभिमतसिद्ध्या या विहस्येति । युगपदेव गमनलाभाय गतयोरिति । कुञ्जादिव्यावर्तनाय शुद्धान्तमिति । अत एवाभिसारान्तरवैलक्षण्यात् । कोऽपीति । प्रेमसाम्यसूचनाय यूनोरिति । दर्शनमात्रवारणाय **कण्ठग्रह** इति । शङ्काविरहत्वसूचनाय एष इति । अत एव विजयत इति । अन्याभिसारलभ्यपरिरम्भापेक्षयोत्कर्षः । तत्र पूर्वोत्तरकाले शङ्काया एव सद्भावात् ।

केचित्तु "उभयोर्युगपद्गमनेऽभिसारत्वाभावान्नेदं प्रकृतोपयुक्तमुदाहरणम्" इत्याहुः । तन्न । बाधकाभावात् । कुञ्जादावुभाभ्यां गमनेऽपि तद्व्यवहारस्य सकलाभियुक्तसिद्धत्वात् । अन्योन्यपरोक्षत्वविवक्षायां प्रयोजनाभावात् ॥८१॥

**लोलदिति ।** "चेलं वसनमंशुकम्" इत्यमरः । चोलेति पाठेऽपि निचोलमेव ग्राह्यम् । भीमातिवत्पदैकदेशप्रयोगात् । कूर्पासकपरत्वे

गृहवासिनः **कृतः** प्रदर्शितः **महानुत्साहो**ऽत्यध्यवसायो यस्मिंस्तत् **पुरः** अग्रे **प्रस्थिता** प्रयाताः । पल्लीपतिगृहमितिशेषः । **अत्रान्तरे** एतन्मध्ये **सव्याजं** मृषाकारणमपदिश्येतियावत् **स्थितयोः** स्वगृह एव तिष्ठतोः **विहस्य** स्मित्वा **शुद्धान्तं** रहःस्थानमितियावत् । **गतयोः** प्राप्तयोः **स्विन्नौ** मिथःसंस्पर्शात्सात्त्विकभावोदये स्वेदपूर्णौ **कपोलौ** ययोस्तौ तयोः । **यूनोः** युवतिश्च युवा च तयोः । **कोऽपि** विलक्षणः **एष** विद्यमानः **कण्ठग्रहः** परस्पराश्लेषः **विजयते** सर्वोत्कर्षेण वर्तते । काव्यलिङ्गालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥८१॥

**स्फूर्जद्दीधिति विस्फुरद्गति चलच्चामीकरावङ्कृति**
**क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना ॥८२॥**

---

'न्यञ्चत्कञ्चुकबन्धबन्धुरवलद्वक्षोजकुम्भोन्नति' इति द्वितीय-चरणार्थेन पौनरुक्त्यापत्तेः। लोलत्वं गतिविशेषवशाच्चेले विशेषणम्। "तस्य तेन वा चमत्कृतिर्यत्र" इति केचित्। वस्तुतस्तु लोलन्ती चेलचमत्कृतिर्यत्रेति षष्ठीसमासोत्तरपदो बहुव्रीहिः।

लोलत्वं विलासवशेन प्रतिक्षणं सन्निवेशविशेषसम्पादनात्। प्रविलसदिति काञ्चीविशेषणम्; तदङ्गसङ्गेन शोभोदयात्। "तत्र लतात्वारोपात् तदीयझणत्कारे भ्रमररणितानुकारित्वलाभ" इति केचित्। वस्तुतः पूर्ववत्प्रविलसन्ती काञ्चीलताझङ्कृतिर्यत्रेति समासः। प्रकर्षश्च परकीयादावभिसारसमये तदभावात्तदीय-काञ्चीसम्बन्धिकालान्तरझणत्कारापेक्षया ग्राह्यः। अत एव लतापदेन रणितविशिष्टकाञ्च्या अविच्छेदः सूच्यते। परकीयादौ काञ्च्यास्तद्रणितस्य चावश्यं परिहार्यत्वात्।

"उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला।
यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता॥"

इत्यादि दर्शनात्। न्यञ्चद्बन्धनार्थं दृढमाकृष्यमाणं यत्कञ्चुकं तेन स्तनयोर्दृढत्वसूचनम्। अन्यथा तयोरपि न्यग्भावापत्तेः। तस्य बन्धेन बन्धुरा नम्रवदालक्ष्यमाणा। "बन्धूरबन्धुरौ ज्ञेयौ नम्रसुन्दर-योस्त्रिषु" इति रन्तिदेवः। शुष्कवस्त्रेण स्तनाच्छादने तस्याग्राव-

---

सामान्यवनितामभिसारिकात्वेनोदाहरति—**सामान्येति**। **लोलदिति**। **लोलन्ती** तरलायमाना **चेलस्यां**शुकस्य **चमत्कृतिः** चाकचिक्यं यस्मिंस्तत्। **प्रविलसन्त्यः** नितरां शोभमानाः **काञ्चीलतायाः** क्षुद्रघण्टिकाया इतियावत्। **झङ्कृतिः** झणत्कारो यस्मिंस्तत्। **न्यञ्चतः** बन्धनायाकृष्यमाणस्य **कञ्चुकस्य** चोलिकायाः **बन्धेन** बन्धनेन ग्रन्थिनेतियावत्। **बन्धुरा** नम्रीभूता अत एव **वलन्ती** स्फुरन्ती **वक्षोजकुम्भयोः** स्तनकलशयोः **उन्नतिः** पीनता यस्मिंस्तत्। **स्फूर्जन्ती** परितोऽनुसरन्ती **दीधितिः** कान्तिर्यस्मिन् **विस्फुरन्ती** विलसन्तीति यावत् **गतिर्गमनं** यत्र। **चलन्त्यः** चञ्चलाः **चामीकराणां** हेम्नाम् "हेम हाटकम्।...चामीकरं जातरूपं"

**मुग्धाया लज्जाप्राधान्येन, मध्याया लज्जामदनप्राधान्येन, प्रौढाया प्राकाश्यप्राधान्येन, धीराया धैर्यप्राधान्येन, अधीराया अधैर्यप्राधान्येन, धीराधीराया धैर्याधैर्यप्राधान्येन,**

---

च्छिन्नोच्चतायास्तथा प्रत्यक्षाभावात् । अत एव वलन्ती तिर्यगवच्छिन्नपीनत्वेन सहैव दृश्यमाना वक्षोजकुम्भयोरुन्नतिर्यत्र।

"अनुदात्तेत्त्वलक्षणमात्मनेपदं चक्षिङो ङित्करणाज्ज्ञापकादनित्यम्। तेन लज्जालोलवलन्तीत्यादिशतृप्रत्ययसिद्धिः" इति वामनः । एतेन कञ्चुकग्रन्थिना वलन्ती तिर्यक्प्रसारिणी स्तनोन्नतिर्यत्रेत्यपास्तम्।

स्फूर्जन्त्योऽत्यन्तं प्रकाशमाना दीधितयो देहाभरणप्रभा यत्र। विस्फुरद्गति शीघ्रगमनौत्सुक्यात् चलन्त्यश्चामीकरसंस्कृतयः स्वर्णाभरणानि यत्रेति सर्वं क्रियाविशेषणम्।

क्वचित्तु "प्रद्योतन्मणिकुण्डलद्युतिवलज्जाम्बूनदालङ्कृतिस्फूर्जन्मञ्जुलनूपुरध्वनिमनोराज्येन मन्दा गतिः" इति द्वितीयतृतीयचरणयोः पाठः। तत्रापि शतृप्रत्ययोपपत्तिः पूर्ववत्।

मणीति प्रकाशकत्वसूचनम् । एवं जाम्बूनदेत्यत्रापि। नूपुरेति। शब्दद्वाराप्रकाशकत्वं व्यङ्ग्यम्। तथा च शङ्काविरहान्नाभिसारसमये स्वानुमापकहेतुपरिहारयत्न इति भावः। "नानाभरणचित्राङ्गी" इति भरतवाक्यात्। कृतिनः पुण्यवतः। तत्सम्भोगस्य विलक्षणसुखहेतुत्वात्। "सम्पत्तिमतः" इति केचित्॥८२॥

मुग्धाया इत्यादि स्पष्टम्।

इत्यमरः। चमनम् इति चामी "चमु अदने" धातोः अजादिगणे पाठादिञ् "अनाचमेः" इत्याङोऽविवक्षितत्वाद्वृद्धिः "कृदिकाराद्—" इति ङीष्। चामीं करोति "कृञो हेतुताच्छील्ये" इति टः। अलङ्कृतयो भूषणानि यत्र। कर्मणि तद्यथास्यात्तथा। **वाराङ्गना वारस्य** वृन्दस्याङ्गना स्त्री सामान्यात्वात्। गणिकेत्यर्थः। **कस्यापि कृतिनः** अतिशयितभाग्यवतः पूर्वपुण्यजुषः। **क्रीडाकुञ्जगृहं** केलिलतानिकेतनं **प्रयाति** गच्छत्यभिसरतीत्यर्थः। स्वभावोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥८२॥

**ज्येष्ठायाः स्नेहाधिक्यप्राधान्येन, कनिष्ठायाः स्नेहन्यूनत्वप्राधान्येन, परोढायाः संगुप्तिप्राधान्येन, मुग्धाया इव कन्यकायाश्च, सामान्यवनिताया धनप्राप्तिप्राधान्येनाष्टविधनायिकावर्णनमिति विशेषः ॥**

**प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं**
**धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरा ।**
**यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिताः**
**गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमुत्सृज्यते ॥८३॥**

---

अष्टभ्योऽतिरिक्तां नायिकां व्यवस्थापयितुमाह—**प्रस्थानमिति**। अमरस्य श्लोकः, तद्विवरणानुसारेणास्यार्थसङ्क्षेपो यथा—वलयप्रस्थानेन कार्श्यं व्यङ्ग्यम् । प्रियस्य सखायः प्रियसखाः। तत्स्थितौ स्थायित्वात्तत्प्रवासे चानवस्थायित्वात् ।

पूर्वं प्रदर्शितान् नायिकाभेदान् सहेतुनिर्देशमनूद्दिशन्नुपसंहरति—**मुग्धाया** इत्यादि। प्रथमं मुग्धा-मध्या-प्रगल्भेति, मुग्धां विहाय मध्याप्रगल्भयोः प्रत्येकं धीरा-अधीरा-धीराधीरेति, तासामपि ज्येष्ठा-कनिष्ठेति द्विविधतया त्रयोदशविधा स्वीया, परोढा-कन्यकेति द्विविधा परकीया, एका च सामान्येति षोडशभेदानां प्रत्येकं प्रोषितभर्तृकेत्याद्यष्टावस्था यत्पूर्वं प्रदर्शितास्तत्र **मुग्धाया** यद्वर्णनं **तल्लज्जाप्राधान्येन** मुग्धायां लज्जाभावस्य प्राधान्यं भवतीतिभावः। सर्वत्र हेतौ तृतीया। **मध्याया लज्जा च मदनं च** तदुभयोः **प्राधान्येन। प्रौढ़ायाः प्राकाश्यस्य** प्रगल्भतायाः प्राधान्येन। धीरायां धैर्यस्याधीरायामधैर्यस्य धीराधीरायामुभयोरपि प्राधान्यं वर्ण्यत इति भावः। एवमेव **स्नेहस्य** प्रेम्ण **आधिक्यम**तिरेकः तत्प्राधान्येन ज्येष्ठोच्यते स्नेहस्य न्यूनत्वं यत्र प्राधान्येन प्रदर्श्यते सा कनिष्ठा भवतीत्यर्थः। परेण ऊढा **परोढा** परपरिणीतेत्यर्थः। तस्यां **सङ्गुप्तिः** रहस्यगोपनं तत्प्राधान्येनेत्यर्थः। मुग्धाकन्ययोः समानत्वं ब्रवीति—**मुग्धाया इवेति**। लज्जाप्राधान्येनेति भावः। सामान्यवनिताया धनप्राप्तेरेव प्रधानत्वं वर्ण्यत इत्यर्थः; एवं पूर्वोक्तषोडशविधानां प्रोषितभर्तृकाद्यष्टविधावस्थावर्णनं भवतीतिभावः॥

"नन्वेवमस्रैरित्यत्र तदनन्वयः । सति प्रिये तेषामभावादसति च सद्भावात्। सत्यां वलयमात्रस्य तद्विशेषणम्, अत एव धृतिचित्तयोर्न तदन्वयः" इति केचित्। अन्ये तु "कृतमित्यनेन पूर्ववाक्यसमाप्त्या प्रियसखैरित्याहत्यैवाश्रुविशेषणम्। विभक्त्यादिविपरिणामेन धृत्यादावपि तदन्वयाच्च । अतः प्रिये सत्यश्रुणोऽप्रवृत्तिलक्षणमनवस्थानम्, असति तु प्रवृत्तिलक्षणं तद्" इत्याहुः।

अजस्रपदात्प्रथमं कान्तमुखावलोकनेच्छयाश्रुहरणं पुनरग्रे तददर्शनज्ञानजनितमन्युना तत्प्रवृत्तिरिति व्यङ्ग्यम् । "अमङ्गलभयमन्युभाराभ्यां तदुभयम्" इत्यन्ये। धृतिः सन्तोषः। चित्तं मनो ज्ञानं वा। अधुनापि गमनसंशयान्निर्लज्जत्वं मनसो व्यङ्ग्यम्। अत एव गन्तुं व्यवसितं न तु गतमित्युक्तम्। यातुमित्यादिनाऽनुरागमान्द्यकाठिन्यप्रतिपादनद्वारा 'एवमप्यस्मै स्पृहयामीति' विधेरसदृशसमागमकारित्वरूपोऽपकर्षो व्यज्यते।

"समं परस्परैककालमिति" केचित्। "प्रियेण सहैककालम्" इत्यन्ये। गन्तव्ये इत्यावश्यके तव्यप्रत्ययः। एतैः सहैव गम्यताम् इत्यर्थः । केचित्तु "इदं प्रियगमनोत्तरं जीवितोपालम्भपरतयाऽपि सम्भवतीति न प्रकृतोदाहरणम्" इत्याहुः।

अथावस्थाविशेषेण प्रोष्यत्पतिकाभिधं नवमं भेदं निरूपयन्नाह—**प्रस्थानमिति**। हे **जीवित** ! ममेतिशेषः। **प्रियतमे** दयिते **यातुं** गन्तुं देशान्तरमिति शेषः। **निश्चितचेतसि** कृतनिर्णय इति भावः। **वलयैः** कङ्कणैः **प्रस्थानं कृतं** यात्रा कृता। प्रियप्रवासजन्यविरहकार्श्येन तैः कराद् भ्रष्टमितिभावः। **प्रियसखैः** प्रियाश्च ते सखायश्च तैरतिप्रियैरितिभावः। **अस्रैः** अश्रुभिः **अजस्रं** निरन्तरं **गतम्** पतितमितिभावः। **धृत्या** धैर्येण **क्षणं** पलमात्रमपीतियावत् **न आसितम्** नैव स्थितम्, सापि तदानीमेव गतेत्यर्थः। **चित्तेन** मनसा **पुरा** दयितगमनात्पूर्वमेव **गन्तुं** यातुं **व्यवसितं** निश्चितम्। एवं **सर्वे** वलयादयस्ते **सुहृदः समं** सहैव **प्रस्थिताः** गता इति यावत्। अतस्त्वयापि **गन्तव्ये** सति प्रस्थाननिश्चये कृते सति **प्रियाणामिष्टानां सुहृदां** मित्राणां **सार्थः** सङ्घातः "सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके" इति मेदिनी। **किमु** कथं **त्यज्यते** निरस्यते ? शीघ्रमेवैभिः सह गम्यतामिति भावः। समुच्चयालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥८३॥

**इत्यादि प्राचीनग्रन्थलिखनादग्रिमक्षणे देशान्तरगमननिश्चिते प्रेयसि प्रोष्यत्पतिका कापि नवमी नायिका भवितुमर्हति। तथा हि तस्याः प्रोषितपतिकाविप्रलब्धोत्कासु नान्तर्भावः भर्तुः सन्निधिवर्तित्वात् । नापि नवमी नायिका भवितुमर्हति,**

---

यत्तु "यातुं निश्चितचेतसि न तु गते इत्यर्थस्तदसङ्गतम्, इति तन्न । वलयादिप्रस्थानपूर्वकालीननिश्चयाभिप्रायेणापि तदुपपत्तेः।

स्यादेतत्। प्रोष्यदित्यसाधु। प्रवत्स्यत्पतिकेत्यस्यैव साधुत्वात्। लृडादेशे शतृप्रत्यये संप्रसारणनिमित्ताभावात्।" ।

सत्यम् । घञर्थे कविधानमिति प्रपूर्वाद्वसेर्भावे कप्रत्ययः। कित्वात्सम्प्रसारणम्। 'शासिवसिघसीनां च' इति षत्वम्। प्रोषः प्रवास इतियावत्। तत्र साधुः प्रोष्यः। यत्प्रत्ययः। साधुत्वं च निश्चयेन तत्कर्तृत्वरूपम्। स इवाचरन् प्रोष्यन् । आचारक्विबन्ताच्छतृप्रत्ययः। तदुक्तं महाभाष्ये--"अपर आह सर्वप्रातिपदिकेभ्यः आचारे क्विब्वा वक्तव्यः" इति । भाविप्रवासेच्छानुमापकलिङ्गत्ववानित्याचारार्थः। तादृशः पतिर्यस्या इति व्याख्येयम्।

अष्टस्वेवास्याः क्वचिदन्तर्भावः कुतो न स्यादत आह-- तथाहीति। प्रोष्यत्पतिकाया इति विभाजकोपाधित्वेनोभयाननुमतत्वेऽपि प्रोष्यत्पतिकात्वस्य धर्मस्योभयसिद्धत्वान्न पक्षतावच्छेदकाप्रसिद्धिः। त्रितयानन्तर्भावे हेतुमाह--भर्तुरिति। न च विप्रलब्धाया भर्ता सन्निधिवृत्तिरेवेति वाच्यम्, तद्दशापूर्वकाले तद्विरहात्। तथा च--इयमस्यामवस्थायां नोक्तत्रितयान्तर्भूता। एतत्पूर्वसमयावच्छेदेन सन्निधिवृत्तिभर्तृकत्वात्। स्वाधीनपतिकावत्। सर्वत्रान्तर्भावपदस्य पृथगुपादानमनुषङ्गक्लेशपरिहारार्थम्। ।

वक्तव्यशेषमाह--**इत्यादीति**। **इत्यादि** एवंप्रकारकोदाहरणानां **प्राचीनग्रन्थलिखनात्** प्राचीनकवीनां ग्रन्थेषूपलब्धेः **अग्रिमक्षणे** भाविनि काले **देशान्तरगमननिश्चिते** देशान्तरगमनं केनाप्यावश्यककारणेनेतिभावः, निश्चितं येनैवंभूते **प्रेयसि** दयिते सति **प्रोष्यत्पतिकाऽपि** तदाख्याऽपि **नवमी** नवमसङ्ख्यापूरणी

भर्तुः सन्निधिवर्तित्वात्। नापि कलहान्तरितायामन्तर्भावः, कलहाभावादनवमानितपतित्वाच्च। न खण्डितायामन्तर्भावः, प्रियस्यान्योपभोगचिह्नितस्यागमनाभावात्, प्रियायाः कोपसन्दर्शनान्तर्भावादर्शनात् काकुवचनकातरप्रेक्षणादि-पक्षपातदर्शनाच्च। न च वासकसज्जायामन्तर्भावः। वारनियमाभावात्, सज्जीकरणभावनिर्वेददर्शनाच्च। न

---

ननु कलहाभावमात्रेण न तदनन्तर्भावसिद्धिः, कलहपदस्य तत्रोपेक्षोपलक्षणत्वात्। अन्यथा मुग्धायां कलहान्तरितायामव्याप्तेरत आह—अनवमानितेति।

ननु इयं न खण्डिता, अन्यसम्भोगचिह्नितप्रियदर्शनरहितत्वा-दित्यत्र तादृशदर्शनोत्तरं पराङ्मुखत्वादिदशायामपि खण्डितेति-व्यवहारात्। खण्डिताभेदरूपसाध्याभाववति हेतुसत्त्वाद्व्यभिचार इत्यत आह—प्रियायाः कोपेति। तथा च प्रियकर्तृकान्यसम्भोगानु-मितिजन्यकोपवत्त्वस्य लक्षणत्वम्, प्रकृते च तदभावान्न खण्डिता-न्तर्भाव इति भावः। कोपाभावानुमापकमाह—काकुवचनेति। खण्डितायास्तु तत्प्रत्याख्यानतद्वैमुख्यादिरेव भवतीत्यर्थः।

स्यादेतत्। प्रियप्रवासज्ञानजन्यदुःखोत्तरकालीनप्रियसङ्गमा-भावनिश्चयाभाववत्त्वमेव वासकसज्जालक्षणम्। प्रियसङ्गमनिश्च-यवत्त्वोक्तौ असम्भवः स्यात्, भाविनिश्चयानुत्पत्तेरतस्तदभाव-निश्चयाभाव उक्तः। कतिपयसमयान्तर्भावेन प्रोषितपतिकायां तदभावनिश्चयसत्त्वाद्व्यभिचार इत्यतो निश्चयाभावनिवेशः।

उत्कादिवारणाय प्रियप्रवासेत्यादि कालीनेत्यन्तं निश्चय-विशेषणम्। तथा च प्रकृतायास्तत्रैवान्तर्भावः। प्रियप्रवासज्ञान-जन्यदुःखसत्त्वात्। एतदवस्थालोचनादिना तदगमनस्यापि सम्भावि तत्वेन प्रियसङ्गमाभावनिश्चयासत्त्वाच्चेत्याशङ्क्याह—न वासकेति। हेतुमाह—वारेति। वारनियमो दिनविशेषावच्छेदेन प्रियसङ्गम-निश्चयः। स च भ्रमः प्रमा वेत्यत्रनाग्रहः। भवति च तस्यां प्रियसमा-

च स्वाधीनपतिकायामन्तर्भावः। अग्रिमक्षण एव सङ्ग-विच्छेददर्शनात्। नहि स्वाधीनपतिकायाः कदाचिदपि सङ्ग-विच्छेद इति सम्प्रदायः। व्रजन्नपि पतिः स्वाधीनपतिकया निरुध्यते। अन्यथा भर्तरि स्वाधीनत्वमेव भज्येत। नेह तथा सर्वथा भर्तुर्विदेशगमनात्। किंचिन्नि-र्वेदाश्रुपातनिश्वासवनविहारादिमदनमहोत्सवादिव्यतिरेकद-र्शनाच्च। नाप्यभिसारिकायामन्तर्भावः। अभिसारो-त्सवाभावात् अन्तस्तापदर्शनाच्चेति युक्तमुत्पश्यामः॥

---

गमबोधकप्रामाण्यनिश्चयेन तत्सङ्गमनिश्चयः। शास्त्रकारव्यवहारा-नुसारादेव लक्षणव्यवस्थासिद्धेः। अन्यस्या अपि रागोत्कटचे प्रियसङ्गमनिश्चयोऽस्त्येवेत्यत आह—सज्जीकरणाभावेति। सम्भोग-सामग्रीघटनाभावान्निर्वेददर्शनाच्चेत्यर्थः।

अयं भावः—अस्यामप्रामाण्यज्ञानानास्कन्दित एव प्रियसङ्गम-निश्चयः। तदभावनिश्चयस्यैवोत्कटत्वात्। अन्यथा प्रियसङ्गमनिश्चय-जन्यरतिसामग्रीसङ्घटनप्रवृत्तेहर्षविशेषस्य च प्रसङ्गात्।

स्यादेतत्। पतिर्मदधीन इति ज्ञानवत्त्वमेव स्वाधीनपतिकात्वम्। तच्च क्वचित्प्रमा क्वचिच्च भ्रम इत्यन्यदेतत्। तथा च मदुक्त्या पतिर्न गमिष्यतीत्येवंविधज्ञानवत्त्वात्। तत्रैवेयमन्तर्भविष्यतीत्यत आह—न स्वाधीनेति। अयमर्थः—स्वविरहानुकूलप्रवृत्तिरहितभर्तृ-कत्वमेव तत्। तथैवाभियुक्तव्यवहारात्। अन्यथा सर्वासामपि दशाविशेषे एतादृशज्ञानस्य सत्त्वादेकभेदपरिशेषापत्तेः। ज्ञानस्य विशेषणत्वे तु विषयान्तरसञ्चारदशायां तद्व्यवहारानुपपत्तेः। नहीत्यत्र सम्प्रदायस्य प्रतियोगित्वेनान्वयः। निःश्वासान्तस्य वन-विहारादिव्यतिरेकस्य च तद्वैधर्म्यस्य कथनम्।

ननु स्वस्याः कान्तसमानदेशत्वापादकव्यापारवत्त्वमभिसारि-कात्वम्, तदेवात्रास्तीत्याशङ्क्याह—नापीति। अभिसारोत्सवः

**लक्षणं तु यस्याः पतिरग्रिमक्षणे देशान्तरे यास्यत्येव सा प्रोष्यत्पतिका। अस्याश्चेष्टाः काकुवचनकातरप्रेक्षण-गमनविघ्नोपदर्शननिर्वेदसन्तापसम्मोहनिःश्वासबाष्पादयः॥**

---

प्रियसमीपगमनानुकूलाभरणपरिग्रहादिः। तथा च प्रियसङ्केतित-देशसंयोगानुकूलव्यापारवत्त्वमेव लक्षणम्। नचात्र तादृशगमन-मस्तीति भावः। प्रियसङ्गमाशाजन्यसुखस्याभिसारिकाधर्मस्यात्रा-भावाच्चेत्याह—अन्तस्तापेति। भाविप्रियविरहज्ञानजन्येत्यर्थः।

**यस्या इति।** लक्ष्यत्वाभिमततद्व्यक्तिपरम्। पतिः प्रिय इत्यर्थः। अग्रिमेति। अयं गमिष्यतीत्येतादृशनिश्चयानन्तरमित्यर्थः, क्षणे इति तद्योग्यस्थूलकालोपलक्षणम्। यत्समयान्तर्भावेन गमनं भावीति ज्ञानं जातं तत्समय इत्यर्थः। तेन——

**नायिका भवितुमर्हति।** प्रोष्यदितिपाठमशुद्धं मन्यमानैः कैश्चित् प्रवत्स्यत्पतिकेति पाठः स्वीकृतः किन्त्वेतत्समाहितं समञ्जसाकारैः सम्यक्।

पूर्वोक्तास्वष्टस्वेवेयं कुतो नान्तर्भवतीत्यत्राह—**तथाहीति। प्रोषितपतिका** देशान्तरगतभर्तृका, **विप्रलब्धा** सङ्केतस्थलमगत्वा भर्त्रा वञ्चिता, **उत्का** भर्तु-रनागमकारणं चिन्तयन्ती, तासु। **अन्तर्भावो न** भवितुमर्हतीति शेषः। **भर्तुः** दयितस्य **सन्निधिवर्तित्वात्** साम्प्रतं समीपस्थत्वात्। तासां तु तदवस्थासु भर्तृसान्निध्यं न भवतीतिभावः। **कलहान्तरितायामपि** पतिमवमत्य पश्चात् परितप्तायामित्यर्थः **नान्तर्भावः कलहाभावात्, अनवमानितपतित्वाच्च** नच तस्याः भर्त्रा कलहो जातो न तया सोऽवमानित इत्यर्थः। **न खण्डितायामित्यादि।** खण्डिता सोच्यते यस्याः पतिरन्यामुपभुज्य तत्संयोगचिह्नांकितस्तत्पार्श्वे समायाति। नेयं तादृशी, अथच खण्डिता पत्यै काकुवचनैः कातरप्रेक्षणादिभिश्च कोपं प्रदर्शयति नेयं तथा करोति पत्युः सन्निहितत्वात्। **न च वासकसज्जायामित्यादि,** नेयं वासक-सज्जेत्यर्थः **वारनियमाभावात्** पत्युरागमनतिथेरनिश्चयात् अग्रिमक्षण एव पत्यु-र्गमननिश्चयात् सज्जाऽभावस्य निर्विण्णतायाश्च तत्रावश्यम्भावात् इत्यर्थः। **न च स्वाधीनपतिकेत्यादि।** स्वाधीनपतिकाया न कदापि प्रियेण सङ्गविच्छेदो भवतीति प्रसिद्धिः किन्त्वस्या अग्रिमक्षण एव सङ्गविच्छेदस्यावश्यम्भावित्वात्। स्पष्ट-मन्यत्॥

**मुग्धा प्रोष्यत्पतिका यथा—**

**प्राणेश्वरे किमपि जल्पति निर्गमाय ।**
**क्षामोदरी वदनमानमयाञ्चकार ।**
**आली पुनर्निभृतमेत्य लतानिकुञ्जम्**
**उन्मत्तकोकिलकलध्वनिमाततान ॥८४॥**

---

कल्लिं विअ खरहिअओं थ वसिहइ पि पिअत सुव्वइ जणम्मि ।
तह बढ्ढं भअवइ णिसे जह से कल्लिं विअ ण होइं ॥

इत्यादौ नाव्याप्तिः ।

प्रातरेव खरहृदयः प्रवत्स्यति प्रिय इति श्रूयते जने ।
तथा वर्द्धस्व भगवति निशे यथास्य प्रातरेव न भवति ।

इत्यर्थः । देशान्तरे नायिकादेशान्यदेशे, तेन तस्याः सहैव नयनेन व्यभिचारः । यास्यत्येवावश्यं यास्यति । गमने कृतनिश्चय इति यावत् । अग्रिमसमये प्रियो गमिष्यतीत्येतादृशनिश्चयवत्त्वमिति तात्पर्यम्, तेन तदुद्गमनहेतोर्नायिकेनाज्ञानस्थलेऽपि नाव्याप्तिः ।

अत्रेदं तत्त्वम्-प्रोषितभर्तृकायामेवेयमन्तर्भवतीति तल्लक्षण एव निरूपितम् । अन्यथा प्रवत्स्यत्पतिकाया अप्यतिरेकापत्तेः ॥

**प्राणेश्वरे इति** । एतेन प्रियत्वसूचनम् । किमपीति क्रियाविशेषणम् । वाष्पोद्रेकावरुद्धकण्ठादिकं यथास्यात्तथा । निर्गमाय प्रवासं

---

प्रोष्यत्पतिकाख्या नवमी नायिकावश्यं स्वीकर्तव्येति दृढयन् तस्या लक्षणमाह—**यस्या** इति । **यस्याः** नायिकायाः **पतिः अग्रिमक्षणे** किञ्चित्कालानन्तरं **देशान्तरं** नायिकातो दूरदेशमितियावत् । **यास्यत्येव** अवश्यमेव गमिष्यतीत्यर्थः । **सा प्रोष्यत्पतिका** उच्यत इति शेषः । कान्तकर्तृकभविष्यत्प्रवासज्ञानप्रयोज्यसन्तापवत्त्वं प्रोष्यत्पतिकात्वमित्यर्थः ।

अस्याश्चेष्टा वर्णयति—**अस्या इति** । **काकुवचनं** गद्गदोक्तिर्वक्रोक्तिर्वा, **कातरप्रेक्षणं** दीनदृष्टयावलोकनम् **गमनविघ्नोपदर्शनं** केनापि कारणेनास्य गमनमवरुध्येत इतिचिन्तनं न तु गमने विघ्नोत्पादनम् । **निर्वेदः** निर्विण्णता **सन्तापः** दुःखं देहौष्ण्यं वा **सम्मोहः** मूर्च्छनम् **निःश्वासः** दीर्घोच्छ्वसनं **वाष्पादयः** अश्रुक्लिन्नत्वादय इत्यर्थः ।

मध्या प्रोष्यत्पतिका यथा—

गन्तुं प्रिये वदति निःश्वसितं न दीर्घ-
मासीन्न वा नयनयोर्जलमाविरासीत्।
आर्युर्लिपिं पठितुमेणदृशः परन्तु
भालस्थलीं किमु कचः समुपाजगाम ॥८५॥

---

कर्तुम्। जल्पति पृच्छति सति। भावलक्षणा सप्तमी। जल्पनकाले वदनमा ईषन्नमयाञ्चकार न तु पर्याप्त्या। वैमनस्यानुमानापत्तेः। न च मध्ये न कृशिमेत्यत्रोक्तरीत्या मुग्धाया उदरकार्श्यानर्हतया क्षामोदरीत्यनुपपन्नं, तत्र कृशत्वप्रत्यक्षविरहमात्रस्योक्तत्वात् किंचित्कार्श्यस्य तदापि सम्भवात्। "पीनोरुगण्डजघना" इति भरतवाक्यात्तदापि किंचिदुपचयस्य सत्त्वात्। अन्यथा प्रवासदुःखस्याप्यनुपपत्तेः। अत एव क्षामोदरीपदसार्थक्यम्। स्तनादीनां पीनस्तनीत्यादिव्यपदेशप्रयोजकोपचयविशेषरहितत्वात्। तस्यां गमनविरोधिव्यापाराभावेऽपि सख्यास्तादृशव्यापाराश्रयत्वरूपव्यतिरेकसूचनाय पुनः शब्दः। तत्प्रत्यक्षगमने तच्छब्दपरिचयः स्यादतो निभृतमिति। निकुञ्जस्य वृक्षादिभिरपि सम्भवाल्लतेत्युक्तम्। कोकिलशब्दस्य कालान्तरेऽपि सम्भवान्न वसन्तानुमापकत्वमत उन्मत्तेति। तथा च शब्दवैलक्षण्यं तात्पर्यम्। कोकिलेति स्त्रीशब्दविजातीयत्वलाभार्थम्। तेन स्त्रीविशेषसखीजन्यत्वानुमानं दूरपरास्तमिति भावः। वर्णात्मकशब्देऽपि कोकिलकूजितसाम्यवर्णनात्तेन भ्रमो न स्यादतो ध्वनिमिति। भ्रमहेतुसामान्यधर्ममाह—कलेति। एकध्वनेरश्रवणस्यापि सम्भवादाततानेति। ध्वनिमित्येकवचनं तु कोकिलशब्दभ्रमविशेष्यत्वरूपैकधर्मान्वयसूचनार्थम्। तथा च वसन्तागमबुद्ध्या प्रियो न गच्छेदिति सखीतात्पर्यम्॥८४॥

गन्तुमिति। अनेन गमनस्य भावित्वसूचनम्। प्रिय इति गमनस्य दुःखजनकत्वम्। वदतीत्यप्रामाण्यशङ्कानिरासः। अन्येनोक्तौ तस्या अपि सम्भवात्। दुःखदैर्घ्यानुकूलं निःश्वासे दीर्घत्वं नासीत्। लज्जावशादित्यर्थः। निःश्वासमात्रं तु दुर्वारत्वाज्जात-

मिति तात्पर्यम् । अन्यथा दीर्घेति विशेषणोपादानवैयर्थ्यात्। अश्रुणोऽप्यनाविर्भावोऽनेन व्याख्यातः। श्वासस्य हि स्वाभाविकतया किंचिद्वृद्धिर्दुर्लक्षा, अश्रुणस्तु आगन्तुकत्वाद्विशेष्यमात्रेणापि दुःखानुमानं स्यादितिभावः। केचित्तु "दुःखोद्रेकजनितमूर्च्छावशादश्रुणोऽप्यनुत्पत्तिः। तन्निवन्धनचेलाञ्चलविस्रंसादेवाग्रे कचस्य भालसम्वन्ध" इत्याहुः । तच्चिन्त्यम् । मध्यायां तद्वर्णनानौचित्यात्। तस्मान्मुखनमनेनोत्तरीयस्य क्रियोत्पत्त्या तेन च केशेऽपि क्रियोत्पत्तौ तत्समुदायादेकदेशस्य कचस्य पृथग्भाव इति रहस्यम्।

आयुर्लिपिं जीवनावच्छेदकसमयविशेषबोधकमक्षरविन्यासम्। पठितुं वाचयितुं। तदानीं जीवनसन्देहे तदऽग्रेऽस्ति न वेति निश्चयार्थमितिभावः । अन्यत्र तल्लिपेरप्रसिद्धत्वात्। भालेति। स्थलीति लिपियोग्यत्वसूचनार्थम्। कच इति गुरुपुत्रतादात्म्यारोपस्तद्दशादर्शनेन नायकगमनाभावे तस्या जीवनमेव न स्यादिति सञ्जीवनविद्यातादात्म्यस्य भालकचसंयोगसूचनार्थः॥८५॥

मुग्धां प्रोष्यत्पतिकामुदाहरति—**प्राणेति**। **प्राणेश्वरे** इति। **प्राणेश्वरे** जीवितेशे **निर्गमनाय** विदेशं गन्तुं **किमपि** ईषदपि **जल्पति** कथयति सति **क्षामोदरी** तनुमध्येत्यर्थः। **वदनं** मुखम् **आनमयाञ्चकार** ईषन्नम्रमकरोत्। दुःखेन लज्जया वेतिशेषः। **पुनः** अथ च **आली** तस्याः सहचरी **निभृतं** प्रच्छन्ना भूत्वेत्यर्थः। **लतानिकुञ्जं** लतामण्डपम् **एत्य** आगत्य **उन्मत्तस्य** क्षीवस्य **कोकिलस्य** पिकस्य **कलध्वनिम**व्यक्तवाचं कुहूरवमितियावत्। **आततान** व्यस्तारयत्। वसन्तागमनमसूचयदित्यर्थः। निदर्शनालङ्कारः वसन्ततिलका च वृत्तम् ॥८४॥

अथ **मध्यां** प्रोष्यत्पतिकामुदाहरति—**गन्तुमिति**। **प्रिये** दयिते **गन्तुं वदति** देशान्तरगमनविषयिणीं वार्तां कृतवतीत्यर्थः। **एणीदृशः** मृगाक्ष्याः **निःश्वसितं** उच्छ्वासः भाविविरहसूचकमितिभावः। **दीर्घम्** आयतं **न आसीत्** नाभूत्। वा अथ च **नयनयोः जलम्** अश्रु **न आविरासीत्** न प्रादुरभवत्। **परन्तु आयुर्लिपि** जीवनसूचिकां वर्णावलिं विधात्रा लिखितामिति शेषः। **पठितुं** वाचयितुं **कचः** अलकः **भालस्थलीम्** ललाटदेशं **समुपाजगाम किमु** समायात इव, सा मुमूर्च्छेति भावः। अत्र निःश्वासाश्रुणोरप्रकटनेन लज्जावत्त्वम् मूर्च्छनेन च मदनाधिक्यमिति स्पष्टं तस्या मध्यात्वम्। उत्प्रेक्षालङ्कारः वसन्ततिलका च वृत्तम्॥८५॥

**प्रौढा प्रोष्यत्पतिका यथा—**

नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वर-
स्तेनाहं विहिताञ्जलिर्यदुपते पृच्छामि सत्यं वद।
ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते
स्यादत्रैव परत्र तत्किमु विषज्वालावलीदुःसहम् ॥८६॥

---

**नायमिति**। सुभ्रुवामिति सामान्येन प्रश्नो नायकस्य स्वावस्थानुमानं मा भूत् किन्तु व्यञ्जनयैव यथा स्यादित्येतदर्थः। अन्याभिप्रायेणापि प्रश्नोपपत्त्या सहसा तस्या एव तदवस्थानवबोधात्। शाब्दानन्तरं तु जायमानस्तद्बोधो व्यञ्जनैकसाध्य इति भावः। अयं प्रसिद्धः स्वानुभवसिद्ध इति तात्पर्यम्। वियोगो विप्रलम्भस्तन्निबन्धनो ज्वरः सन्तापस्तेनान्यत आधिक्यलाभः। तदेवाह—तनुत्यागेऽपि न मुञ्चतीति। अपिशब्दस्तापान्तराणां तनुत्यागानन्तराननुवृत्तिलाभार्थः। विहिताञ्जलिरिति विप्रतिपत्तिकृतप्रश्ननिषेधार्थम्। यदुपते इति निर्वचनसामर्थ्यम्। प्रतारणनिषेधार्थं सत्यमिति। तूष्णीम्भावनिषेधाय वदेति। पटीरं चन्दनं, स्पष्टमन्यत्। बन्धुभिरित्यवश्यदेयत्वार्थम्। अत्रैवैतद्देहावच्छेदेनैव परत्र देहान्तरावच्छेदेनापि। सहसा भस्मसात्करणनिषेधाय विषेति। तेन यातना-

तामेव प्रौढामुदाहरति—**नायमिति**। हे **यदुपते**! श्रीकृष्ण **सुभ्रुवाम्** अङ्गनानाम् **अयं** मया प्रत्यक्षेणानुभूयमान इति भावः। **वियोगज्वरः** विरहसन्तापः। **तनुत्यागेऽपि** देहत्यागानन्तरमपि **न मुञ्चति** नो जहाति। जीवनकालस्य तु का कथेति भावः। **तेन** कारणेन **अहं विहिताञ्जलिः** कृतप्रणामा भूत्वेति शेषः। त्वां **पृच्छामि** त्वं च तदुत्तरं **सत्यं वद, ताम्बूलं** नागवल्लीदलं **कुसुमं** पुष्पं **पटीरं** चन्दनम् **उदकं** जलं च **बन्धुभिः** आत्मीयैर्जनैः **यद्दीयते** यद्विसृज्यते तन्निमित्तकमिति शेषः। **तत्** सर्वं ताम्बूलादि **अत्र इव** इहलोकवत् **परत्र** परलोकेऽपि **विषज्वालावलीदुःसहम्** गरलज्वालाशृङ्खलेवासह्यम् स्यात् **किमु**? कस्याश्चिद् प्रौढाया गोपिकाया प्रोष्यन्तं श्रीकृष्णमालक्ष्योक्तिरियम्। ताम्बूलादि विरहिण्यै यथा जीवने संतापकरं तथैव किं मरणेऽपीति प्रश्नेन त्वद्विरहे मरिष्यामीति सूचनम्। उत्प्रेक्षाविशेषोक्ति-लुप्तोपमालङ्काराणां सङ्करः। शार्दूलविक्रीडितं वृत्तम् ॥८६॥

परकीया प्रोष्यत्पतिका यथा—

न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरौ
त्यक्ता नीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम्।
अङ्गानां शतयातना नयनयोः कोऽपि क्रमो रौरवः
कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥८७॥

---

धिवयलाभः। ज्वाला वेगविशेषः। तथा च मिताक्षरायाम्—"धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः"। तत्रैव विषतन्त्रम्—

वेगो रोमाञ्चमाद्यो जनयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वोऽतः परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ॥
यो वेगात्पञ्चमोऽसौ नयनविवशतां कण्ठभङ्गं च हिक्कां
षष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥इति।

तथा च त्वद्गमनोत्तरं मम प्राणवियोगोऽवश्यं भावीति वस्तु व्यङ्ग्यम् ॥८६॥

**न्यस्तमिति**। पन्नगेति दृष्टभयादपि निवृत्त्यभावात्साहसातिशयसूचनम् । मूर्ध्नि पदन्यासे तद्वेष्टनं सर्पस्वभावः। तदभावोक्त्या रागवशात्ततस्त्वरिततरं गमनं व्यङ्ग्यम् । पादयुगलमिति। एकपन्नगस्य शिरसि एकस्य, पन्नगान्तरस्य शिरसि द्वितीयचरणस्य न्यास इति लभ्यते। न्यस्तमिति बुद्धिपूर्वकत्वं व्यङ्ग्यम् । एकत्वं तु जात्यपेक्ष्यम्।

न चेदं कथं प्रत्यवायजनकम्, दृष्टभयादेव निवृत्त्युपपत्तेरिति वाच्यम्; "विप्राहिक्षत्रियात्मानो नावमान्याः कथंचन" इति याज्ञवल्क्योक्त्या सर्पावमानस्य प्रत्यवायहेतुत्वात्, विप्रादिसमभिव्याहारात्।

अथ परकीयां प्रोष्यत्पतिकामुदाहर्तुमुपक्रमते **परकीयेति**। अत्र पतिपदेन कान्त एव ग्राह्यो न तु परिणेता। कन्यकायाः परिणयाभावात् परोढायाश्च परिणेत्रपेक्षया कान्त एव स्नेहाधिक्यात्। उदाहरति—**न्यस्तमिति**। **भवतो हेतोः** त्वत्कारणात् त्वत्प्राप्त्यर्थमिति यावत्। **मया पन्नगमूर्ध्नि** सर्पफणायां **पादयुगलम्**

सामान्यवनिता प्रोष्यत्पतिका यथा--

मुद्रां प्रदेहि वलयाय भवद्वियोग-
मासाद्य यास्यति बहिः सहसा यदेतत्।
इत्थं निगद्य विगलन्नयनाम्बुधारा
वाराङ्गना प्रियतमं करयोर्बभार ॥८८॥

---

गुरौ पत्यौ विषयत्वं सप्तम्यर्थः। गुरोरिति पाठेऽप्येवम्। भक्तिराराध्यत्वेन ज्ञानम्। विमुक्तौ विशेषस्तु तत्त्यागे श्रविष्ठ-साधनत्वज्ञानसत्त्वेऽपि जारानुरागौत्कटचेन प्रवृत्त्या तत्पूर्वकत्वम्। नीतिर्धर्मशास्त्रं कुलमर्यादित्यन्ये। भवत इत्यत्र "षष्ठी हेतुप्रयोगे" इति षष्ठी। त्वदर्थमिति यावत्। त्वयि प्रस्थिते प्रस्थातुं प्रवृत्ते सति। "गत्यर्थाकर्मकेति" कर्तरि क्तः। शतसंख्यावच्छिन्ना यातना नरकरुक्। "यातना तीव्रवेदना" इत्यमरः। पापजन्यतावच्छेदकतया सिद्धो दुःखवृत्तिर्जातिविशेषो नरकत्वम्। रौरवत्वादयस्तद्व्याप्या जाति-विशेषाः। इदं सर्वं युक्तमेवेति भावः।

केचित्तु "रौरवो रुरुर्मृगविशेषस्तत्सम्बन्धी क्रमः त्वन्मार्गविलो-कनावृत्तिप्रयासः। कुम्भी कलशी। स्त्रीत्वं निर्गमनाननुकूलत्वरूपा-ल्पत्वद्योतनार्थम्। "स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचयो यदि" इत्यमरः। तत्र पाकः पुटपाकः तज्जन्यः पराभवः पीडा" इति व्याचख्युः। यत्तु "दुष्कृतफलत्वबोधने साक्षादसमर्थमेतद्" इति, तन्न। दुःखस्य दुष्कृतजन्यत्वनियमात् ॥८७॥

अङ्घ्रिद्वयम् न्यस्तम् स्थापितम्। त्वदर्थं सङ्केतस्थलगमनादि सर्पोपरि पादन्या-समिव दुष्करमपि कर्म मया कृतमिति भावः। **गुरौ** पित्रादिविषये **भक्तिः** श्रद्धा **विमुक्ता** विशेषेण त्यक्ता, पित्रादयः श्वश्र्वादयो वा विशेषेणोपेक्षिता न तद्विषये किमपि चिन्तितमितिभावः। **नीतिः** धर्मशास्त्रं **त्यक्ता** उत्सृष्टा। इत्थं **किंदुष्कृतम्** पापं **नाकारि** न कृतम्? अपितु सर्वं पापं कृतमित्यर्थः। अतः **त्वयि प्रस्थिते** प्रस्थातुमुद्यते सति **अङ्गानां** हृदयादीनां **शतयातनाः** अगणितवेदना इति यावत्। **नयनयोः कोऽपि** अवर्णनीयः **रौरवः** भीषणः **क्रमः** प्रारम्भः **मनसः** चित्तस्य **च**

**अहितकारिण्यपि प्रियतमे हितकारिण्युत्तमा । अस्या उत्तमैव सकलाश्चेष्टाः । तद्यथा—**

---

**मुद्रामिति** । वलयाय वलयं कर्तुं प्रदेहीति प्रशब्दः पुनरग्राह्यत्वसूचनार्थः । ननु अङ्गुलीयकस्य वलयत्वमनुपपन्नमतो भवदिति । यस्मादेतत्प्रसिद्धं वलयं भवतो विश्लेषमासाद्य, सहसैव बहिर्यास्यति हस्ताद् गलिष्यति, इति यावत् । वलये वियोगप्राप्तिस्तत्कालीनत्वेन बोध्या । तथा च कार्श्योदयस्य भावित्वात्तदनुरूपं वलयमङ्गुलीयकमेव युक्तमिति भावः । तत्प्रवासजन्यस्वदुःखविशेषसूचनाय । विगलदित्यादि । करयोस्तदवच्छेदेनेत्यर्थः । बभार रुरोध । मुद्राया कर एव सम्भवादितिभावः । केचित्तु "वलयाय वलयपतनप्रतिबन्धार्थम्" इत्याहुः । "अङ्गुलिस्थया मुद्रया वलयप्रतिबन्धासम्भवात्तदयुक्तम्" इत्यन्ये ॥८८॥

इत्यष्टविधनायिकानिरूपणम् ।

उत्तमादिभेदानाह—**अहितेत्यादि** । यद्भरतः—

सर्वासामेव नारीणां त्रिविधा प्रकृतिः स्मृता ।
उत्तमा मध्यमा चैव तृतीया चाधमा तथा ॥
या विप्रियेऽपि तिष्ठन्तं न वदत्यप्रियं प्रिया ।
न चिरं कोपमायाति दोषान्प्रच्छादयत्यपि ॥

**कुम्भीपाकपराभवः** कुम्भ्यां कलश्यां यः पाकः पुटपाकः तस्य पराभवः क्लेशः । इति सर्वं **युक्तम्** एवेति शेषः । अत्र समुच्चयालङ्कारः, दुष्कृतसाहचर्य्यात् रौरवकुम्भीपाकनामकनरकप्रतीत्या समासोक्तिश्च । शार्दूलविक्रीडितं वृत्तम् ॥८७॥

सामान्यां प्रोष्यत्पतिकामुदाहरति—**सामान्येति** । **मुद्रामिति** । **वलयाय** कङ्कणं निर्मातुं **मुद्रां** दीनारादि द्रव्यं **प्रदेहि** मह्यमिति शेषः । **यत्** यस्मात् **एतत्** मत्करस्थं वलयं **भवद्वियोगं** त्वद्विरहम् **आसाद्य** प्राप्य त्वयि गते सतीति भावः । **सहसा** झटिति **बहिः यास्यति** करान्निर्गमिष्यति विरहजन्यकार्श्यादिति यावत् । **इत्थं निगद्य** उक्त्वा **विगलन्त्यः** नेत्राभ्यामधः पतन्त्यः **अम्बुधाराः** अश्रुप्रवाहाः यस्याः सा एवंभूता **वाराङ्गना प्रियतमं** कान्तं **करयोः** हस्तयोः **बभार** जग्राह । **वलयाय** वलयस्थाने धारयितुं मुद्रां स्वकीयमङ्गुलीयकं देहीत्यप्यर्थो व्यज्यते, "यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका" इत्यादि दर्शनात् ॥ वसन्ततिलका वृत्तम् ॥८८॥

पतिः शयनमागतः कुचविचित्रितोरस्थलः
प्रसन्नवचनामृतैरयमतर्पि वामभ्रुवा।
अर्चि च सुभगस्मितद्युतिपटीरपङ्कद्रवै-
रपूजि विलसद्विलोचनचमत्कृतैरम्बुजैः ॥८९॥

---

काम्या तु पुरुषैर्या तु कुलशोभाधनादिकैः।
कुशला कामतन्त्रेषु दक्षिणा रूपशालिनी॥
गृह्णाति कारणाद्दोषान्न त्वीर्ष्या प्रब्रवीति यत्।
कार्याकार्यविशेषज्ञा सुभगा चोत्तमा स्मृता॥
पुंसः कामयते या तु पुरुषैर्या च काम्यते।
कामोपचारकुशला प्रतिपक्षाभ्यसूयिनी॥
ईर्ष्यातुरा वा निभृता क्षणक्रोधा च गर्विता।
क्षणप्रसादना चैव सा नारी मध्यमा स्मृता॥
अस्थानकोपना या तु दुःशीला चातिमानिनी।
परुषा प्रतिकूला च दीर्घरोषाऽधमा स्मृता॥ इति।

**पतिरिति**। एतेन तदतिक्रमस्य सहनीयत्वं व्यङ्ग्यम्। देशान्तरागमने शयनसंयोगपर्यन्तं कोपनिवृत्तिरपि स्यादतः शयनमिति। स्वकीयसम्भोगचिह्नितत्ववारणाय आगत इति। शुद्धस्यागमने कोपकारणाभावात् कुचेति। किञ्चिदालिङ्गनवारणाय चित्रितेति। किञ्चिच्चित्रताया अप्रत्यक्षात् वीति। तस्याश्लेषविशेषानुमापकत्वाय उर इति। तादृशनिपीडनक्षमत्वलाभाय स्थलेति। कोपाभाववैशिष्ट्यसूचनाय प्रसन्नेति। भावविशेषबोधकत्वाय वचनेति। कोपाभावमात्रस्यौदासीन्येनापि सम्भवान्माधुर्यस्य लाभाय

अथावस्थाभेदेनाष्टविधनायिकां निरूप्य गुणभेदेन विभाजयन्नुत्तमां लक्षयति—**अहितेति। प्रियतमे** दयिते **अहितकारिणि** अप्रियं कुर्वत्यपि या **हितकारिणी** तत्प्रियमेव करोति सा **उत्तमा** नायिका भवतीत्यर्थः। अस्याश्चेष्टा वर्णयति—**अस्या इति**।। **अस्या** उत्तमाया **सकलाश्चेष्टा** सर्वं क्रियाकलापं **उत्तमैव** श्रेष्ठकोटिकमेव भवतीत्यर्थः।

हिताहितकारिणि प्रियतमे हिताहितचेष्टा मध्यमा। अस्यास्तु व्यवहारानुसारिणी चेष्टा। यथा--

कान्ते सागसि कञ्चुकस्पृशि तया साचीकृतग्रीवया
मुक्ताः कोपकषायमन्मथशरक्रूराः कटाक्षाङ्कुराः।
साकूते दरहासपेशलवचो माध्वीकधारालसा
प्रीतिः कल्पलतेव काचन महादानीकृता सुभ्रुवा॥९०॥

---

अमृतैरिति । प्रसादनानपेक्षत्वार्थे अयमिति। सख्यादिद्वारकत्व-वारणाय वामभ्रुवेति । आरोपितत्ववारणाय अतर्पीति । अन्यथा विदग्धतया नायकेन वचननिष्ठवैलक्ष्यण्येन कोपानुमाने तदसम्भवात् । एवमग्रेऽपि। कोपपूर्वकत्वनिषेधाय सुभगेति। उच्चत्ववारणाय स्मितेति । "उत्तमानां स्मितं भवेत्।" इति भरतोक्तेः। तच्चात्र हसितपरम्। "अलक्षितद्विजं धीरम्" इत्युक्त्या तत्र द्युतीत्यादेरनुपपत्तेः। द्युतिपदं बहुवचनान्तम् । द्रवैरित्यत्र तद्दर्शनात् । तेन हसितावृत्तिलाभः। लेपानुकूलत्वलाभाय पङ्केति। अतिघनत्वनिषेधाय द्रवेति। लक्ष्यात्पराङ्मुखत्ववारणाय विलसदिति । दर्शनाभावेऽन्यस्य वैयर्थ्याद्विलोचनेति । जिह्मत्वादिवारणाय चमत्कृतैरिति। पूजानुगुणलाभाय अम्बुजैरिति॥८९॥

**कान्तेति** । अनुरागविषयत्वमात्रमर्थः। पारिभाषिके सापराध-

तदुदाहरति—**पतिरिति। कुचाभ्यां** स्तनाभ्यां सपत्न्या इति शेषः। **विचित्रितं** कर्बुरितं गाढालिङ्गनवशात्तत्रस्थचन्दनेनेत्यर्थः। **उरःस्थलं** वक्षःप्रदेशो यस्य तादृशः सन् कृतापराधोऽपीतिभावः। **शयनं** तल्पम् **आगतः** सम्प्राप्तः **अयं पतिः वामभ्रुवा** वामा रुचिरा भ्रूः यस्याः सा तथा **प्रसन्नानि** प्रसादयुक्तानि **वचनान्येवामृतानि तैः अतर्पि** तृप्तः कृतः **सुभगाः** शोभनाः **स्मितद्युतय** एव **पटीरस्य** चन्दनस्य **पङ्कद्रवाः** घनरसाः तैः **अर्चि**च व्यलेपीत्यर्थः। **विलसद्भिः** शोभमानैः **विलोचनयोः** नयनयोः **चमत्कृतैः** विलासैरेव **अम्बुजैः** कमलैः **अपूजि** अर्चितः। कोपनिमित्तेऽपि नोत्तमा कुप्यतीतितात्पर्यम्। रूपकोपमासन्देहानां सङ्करालङ्कारः। पृथ्वीलता च वृत्तम्॥८९॥

त्वासम्भवात् । प्रसाधनाभाववैशिष्टचलाभाय कञ्चुकेति। न चरणेत्यर्थः। दर्शनमात्रवारणाय स्पृशीति। ग्रीवायास्तिरश्चीनत्वकरणमभिमुखागमनविशिष्टकान्तदर्शनोत्तरं बोध्यम्, न तु कटाक्षकाले। नायकेन तदनवेक्षणप्रसङ्गात्।

यद्वा नायकापराधस्य प्रमाणान्तरेण प्रत्यक्षेण वा ज्ञाते पृष्ठत आगत्य तेन कञ्चुकस्पर्शस्य कृतत्वात्। तद्दर्शनार्थं साचीकृतेति योज्यम् । सम्भोगाननुगुणत्वलाभाय कोपेति। तदतीतत्वनिषेधाय कषायेति । मन्मथविशेषणं चैतत्। तेन शराणां दुःखसम्भिन्नरतिजनकत्वाद्दुःसहत्वसूचनम्।

केचित्तु "कोपकषायाश्च ते मन्मथशरक्रूराश्चेति कर्मधारयेण द्वयमपि कटाक्षविशेषणम्" इत्याहुः। तन्न। पूर्वरीत्या नायिकाकोपस्य व्यङ्ग्यतया चमत्कारोत्कर्षात्।

अतिसाम्मुख्यनिषेधाय कटाक्षेति। तीक्ष्णत्वलाभाय अङ्कुरा इति। यद्वाङ्कुरेति प्रथमावस्थालाभात्तदुत्तरं किंचित्कालीनविप्रलम्भरूपावस्थान्तरसम्पादकत्वं व्यङ्ग्यम्। सान्त्वनमाह—साकूत इति। सप्तम्याः प्रीतेः पूर्वसमयेऽपि तद्विषयत्वं सूच्यते। कोपवचसो हर्षानाधायकतया पेशलान्तम्। हासोत्कर्षे वर्णोच्चारणविलम्वापत्त्या दरेति। "माध्वीकं मधु न द्वयोः" इत्यमरः। एकदेशमात्रावच्छिन्नमाधुर्यवारणाय धारेति। तथा अलसा तेन चिरकालावस्थायित्वं व्यङ्ग्यम्। कल्पः सङ्कल्पोऽभिलाष इति यावत्। चुम्बनपरिरम्भाद्यभिलाषविषयसम्पादकत्वात्। काचन लोकोत्तरा।

दानपदं कर्मार्थकल्युडन्ततया देयपरम्। महत्त्वं प्रदेयान्तरापेक्षया वैलक्षण्यात्। सद्य एव परमाह्लादहेतुत्वात्। तदेव वैलक्षण्यं च्विप्रत्ययार्थः। देयान्तरं हि दातृनिरूपितो यः सम्बन्धस्तन्निवृत्तिपूर्वकतत्सजातीयसम्वन्धविशिष्टं भवति। दातृस्वत्वनिवृत्तेर्गृहीतृस्वत्वोत्पत्तेश्च। प्रीतिनायकयोस्तु समवायसम्वन्धस्तस्याश्च प्रियविषयकत्वसम्पादनमेव दानम्। तत्र च नायिकासम्वन्धनिवृत्त्यभावो विजातीयसम्वन्धश्चेति स्पष्टम् । विषयाश्रयोभयनिरूप्यत्वात्तस्या इतिदिक्॥९०॥

**हितकारिण्यपि प्रियेऽहितकारिण्यधमा। एषैव निर्निमित्तकोपना चण्डीत्यभिधीयते। अस्या निष्कारणकोपत्वादधमैव चेष्टा। तद्यथा—**

**प्रस्थाने तव यः करोति कमलच्छायां मुखाम्भोरुहि**
**श्रीखण्डद्रवधारया शिशिरया मार्गं पुरः सिञ्चति।**

---

**प्रस्थाने इति।** उपवनविहाराद्यर्थयात्रायामित्यर्थः, तेनात्यन्तश्रमहेत्वभावेऽपि तत्प्रतीकारप्रवृत्त्या प्रेमाधिक्यसूचनम्। करोतीति परिजनद्वारकत्वव्यावृत्तिः। अवयवान्तरापेक्षया मुखे तापस्य दुःसह-

मध्यमां लक्षयति—**हिताहितेति।** हितकारिणि प्रिये हितचेष्टावती, अहितकारिणि चाहितचेष्टावती मध्यमेति भावः। तच्चेष्टामाह—**अस्या इति। व्यवहारं** पत्युराचरणम् **अनुसरतीति।** उदाहरति—**कान्ते** इति। **सागसि** सापराधे **कान्ते** प्रियतमे **कञ्चुकं** चोलिकां **स्पृशतीति** तस्मिन् **साचीकृता** रोषेण वक्रतां नीता **ग्रीवा** कन्धरा यया **तया सुभ्रुवा कोपेन** रोषेण **कषायाः** लोहिताश्च ते **मन्मथशराः** कामेषवः त इव **क्रूरा** दारुणा इतिभावः। एवं भूताः **कटाक्षाङ्कुराः** अपाङ्गेक्षणप्ररोहाः **मुक्ताः** निक्षिप्ताः। **साकूते** सानुनयाशये कान्ते इति भावः। **दरहासः** मन्दहसितं स्मितमितियावत्, स एव **केसरः** किञ्जल्कः यत्र तादृशं **वचः** वाक्यमेव **माध्वीकं** मधुनिर्मितं मद्यं तस्य **धारया** प्रवाहेण **अलसा** आलस्ययुक्ता **कल्पलता** सुरवल्ली **इव काचन प्रीतिः** अवर्णनीयप्रेमेत्यर्थः। **महादानीकृता** स्वर्णादिवद्दत्ता। अभूततद्भावे च्विः। महादानानि यथा कूर्मपुराणे—

कनकाश्वतिला नागो दासी-रथ-मही-गृहाः।
कन्या च कपिला धेनुर्महादानानि वै दश॥इति।

रूपकोपमासन्देहानां सङ्करालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥९०॥

अथाधमां लक्षयति—**हितेत्यादि।** या प्रियतमे हितकारिण्यपि अहितं करोति, अहितकारिणि तु का कथा साऽधमेत्यर्थः। एनामेव विशिनष्टि—**एषैवेति। एषा** अधमा **एव निर्निमित्तम्** अकारणं **कोपना** कोपकारिणी **चण्डीत्यभिधीयते** चण्डीपदेनोच्यते। 'चडि कोपे' पचाद्यच् 'वह्वादिभ्यश्च' इति ङीष्। "चण्डी कात्यायनीदेव्यां हिंस्रकोपनयोषितोः" इत्यभिधानम्। तच्चेष्टां वर्णयति—**अस्या इति। निष्कारणकोपत्वादस्याश्चेष्टा अधमा** नीचा तर्जनादिरूपैव।

**तस्मिन्प्रेयसि विद्रुमद्रुमनदीह्लरिङ्गत्तरङ्भ्रमि-**
**भ्रान्तक्लान्तसरोजपत्रसदृशा भूयो दृशा क्रुध्यसि ॥९१॥**
**विस्तरभिया प्रत्येकमेतासामुत्तममध्यमाधमभेदा नोदाहृता इति।**

---

तया मुखेति। कोमलत्वसूचनार्थम् अम्भोरुहीति । क्विबन्तस्य सप्तम्यां रूपम् । छत्रादेः साधारण्यात्कमलेति । तेनातपप्रतिबन्धः सौरभप्रत्यक्षं कदाचित्स्पर्शे शैत्यं प्रत्यक्षं चेति बहूपकारत्वं व्यङ्ग्यम्। एवं च सजातीयस्य सजातीयोपकरणत्वसम्पादनात्प्रतिष्ठाविशेष-जनकत्वसिद्धिः। शुद्धोदकवारणाय श्रीखण्डेति। सेकयोग्यत्वलाभाय द्रवेति । बहुमार्गसेचनाय धारयेति। आतपविरोधित्वस्यापि लाभाय शिशिरयेति । रजोनिरोधमात्रस्य पयोमात्रेणापि सम्भवात्। पुरोऽग्रे गन्तव्यमिति यावत्। वस्तुतोऽग्रकाल एव सिञ्चतीत्यन्वयः। त्वत्पद-न्यासात्पूर्वमेवेति यावत्। तथा च व्यापारद्वयस्य युगपत्करणादनु-रागातिशयः । विद्रुमाणां प्रवालानां द्रवो निर्यासः। तस्य नद्यां रिङ्गतां तरङ्गाणां भ्रम आवर्तः। "स्यादावर्तोऽम्भसां भ्रमः" इत्यमरः। तत्र भ्रान्तं भ्रमणवत् । अत एव क्लान्तं ग्लानं यत्सरोजपत्रं कमलदलं तेन सदृशा तुल्यया। विद्रुमेत्यन्तःकाठिन्यसूचनम् । द्रवपदं रतिसङ्गावार्थम् । नदीत्यविच्छेदार्थम् । रिङ्गदित्युत्कण्ठा-सूचनम्। तरङ्गेति कौटिल्यव्यञ्जनम्। भ्रमेति रत्यपेक्षया काठिन्यौ-त्कटयसूचनम् । भ्रान्तेति चञ्चलत्वम् । क्लान्तेति पारुष्यम् । सरोजेति सरसत्वम्। यत्रेति एकदेशसूचनादसाकल्यं च व्यङ्ग्यम्। आवृत्तिसूचनाय भूय इति । क्रोधबोधकत्वात् क्रोधं प्रत्येव दृष्टेः करणत्वमुक्तम्॥९१॥

उदाह्रियते—**प्रस्थान इति**। यः प्रियतमः **प्रस्थाने** उपवनविहारादियात्रायां **तव** नायिकाया इत्यर्थः । **मुखाम्भोरुहे** वदनाब्जे **कमलच्छायां** कमलपत्रेणातपनि-वृत्तिमिति यावत्। **करोति**। **पुरः** अग्रेऽग्रे **मार्गं** पन्थानं **शिशिरया** शीतलया **श्रीखण्डद्रवस्य** चन्दनपङ्कस्य **धारया** प्रवाहेण **सिञ्चति** आर्द्रीकरोति। **तस्मिन्**

**विश्वासविभ्रमकारिणी पार्श्वचारिणी सखी। तस्या मण्डनोपालम्भशिक्षापरिहासप्रभृतीनि कर्माणि। मण्डनं यथा—**

**स्तनकनकमहीधरोपकण्ठे**
**प्रियकरपल्लवमुल्लसत्प्रमोदम्।**
**रहसि मकरिकामिषाल्लिखन्ती**
**कमलमुखी कमलात्सखीं जघान॥९२॥**

---

नायिकानां सहायानाह—**विश्वासेति। स्तनेति।** एतेन मकरिकालेखनौचित्यम्। कनकेति गौरत्वम्। तेन रक्तपल्लवाकारकरलेखनयोग्यत्वं व्यङ्ग्यम्। महीधरेति तुङ्गत्वम्। तेन प्रियकरसम्वन्धयोग्यत्वध्वनिः। अत एवोपरिभागावच्छेदेन प्रियकरस्पर्शेऽपि पीत्वोन्नतत्वाभ्यामधोदेशावच्छिन्नसंयोगविरहात्। तदुपपत्त्यर्थम्। उपकण्ठ इति। मकरिकाः स्तनोपरि नानाकाराः पत्रवल्ल्यः। "पत्रलेखा पत्रावलिरिमे समे" इत्यमरः। तत्सम्पादनव्याजात्स्तनेऽन्येषामनौचित्यात्। उल्लसत्प्रमोदमानन्दसूचकरोमाञ्चादियुक्तम्। स्तनस्पर्शे यदवस्थो नायकहस्तस्तत्सदृशमिति यावत्। अन्यस्य लिखने कोपप्रसङ्गात् प्रियेति। मर्दनादेरपि व्यङ्ग्यत्वात्करेति। तस्य सुखावहत्वव्यञ्जनाय पल्लवमिति। समुदाये तल्लेखने अवैदग्ध्यापाताद्रहसीति। अन्यथा स्तनप्रकाशानुपपत्तेः। तत्र प्रियकरव्यापारानर्हत्वाच्च। तदभिप्रायाज्ञानादानन्दोत्पत्त्या कमलमुखीति। वस्तुतः क्रोधाभावात्कमलैरिति॥९२॥

**प्रेयसि** एवंविधे दयिते **विद्रुमद्रवनद्यां** प्रवालरससरिति **रिङ्गताम्** उच्छलतां **तरङ्गाणां** लहरीणां **भ्रमौ** आवर्ते **भ्रान्तं** इतस्ततोऽटमानम् अत एव **क्लान्तं म्लानं** यत् **सरोजपत्रं** कमलदलं **तत्सदृशा** तत्तुल्येन **दृशा** नेत्रेण **भूयः** पुनरपि **क्रुध्यसि** कोपं करोषि उपचारपरेऽपि प्रेयसि कोपवती नितरामधमासीति सखीवचनम्। यमकानुप्राससंसृष्ट उपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥९१॥

न्यूनत्वाक्षेपं निराकरोति—**विस्तरभियेति।** ग्रन्थविस्तारो माभूदिति कृत्वा **एतासां** पूर्वोक्तनायिकानां **प्रत्येकं** पृथक्पृथगिति भावः। **उत्तमादिभेदा** नोदाहृताः।

उपालम्भो यथा--

सान्द्रध्वानैर्मुखरितदिशः श्रेणयस्तोयदानां
धारासारैर्धरणिवलयं सर्वतः प्लावयन्ति।
तेन स्नेहं वहति विपुलं मत्सखी युक्तमेव
त्वं निःस्नेहो यदसि तदिदं नाथ मे विस्मयाय॥९३॥

---

**सान्द्रेति**। दूत्यदशायां नायकं प्रति सख्या उपालम्भोऽयम्। निर्जनत्ववारणाय तोयदेति। सर्वदिग्व्यापकत्वलाभाय श्रेणय इति। तथा च तद्दर्शनादेव तत्समीपगमनमुचितम्, इत्याशयः। चाक्षुषस्य कदाचिदभावेऽप्याह--दिश इत्यन्तम्। श्रवणानर्हत्ववारणाय मुखरितेति। व्यासङ्गादश्रवणवारणाय सान्द्रेति। तथा च घनगर्जितानुरोधाज्जिज्ञासाविरहेऽपि तज्ज्ञानमुचितमित्यर्थः। एवं भूमीप्लावनसमर्थजलदर्शनेनापीत्याह--धारेति। अविच्छिन्नैरासारैरित्यर्थः। "धारा सम्पात आसारः" इत्यमरः। धारापातैरितिपाठे स्पष्टम्। एकदेशावच्छिन्नत्ववारणाय सर्वत इति। सेकमात्रवारणाय प्लावयन्तीति। एतादृशसमये मत्सखी नायिका। सख्यस्योभयप्रतियोगिकत्वात्। विपुलं कालान्तरीयस्नेहापेक्षयोत्कृष्टं स्नेहं त्वद्विषयकप्रीतिं वहति। इत्येतद्युक्तमेव। उद्दीपकविशेषेण तदौचित्यात्। अथ च स्नेहस्य जलीयविशेषगुणतया जलबाहुल्ये तद्बाहुल्यस्यावर्जनीयत्वादिति तात्पर्यम्। स्पष्टमन्यत्।

अथ नायिकोपयोगिन्योः सखीदूत्योरभ्यर्हितत्वेनादौ सखीं लक्षयति--**विश्वासेति**। विश्वासश्च विश्रामश्च तौ कारयतीति **विश्वासविश्रामकारिणी** विस्रम्भनिर्वृतिसहायिका। **पार्श्वचारिणी** सहचरणशीला **सखी** भवतीतिशेषः।

तत्कार्याणि गणयति--**तस्या इति**। **मण्डनम्** अलङ्करणं नायिकायाः। **उपालम्भः** आक्षेपवचनम् **शिक्षा** उपदेशः हिताहितप्रवृत्तिनिवृत्तिनिमित्तक इतियावत्। **परिहासः** नर्मवाक्। तत्र मण्डनमुदाहरति--**स्तनेति**। **कमलमुखी** पद्मानना काचित् **रहसि** एकान्ते, **स्तनौ** कुचावेव **कनकमहीधरौ** स्वर्णशैलौ तयोः **उपकण्ठे**ऽन्तिके **मकरिकामिषात्** स्तनालङ्कारकपत्रभङ्गलेखनव्याजात् मकरिकां लिखामीति व्याजादितिभावः। **उल्लसन्** उज्जृम्भमाणः **प्रमोदः** आनन्दो यस्य तं सपुल-

शिक्षा यथा—

सानन्दमालि वनमालिविलोकनाय
निर्गच्छ कुञ्जमिति किन्तु विचारयेथाः।
झङ्कारिणो मधुलिहो दिवसे भ्रमन्ति
रात्रौ पुनश्चपलचञ्चुपुटाश्चकोराः ॥९४॥

---

केचित्तु "तोयदपङ्क्तयोऽर्थात्सखीश्रेणयः सान्द्रध्वानैरुपालम्भवचनैर्मुखरितदिशः दुःखरोदनादश्रुधाराभिर्भूतलमपि प्लावयन्ति। उपालम्भै रोदनैश्च नायिकामानं निरस्यन्तीत्यर्थः । स्नेहमेव वहतीन्यन्वयः । एवकारः कोपनिषेधार्थः । त्वं तु निःस्नेहोऽसीति मे विस्मयाय नास्ति, काकुप्राधान्यात् । अस्मदुपदेशेन तया मानत्यागेऽपि तवोपदेशकविरहात् स्नेहाभावस्यैव युक्तत्वाद्" इति व्याचख्युः ॥९३॥

**सानन्दमिति** । विलोकनगमनान्यतरक्रियाविशेषणम्। "आपादलम्बिनीं मालां वनमालां विदुर्बुधाः।" पत्रपुष्पादिगुम्फितेयमिति स्वामी। "वनमाली वलिध्वंसी" इत्यमरः । तस्येति कर्मधारयसमासः। विलोकनाय दर्शनं कर्तुं कुञ्जं निर्गच्छ। अस्माद्देशान्निर्गमनपूर्वकं गच्छेत्यर्थः । अपेक्षणीयान्तरसूचनार्थं किन्त्विवति । इति वक्ष्यमाणं विचारयेथाः विचारं कुर्याः । "णिचश्च" इत्यात्मनेपदम् । झाङ्का-

कमिति यावत्। **प्रियस्य** दयितस्य **करपल्लवं लिखन्तीं** रचयन्तीं **सखीम्** आलीं **कमलैः** लीलापद्मैरितिभावः। **जघान** ताडयामास। सासूयमवलोकयामासेति-तात्पर्यम्। रूपकोपमालङ्कारः पुष्पिताग्रा वृत्तम् ॥९२॥

उपालम्भोदाहरणमाह—**सान्द्रेति। हे नाथ!** प्रभो! **सान्द्रध्वानैः** निविडगर्जनैः **मुखरिताः** सशब्दाः कृता **दिशः** आशा याभिस्ताः **तोयदानां** मेघानां **श्रेणयः** पङ्क्तयः **धारासारैः** अविरलवर्षणैः **धरणिमण्डलं** भूवलयं **सर्वतः** अभितः **प्लावयन्ति** जलमग्नं कुर्वन्ति। **तेन** कारणेनेति शेषः। **मत्सखी** नायिकेत्यर्थः। **विपुलं** प्रचुरं **स्नेहं** गुणविशेषं प्रेमाणं च **वहति** धारयतीति **युक्तमेव** उचितमेवैतदितिभावः। किन्तु **त्वं यत् निःस्नेहः** स्नेहहीनः **असि तद् इदं** मे **विस्मयाय** कौतूहलाय वर्तते। आश्चर्यमेतदितिभावः। विशेषोक्तिरलङ्कारः। मन्दाक्रान्ता वृत्तम् ॥९३॥

परिहासो यथा——

आगारभित्तिलिखितासु निवेदयस्व
क: सप्तमो दशसु मूर्तिषु लोकभर्तुः।
इत्थं सखीजनवचः प्रतिपद्य सद्यः
सीता स्मितद्युतिभिरुत्तरयाञ्चकार॥९५॥

---

रिणः शब्दायमाना मधुलिहो भ्रमराः, दिवसे भ्रमन्ति सञ्चरन्ति। रात्रौ तु चपलाश्चञ्चुपुटा येषाम् । मल्लिकापुट इति भाष्यप्रयोगात् पुंस्त्वस्यापि सत्त्वात् । चकोरा भ्रमन्तीत्यनुषङ्गः। तथा च यथा कमलभ्रमेण भृङ्गाश्चन्द्रभ्रान्त्या च चकोरास्त्वन्मुखं न व्यर्थयन्ति तथा विदध्याः, इतिभावः। दन्तनखक्षतादि यत्कुञ्जसम्भोगे भावि तन्मार्गे उक्तभ्रान्त्या मधुपादिभिः कृतमिति त्वया पश्चादन्येभ्यो गोपनीयमिति परमतात्पर्यम्।

केचित्तु "भ्रमरशब्दैश्चकोरचञ्चूपुटनिनादैश्च त्वां यः कश्चिद् ज्ञास्यति तेन यथा तैर्न ज्ञायते तथा गन्तव्यमिति व्यङ्ग्यम् । यद्वा दिवसे दुर्जना भ्रमन्ति रात्रौ तु यामिकास्ते प्रकाशं करिष्यन्तीति ततो गोपनं व्यङ्ग्यम्" इत्याहुः। अन्ये तु "मधुलिट्-चकोरशब्दाभ्यां गानाधर-पानलोलुपतरुणप्रतीत्या तद्रूपप्रतिबन्धकसत्त्वम्" इत्याहुः॥९४॥

**आगारेति**। "विद्यादगारमागारमपगामापगामपि" इति द्विरूपकोषः। भित्तीति चित्रकर्मार्हत्वम् । लिखितासु चित्रत्वेनावतारितासु। लोक-

शिक्षामुदाहरति-**सानन्दमिति**। हे **आलि**! **वनमालिनः** श्रीकृष्णस्य **विलोकनाय** दर्शनाय **सानन्दं** निःशङ्कमित्यर्थः। **कुञ्जं** लतामण्डपं **निर्गच्छ** प्रयाहि **किन्तु** **इति** एवं **विचारयेथाः** विचिन्तयेतियावत्। तत्र **दिवसे** अहनि **झङ्कारिणः** झङ्काररवं कुर्वन्तः **मधुलिहः** द्विरेफाः **भ्रमन्ति** विचरन्ति, **पुनः** अन्यच्च **रात्रौ** निशि **चपलं** चञ्चलं **चञ्चुपुटं** सुपाटिकादलं मुखमिति यावत्, येषां ते **चकोराः** **जीवञ्जीवकाः** **भ्रमन्तीति** शेषः। मुखरा दुर्जनास्तत्रानिशं विचरन्ति न निरापदं ते गमनमित्यभिप्रायः सख्याः। दीपकमत्रालङ्कारः वसन्ततिलका च वृत्तम्॥९४॥

परिहासेन तामुदाहर्तुमुपक्रमते—**परिहास इति**। अयं च परिहासस्त्रिधा सखीकृतो नायिकाकृतो नायककृतो वा। सखीकृतमुदाहरति—**आगारेति**।

**सख्याः परिहासवत्प्रियस्यापि परिहासो यथा—**

**भ्रूसंज्ञया दिशसि तन्वि सखीं न वाग्भि-**
**रित्थं विहस्य मुरवैरिणि भाषमाणे।**
**राधा चिराय दशनव्रणदूयमान-**
**बिम्बाधरा वदनमानमयाम्बभूव॥९६॥**

---

भर्तुर्विष्णोः, दशसु मूर्तिषु। निर्द्धारणे सप्तमी। सप्तमः सप्तानां पूरणः। को वा किंसंज्ञकः। निवेदयस्व ब्रूहि तन्नामधेयमित्यर्थः। लोकभर्तृपदं तन्नामकथने लज्जानौचित्यार्थम्। उपेक्षानर्हत्वलाभाय सखीति। ऐकमत्यसूचनाय जनेति। तथा च विषयान्तरप्रश्नाभावेनोत्तरान्तरदानानुपपत्तिरिति भावः। तात्पर्यनिश्चयाय वच इति। सङ्केतादेरन्यथापि नेतुं शक्यत्वात्। श्रवणाभाववारणाय प्रतिपद्येति। सद्य इत्यस्योत्तरयाञ्चकारेत्यत्रान्वयः। सीतेति समयानुरूपप्रतिपत्तिसूचनम्। "राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि" इति पुराणोक्तेः। तद्विषयकप्रेमसूचनाय स्मितेति। विवक्षितार्थप्रत्यायकत्वात्। द्युतिभिरित्यभेदे तृतीया। उत्तरयाञ्चकार उत्तरमाचष्ट। स्मितकान्त्यभिन्नमुत्तरमाख्यातवतीत्यर्थः। "तत्करोति तदाचष्टे" इति उत्तरशब्दाण्णिच्। जिज्ञासितार्थविषयकप्रतीतिजनकत्वसाम्यादुत्तरत्वं नामानुच्चारणस्मिताभ्यामेव मम प्रियतमोऽयमितिभावः॥९५॥

प्रियपरिहासे सङ्गतिमाह—**सख्याः परिहासवदिति**। सखीकर्तृकपरिहासवदित्यर्थः। परिहासत्वेन तस्यापि स्मरणे उपेक्षानर्हत्वात् प्रसङ्गसङ्गतिरित्यर्थः। भ्रूसंज्ञया भ्रूव्यापारेण, दिशसि आज्ञापयसि।

**आगारस्य** भवनस्य **भित्तौ** कुड्ये **लिखितासु** चित्रितासु **लोकभर्तुः** नारायणस्य **दशसु** मीनाद्यवताररूपास्वित्यर्थः, **मूर्तिषु** प्रतिमासु **सप्तमः** सप्तसंख्यापूरकः **कः** अस्तीतिशेषः इति **निवेदयस्व** कथय। **इत्थम्** एवं **सखीजनवचः** सहचरीवाक्यानि **प्रतिपद्य** उपलभ्य श्रुत्वेत्यर्थः। **सीता सद्यः** सपदि **स्मितद्युतिभिः** मन्दहासच्छटाभिः न तु वाग्भिरितिभावः। **उत्तरयाञ्चकर** प्रतिवचनं विदधौ। अतिशयोक्तिरलङ्कारः। वसन्ततिलका वृत्तम् ॥९५॥

**तद्वृत्तिप्रयाया अपि परिहासो यथा--**

**दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको**
**दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं स चाङ्गे तव।**
**तस्माद्द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यता-**
**मित्थं शैलभुवा विहस्य लपितः शम्भुः शिवायास्तु वः ॥९७॥**

---

कोपवारणाय सखीमिति । तत्संवादार्हत्वलाभाय तन्वीति । भ्रूसंज्ञयेत्यत्र व्यावर्त्यमाह न वाग्भिरिति । तथा च वचोऽनुच्चारणे को हेतुरिति भावः । दशनक्षतातिरिक्तहेत्वभावसूचनाय विहस्येति । हेत्वन्त-रोपन्यासवारणाय मुरवैरिणीति । वचनस्यातीतत्ववारणाय भाषमाण इति । राधेति प्रेमातिशयसूचनम्। "चिरायेति दूयमानान्व-यीति" केचित् । "आगमनान्वयी"त्यन्ये । "चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः" इत्यमरः। नखवारणाय दशनेति । संयोग-मात्रनिषेधाय व्रणेति । सम्भोगोत्तरकालं तस्य दुःखानुभवाद् दूयमानेति। दूङ उपतापे । दिवादिरकर्मकः । कपोलादेर्वचनानुपयोगात्। विम्बा-धरेति । विम्बपदं तद्गुणयोग्यत्वार्थं स्पष्टमन्यत् ॥९६॥

**दिव्यमिति**। जलरूपं दिव्यं कथं युक्तं यतः सुरनदी तव मौलौ तिष्ठति । तथा च त्वदादृतत्वात्त्वत्पक्षमेव करिष्यतीतिभावः। केचित्तु "वारि दिव्यं कथमिति हरस्योक्तिः । त्वदभिमतं न वेति प्रश्नार्थः यत इत्यादि देव्या उक्तिरेवमग्रेऽपि" इत्याहुः। पावको वह्निरपि दिव्यं कथम्। तदिति विधेयलिङ्गग्राहित्वान्नपुंसकत्वम्। अहिः सर्पोऽपि दिव्यं कथं। चो हेतौ, स अहिस्तवाङ्गे तिष्ठति। तथा चैषां त्वत्सम्बन्धितया एतत्प्रामाण्येन तव चोरत्वाभावनिर्णयो न युक्त इति भावः। कुहकसत्त्वे भङ्गानुपपत्तेः।

ओषधीर्मन्त्रयोगांश्च मणीनथ विषापहान्।
कर्तुः शरीरसंस्थांश्च गूढोत्पन्नान् परीक्षयेत् ॥

इति पितामहोक्तेः । एवं चोरत्वं सिद्धवन्निर्णीयाह तस्मादिति। कण्ठगतस्य मोषानुपपत्त्या द्यूतेति । पणत्वेन स्थापित इत्यर्थः। चोरान्तरशङ्कावारणाय त्वयेति। जयवारणाय मुषित इति। कालव्यवधाननिषेधाय अद्येति । अल्पाभियोगवारणाय हार इति। अन्यथा जलादिदिव्यशङ्कानुपपत्तेः । "द्यूतान्वयीदमित्यपि" केचित्। चौर्यानन्तरं नष्टत्ववारणाय परित्यज्यतामिति। चौर्यशङ्काया आरोपितत्वलाभाय विहस्येति । अन्योक्तौ परिहासत्वाभावादभियोगपर्यवसानात्। शैलभुवेति । "अन्यमुखे परिवादो यः प्रियवदने स एव परिहासः" इति न्यायात्। लपित उक्तः। कर्मणि क्तः । स्वभावात् प्रियदातृत्वसूचनाय शम्भुरिति । एवंविधप्रियापरिहासोन्मीलितविलक्षणानन्दकन्दलतुन्दिलस्य सुखदानोपहितत्वस्य युक्तत्वात्। शिवायास्तु वः इत्याशीः ।।९७।।

प्रियकृतं परिहासमुदाहर्तुमुपक्रमते—**तस्या इति**। उदाहरति—**भ्रूसंज्ञयेति**। हे **तन्वि**! सुन्दरि! **सखीं** सहचरीं **भ्रूसंज्ञया** भृकुटीङ्गितेन **आदिशसि** आज्ञापयसि कस्मैचित्कार्यायेति शेषः। **वाग्भिः** वचनैः **न** नाज्ञापयसीत्यर्थः। **इत्थम्** एवं **मुरवैरिणि** श्रीकृष्णे **विहस्य** हास्यं कृत्वा **भाषमाणे** उक्तवति सति **राधा चिराय** दीर्घकालं यावत् **दशनव्रणेन** दन्तक्षतेन **दूयमानः** खिद्यमानः **अधरो** दन्तच्छदः यस्या एवंभूता सती **वदनं** मुखम् **आनमयाञ्चकार** नम्रमकरोत्। लज्जया दन्तक्षतं निह्नोतुं वेतिभावः। वसन्ततिलका छन्दः।।९६।।

प्रियकृतमिव प्रियाकृतमपि परिहासमुदाहरति—**प्रियस्येति**। **दिव्यमिति**। **वारि** जलं **कथं** केन प्रकारेण **दिव्यं** शपथोपकरणं भवतीति शेषः। **यतः** यस्माद् **सुरधुनी** गङ्गा **मौलौ** त्वन्मस्तके वर्तते। **पावकः** वह्निः **कथं दिव्यं** पूर्ववत्। **हि यतः तत्** तव **विलोचनं** तृतीयनेत्ररूपं वर्तते इतिशेषः। **अहिः** नागः **कथं दिव्यं स च तवाङ्गे** त्वद्देहे निवसतीति शेषः। त्वद्देहसम्पर्कात् पक्षपातसम्भावनया न मया जलवह्निनागानादाय गृहीतं तच्छपथग्राह्यमिति भावः। **तस्मात्** कारणात् **अद्य त्वया** हरेण **द्यूतविधौ** अक्षक्रीडायां **मुषितः चोरितः** छलेन विजित इति यावत्। **हारः** मुक्तावली **परित्यज्यताम्** दीयताम्, **इत्थम्** एवं **शैलभुवा** पार्वत्या **विहस्य** हास्यं कृत्वा **लपितः** उक्तः **शम्भुः** शिवः **वः** युष्माकं **शिवाय** कल्याणाय **अस्तु**। काव्यलिङ्गमलङ्कारः शार्दूलविक्रीडितं वृत्तम् ।।९७।।

**दूत्यव्यापारपारङ्गता दूती, तस्याः सङ्घट्टनविरहनिवेदनादीनि कर्माणि। सङ्घट्टनं यथा--**

**अञ्चति रजनिरुदञ्चति तिमिरमिदं दूति वञ्चति मनोभूः।**
**उक्तं न त्यज युक्तं विरचय रक्तं मनस्तस्मिन् ॥९८॥**

---

दूत्येति। दूतस्य कर्म दूत्यम्। तस्य व्यापारो वक्ष्यमाणः। तत्र पारङ्गमा निपुणेत्यर्थः। न चैवमात्माश्रय इति वाच्यम्; वक्ष्यमाणव्यापारवत्त्वे तात्पर्यात्। अत्र भरतः--

प्रायो वेश्या सखी दासी कुमारी कारु शिल्पिनी।
धात्री पाखण्डिका चैव दूत्यः स्त्रीक्षणिका तथा॥
मृजारूपवयोवेषमर्थयन्तं जनं तथा।
दूतं वापि हि दूतीं वा न कुर्याद्वैशिकाश्रये॥
प्रोत्साहने तु कुशलां मधुरकथां दक्षिणां च कालज्ञाम्।
लडहां संवृतमन्त्रां दूतीमेवंविधां कुर्यात्॥
तया प्रोत्साहनं कार्यं तथा रागानुकीर्तनम्।
यथोक्तकथनं चैव तथा भावाप्रदर्शनम्॥
कुलभोगधनाधिक्यं कार्यं चैव विकत्थनम्।
दूती निवेदयेत्काम्यमर्थानां चैव भाषणम्॥
न च कामप्रवृत्तायाः क्रुद्धाया वा समागमः।
नानोपायैः प्रकर्तव्यो दूत्या हि पुरुषाश्रयः॥
उत्सवे रात्रिसंचारे उद्याने ज्ञातिवेश्मनि।
धात्रीक्षये सखिगृहे तथा चैव निमन्त्रणे॥
व्याधितव्यपदेशेन शून्यागारनिवेदने।
कार्यः समागमो नृणामेषु प्रथमसङ्गमे॥

एतेन सङ्घटनं व्याख्यातम्। विरहनिवेदनमपि भरतेनोक्तम्--

प्रदह्यमानः कामार्तो बहुध्यानसमन्वितः।
प्रेषयेत् कामदूतीं तु स्वावस्थादर्शनं प्रति॥
सन्देशेनैव दूत्यास्तु प्रदद्यान्मदनाश्रयम्।
तस्येयं संव्यवस्थेति कथयेद्विनयेन सा॥

अथावेदितभावार्थो रत्युपायं विचिन्तयेत्।
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिने ॥

इदं चोपलक्षणं नायिकयापि दूतीप्रेषणोपपत्तेः। साहित्यदर्पणे—

दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी।
बाला प्रव्रजिता कारुः शिल्पिन्याद्याः स्वयं तथा ॥

कारुः रजकीप्रभृतिः। शिल्पिनी चित्रकारस्त्री। आदिना ताम्बूलिका गान्धिकप्रभृतयः।

कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः।
माधुर्यं नामविज्ञानं वाग्मिता चेति तद्गुणाः ॥
एता अपि यथौचित्यादुत्तमाधममध्यमाः।

स्वयंदूत्यां दूतीपदस्य गौणत्वान्मुनिना तन्नोक्तम्। **अञ्चतीति**। दिननिषेधाय रजनिरित्यन्तम्। अञ्चति समागच्छति, यद्वा गच्छति। वर्तमानसामीप्ये लट्। शुक्लपक्षवारणाय तिमिरमिति। तेन गमनोचितः समय इतिभावः। अन्यथानुतापो भविष्यतीत्याह—चञ्चतीति। मनोभूः कामश्चञ्चति वलगति। तदुद्रेकहेतुसमयवशादितिभावः। स्वप्रतिज्ञापि नोल्लङ्घ्येत्याह-उक्तमिति। ननु भ्रमात्प्रतिज्ञातं त्याज्यमेवेत्यतो युक्तमिति। इष्टसाधनत्वांशप्रमाजन्यमिति भावः। बलवदनिष्टाननुबन्धित्वज्ञानं तु रागौत्कट्यादप्रयोजकमित्याह-रक्तमिति। रागयुक्तं मनस्तस्मिन्नायके विरचय। तत्संयोगानुकूलव्यापारं विधेहि

अथ दूतीं निरूपयंल्लक्षयति—**दूत्यमिति**। दूतस्य कृत्यमिति 'दूतवणिग्भ्यां च' इति वार्तिकेन यत्। **दूत्यव्यापारे** यूनोः संयोजनादिकर्मसु **पारङ्गमा** प्रवीणेतिभावः। तत्कृत्यान्याह—**तस्या इति**। **सङ्घट्टनं** मिथोऽनुरागमुत्पाद्य द्वयोर्मेलनम्। **विरहनिवेदनादीनि** एकस्य विरहावस्थाया अपरं प्रति सूचनादि तस्याः **कर्माणि** भवन्तीति भावः। सङ्घट्टनमुदाहरति—**अञ्चतीति**। अयि ! **रजनिः** रात्रिः **अञ्चति** गच्छति, **इदं** प्रत्यक्षं **तिमिरम्** तमः **उदञ्चति** वर्धत इति भावः। **मनोभूः** कामः **चञ्चति** वलगति, तस्मात् **उक्तं** स्वयं प्रतिश्रुतं मत्कथितं वा **न त्यज** मा जहीहि **तस्मिन्** दयिते **मनः** चित्तं **रक्तम्** आसक्तं **विरचय** विधेहि, इत्येव **युक्तं** समुचितमिति यावत्। समुच्चयालङ्कारः उपगीतिश्च वृत्तम् ॥९८॥

विरहनिवेदनं यथा--

चक्रे चन्द्रमुखी प्रदीपकलिका धात्रा धरामण्डले
तस्या दैववशाद्दशापि चरमा प्रायः समुन्मीलति ।।
तद्ब्रूमः शिरसा नतेन सहसा श्रीकृष्ण निक्षिप्यताम्
स्नेहस्तत्र तथा यथा न भवति त्रैलोक्यमन्धं तमः ।।९९।।

---

इतियावत् । रागयुक्तत्वस्य विधेयत्वे तु तन्मिलनप्रतिज्ञायाः पूर्वोक्ताया अनुपपत्तेः । यद्वा । मदुक्तं न त्यजेति व्याख्येयम् । तिमिरमिदमित्यनन्तरं दूतीति पाठे नायिकाया उक्तिः । पूर्वार्द्धं प्रागवत् । उक्तं नायकानयनानुगुणं स्वप्रतिज्ञातं न त्यज । तस्मिन् स्वोक्ते मनो रक्तं विरचय । तन्मा विस्मार्षीरितिभावः ।।९८।।

**चक्र इति** । चन्द्रमुखीति स्वभावतः प्रकाशत्वमाह्लादकत्वं च व्यङ्ग्यम् । राधा गोपकन्याविशेषः, धरामण्डले भूवलये । प्रदीपेति धरामण्डलवृत्तित्वसमानाधिकरणप्रकाशकत्वार्थम् । कलिकेति संस्थानविशेषसूचनार्थम् । दैववशाददृष्टवशात् । एतेन पुरुषप्रयत्नानानेयत्वं व्यङ्ग्यम् । चरमा दशानां मध्ये अन्त्या मरणरूपा या दशा मुख्या तद्वारणाय प्राय इति । जातकल्पैवेतिभावः । तदुक्तं दर्पणे--

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ।
वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ।।
जातप्रायं तु तद्वाच्यं चेतसा काङ्क्षितं तथा ।

प्रकृतमाह--तदिति । ब्रूम इति बहुत्वं प्रार्थनाया अनुल्लङ्घनीयत्वार्थं, शिरसा नतेनेति विज्ञप्तिविशेषार्थम् । सहसेति विलम्बने निधनध्रौव्यात् । श्रीकृष्णेति शृङ्गारानुकूलत्वं वर्णसाम्यात्तदधिदेवतात्वाच्च । "श्यामो भवति शृङ्गारः" इति "शृङ्गारो विष्णुदैवस्तु" इति च भरतोक्तेः । तत्र राधारूपदीपकलिकायां स्नेहः प्रीतिः । तथा तेन प्रकारेण निक्षिप्यतां नितरां तद्विषयत्वं प्राप्यतां यथा त्रैलोक्यं त्रिभुवनम् । अन्धं तमो गाढान्धकारप्रायं न भवति । प्रसिद्धदीपकलिकापि तन्निर्वाणप्रसक्ततमोभीत्या तैलादिस्नेहेन

**शृङ्गारस्योभयनिरूपितत्वान्नायकोऽपि निरूप्यते। स च त्रिविधः। पतिरुपपतिर्वैशिकश्चेति। तत्र विधिवत्पाणिग्राहकः पतिः। यथा—**

---

दीप्यत इति समासोक्तेः। न च लोकद्वये पूर्वमपि तदसत्त्वाद्भूलोकग्रहणमेवोचितमिति वाच्यम्; लोकत्रयमप्रकाशमितिज्ञाने भूलोकः प्रकाशवानिति ज्ञानस्य प्रतिबन्धकत्वात्। विशेष्यतावच्छेदकावच्छेदेन तद्विशिष्टज्ञानं प्रति विशेष्यतावच्छेदकसामानाधिकरण्येनापि बाधबुद्धेः प्रतिबन्धकत्वादिति भावः ॥९९॥

॥इति नायिकानिरूपणं समाप्तम्॥

नायकनिरूपणे सङ्गतिमाह—**शृङ्गारस्येति**। उभयेति। विषयाश्रयरूपेत्यर्थः। परस्परनिष्ठरतौ परस्परस्य विषयतया आश्रयतया च तन्निरूपणाधीननिरूपणत्वात्। बहुविषयकत्वेन प्रथमं नायिकायामेव जिज्ञासोत्पत्तौ तन्निरूपणे च तन्निवृत्तावश्यनिरूप्यत्वेन सति प्रतिबन्धकीभूतजिज्ञासानिवृत्त्यवच्छिन्नावश्यवक्तव्यत्वरूपोऽवसरः सङ्गतिरितिभावः। एतेन "कारणतावच्छेदकावच्छिन्नयत्किचिन्निरूपणेऽपि

विरहनिवेदनमुदाहरति—**चक्र इति**। हे **श्रीकृष्ण! चन्द्रमुखी** इन्दुवदना राधेत्यर्थः। **धरामण्डले** भूवलये **धात्रा** विधिना **प्रदीपकलिका** दीपशिखा **चक्रे** व्यधायि। **दैववशात्** अदृष्टकारणात् **तस्याः** राधायाः दीपशिखाया वा अपि **दशा** अवस्था वर्तिर्वा **प्रायः चरमा** अन्तिमा **समुन्मीलति** समुल्लसति। **तत्** तस्माद्धेतोः **नतेन** नम्रेण **शिरसा** मस्तकेन कृतप्रणामा इत्यर्थः, **ब्रूमः** विज्ञापयामः **यत् तत्र** राधायां दीपकलिकायां वा विषयसप्तमी **सहसा** अविलम्बेन **तथा स्नेहः** प्रेमा तैलञ्च **निक्षिप्यताम्** निधीयताम् **यथा त्रैलोक्यं** त्रिभुवनम् **अन्धं तमः** गाढान्धकाररूपमिति यावत् **न भवति** न जायते। यथा तैलं विना दीपशिखानिर्वाणे जगत्तमसाऽऽवृतं भवति तथैव त्वत्प्रणयमन्तरेण राधाया जीवनहानौ सौन्दर्यभासा जगद्वञ्चितं स्यादतस्त्वर्यतामिति भावः। श्लेषसङ्कीर्णोऽतिशयोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥९९॥

अथ नायकनिरूपणमवतारयति—**शृङ्गारस्येति। शृङ्गारस्य** एतदाख्यस्य रसस्य **उभयनिरूप्यत्वात्** नायिकाया नायकस्य चान्योन्यं विषयरूपत्वादाश्रय-

**त्वं पीयूषमयूख मुञ्च शिशिरस्निग्धान्सुधाशीकरां-**
**स्त्वं भोगीन्द्र विलम्बसे किमु फणाभोगैः शनैर्वीजय।**
**त्वं स्वर्वाहिनि किं च सिञ्च सलिलैरङ्गैः शिरीषोपमैः**
**सेयं शैलसुता कठोरमहसः कान्त्या पथि क्लाम्यति॥१००॥**

---

कार्यनिरूपणं भवत्येव" इत्यपास्तम्। निरूपणं हि शृङ्गारस्य स्वरूपादिप्रकारकशिष्यबुद्धिजनकशब्दप्रयोगः। स चोपयुक्त-यावत्कारणनिरूपणाधीन एवेति स्पष्टम्। विधिवदिति। विवाह-जन्यसंस्कारविशेषावच्छिन्न इति यावत्। **त्वमिति**। सुधावृष्टिसाम-र्थ्यलाभाय पीयूषमयूखेति सम्बुद्धिः। तेन तेजोमयतयोष्णस्पर्शवत्त्व-मपास्तम्। जलावयवैस्तस्याभिभूतत्वात्। किरणवृष्टेः स्वत एव सिद्धत्वात्। सुधासीकरानिति। एतेन स्थूलावयवनिषेधः। तथा च किरणनिष्ठशीतस्पर्शसाक्षात्कारेऽपि द्रवत्वाधिकरणकिंचित्स्थूला-वयवानां किरणसम्पृक्तत्वाभावेनार्द्रतां प्रत्यनुपयोगादार्द्रत्वसम्पाद-कान् सूक्ष्मान् सुधावयवानेतदङ्गसंयुक्तान् कुर्विति भावः। तदाह—शिशिरस्निग्धानिति।

नन्वातपप्राबल्ये सुधाशीकराणामपि शैत्याभिभवात् कथं प्रकृतो-पयोग इत्यत आह——त्वं भोगीन्द्रेति। फणानामाभोगैर्विस्तारैः समुद्वीजय व्यजनवद्वातं कुरु। तथा च देहे द्रवद्रव्यसम्बन्धे सति पवनेन तच्छैत्याभिव्यञ्जनात्स्वेदापनोदसिद्धिरित्यर्थः।

ननु चरणतलावच्छेदेन तप्तक्षारमृत्तिकासंयोगात्तापो दुर्वार इत्यत आह——त्वमिति। किंचेत्यधिकोक्तौ। स्वर्वाहिनीपदमभिमत-स्थले जलसंयोगजननसामर्थ्यलाभार्थम्। सिञ्चेत्यत्र पन्थानमिति कर्म योजनीयम्। तेन चन्द्रस्वर्वाहिन्योः प्रार्थनफलभेदो नास्तीति निरस्तम्। घर्मसहननिषेधाय शिरीषोपमैरिति। तदसिद्धि-वारणाय—सेयमिति। शीघ्रगमननिरासाय शैलसुतेति। गमनावश्य-कत्वलाभाय पथीति। क्लमुग्लानौ "शमामष्टानाम्" इति दीर्घः।

"गदितैः क्षामक्षामैर्नेत्रविकारैश्च दीनसंचारैः।
श्लथभावेनाङ्गानां मुहुर्मुहुर्निर्दिशेद् ग्लानिम्॥"

इति भरतः॥१००॥

**अनुकूलदक्षिणधृष्टशठभेदात्पतिश्चतुर्धा। सार्वकालिकपराङ्गनापराङ्मुखत्वे सति सर्वकालमनुरक्तोऽनुकूलः।**

---

यद्यपि धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।
धीरप्रशान्त इत्ययमुक्तः प्रथमं चतुर्भेदः।।

इति भेदचतुष्टयस्यापि ग्रन्थान्तरेषूक्तिः । तथा च चतुर्णामनुकूलादिभेदचतुष्टयेन षोडशत्वेन तेषामप्युत्तमादिभेदत्रयेणाष्टचत्वारिंशद्भेदाः। तदुक्तं दर्पणे—

त्रैविध्यात्सर्वेषामुत्तमाधममध्यमत्वेन।
उक्ता नायकभेदाश्चत्वारिंशत्तथाष्टौ च।।इति।

तथाप्याद्यानां चतुर्णां तद्भेदानां शृङ्गारानुपयोगितया तदुपयुक्तभेदानेवाह—**अनुकूलेति**। सार्वकालिकेति । दक्षिणवारणाय सत्यन्तम् विरक्तवारणाय विशेष्यम् । अनुरक्त इत्यत्रानुरागविषयकत्वाभाववदङ्गनाविशेषणे भेदे यस्याः प्रतियोगित्वं तस्यामित्यर्थः। तथा च स्वविषयवृत्तिभेदप्रतियोगितावच्छेदकधर्मासमानाधिकरणविषयत्व-

रूपत्वाच्चेत्यर्थः। **नायकोऽपि निरूप्यते** लक्षणोदाहरणैर्विविच्यते। नायिकायाः पूर्वं निरूपितत्वात्। नायकं विभजते—**स चेति**। स नायकः **त्रिविधः** त्रिप्रकारकः। भेदाश्च **पतिः उपपतिः वैशिकश्चेति**। चः समुच्चये, इतिरवधारणे। पतिं लक्षयति **विधिवदिति। विधिवत्** शास्त्रोक्तेन परम्परानुगतेन च नियमेन **पाणिग्राहकः** पाणिग्रहणसंस्कारकर्तेत्यर्थः **पतिः** उच्यत इति शेषः।

तदुदाहरति—**पतिरिति**। **त्वमिति**। हे **पीयूषमयूख** ! सुधांशो ! **त्वं शिशिराः** शीतलाश्च ते **स्निग्धाः** मसृणाश्च तान् **सुधाशीकरान्** अमृतकणान् **मुञ्च** विसृज। **हे भोगीन्द्र** ! नागराज ! **त्वं किमु** किमर्थं **विलम्बसे** विलम्बं करोषि **फणाभोगैः** फटाविस्तारैः **शनैः** मन्दंमन्दं **वीजय** व्यजनं कुरु। हे **स्वर्वाहिनि** ! स्वर्गङ्गे **त्वं सलिलैः** जलैः **सिञ्च** आर्द्रीकुरु। **किञ्च** यतोहि सा प्रसिद्धा इयं पुरोगा **शैलसुता** पार्वती **पथि** मार्गे **कठोरं महः** यस्य तस्य तीक्ष्णातपस्य सूर्यस्येत्यर्थः। **कान्त्या** त्विषा **शिरीषोपमैः** कपीतनकुसुमकोमलैः "शिरीषस्तु कपीतनः" इत्यमरः। **अङ्गैः** अवयवैः **क्लाम्यति** ग्लायति। मदुपजीविनो यूयं मत्पाणिगृहीतामुपचरतेति पत्युः शङ्करस्योक्तिः। उपमासंसृष्टपरिकरोऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम्।।

यथा—

**पृथ्वि त्वं भव कोमला दिनमणे त्वं शैत्यमङ्गीकुरु**
**त्वं वर्त्मन् लघुतां प्रयाहि पवन त्वं स्वेदमुत्सारय।**
**सान्निध्यं श्रय दण्डकावन गिरे निर्गच्छ मार्गाद्बहि-**
**र्वैदेही विपिनं मया सह यतो निर्गन्तुमुत्कण्ठते ॥१०१॥**

---

वद्रतिकत्वमनुकूलत्वमिति तात्पर्यम्। उभयत्र रतिसत्त्वे उक्तधर्म-समानाधिकरणविषयत्वस्यैव रतावापत्तेः। तदुक्तम्—

अतिरक्ततया नार्यां करोति नान्याङ्गनाप्रसङ्गं यः।
स्यान्नायकोऽनुकूलः स रामवज्जनकतनयायाम्॥

**पृथ्वीति**। अनेन स्वाभाविककाठिन्यसूचनम्। कोमला सुकुमारस्पर्शा भव। पुष्पादिरूपपृथिव्याः कोमलत्वेऽपि संचरणोचितायास्तदभावात् न सिद्धसाधनम्। तथापि निदाघपीडासम्भवात्प्राह—दिनमणे इति। मणित्वारोपो दाहप्रतिकूलत्वनिषेधार्थः। अतिदीर्घमार्गस्य तथापि दुर्गमत्वादाह—त्वं वर्त्मन् इति। लघुमार्गेऽपि श्रमसम्भवादाह—पवनेति। स्वेदं मार्गगतिजन्यमुत्सादय नाशय। तेन खेदान्तरोत्पत्तिप्रतिवन्ध-कत्वमात्रं निरस्तम्। गन्तव्यदेशसंयोगस्यानुद्देशे मार्गलाघवस्य स्वत एव सिद्धत्वाद् विध्यनौचित्यमत आह—सान्निध्यमिति। दण्डका गोदावरीप्रदेशविशेषः। "मनुष्यसामन्तसुतो निषङ्गी सहानुजस्तिष्ठति

चतुर्विधतया पतिं विभजते—**अनुकूलेत्यादि**। अनुकूलं लक्षयति—**सार्व-कालिकेति**। सर्वस्मिन् काले भवं सार्वकालिकं सर्वदैवेत्यर्थः **पराङ्गनाः** परस्त्रियः ताभ्यः पराङ्मुखत्वम् अननुरागवत्त्वमितियावत्। **तस्मिन् सति सर्वकालम्** अत्यन्त-संयोगे द्वितीया, **अनुरक्तः** अनुरागवान् स्वपरिणीतायामिति शेषः, एवंविधो नायकः अनुकूलः उच्यत इतिभावः।

उदाहरति—**पृथ्वीति**। हे **पृथ्वि**! वसुधे **त्वं कोमला** मृद्वी **भव** काठिन्यं त्यजेतिभावः। **दिनमणे**! भास्कर! **त्वं शैत्यं** शीतलत्वम् **अङ्गीकुरु** स्वीकुरु तापं जहीहीतियावत्। हे **वर्त्मन्**! मार्ग! **त्वं लघुतां प्रयाहि** दीर्घो मा भव यथा गन्तव्यं स्थानं शीघ्रमियं लभेतेतिभावः। हे **पवन**! वायो! **त्वम् खेदं** गमनक्लमम् अस्या इतिशेषः। **उत्सारय** दूरीकुरु। हे **दण्डकावन** दण्डकाख्यारण्य!

**सकलनायिकाविषयसहजानुरागो दक्षिणः। यथा—**

**एतत्पुरः स्फुरति पद्मदृशां सहस्र-**
**मक्षिद्वयं कथय कुत्र निवेशयामि।**
**इत्याकलय्य नयनाम्बुरुहे निमील्य।**
**रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥१०२॥**

---

दण्डकायाम्" इति मुरारिस्तथापि मध्यगतपर्वतारोहणं दुर्घटमेवेत्यत आह—गिरे इति। स्वस्थानान्निर्गतस्यापि मार्गमध्यदेशावस्थाने दोषतादवस्थ्यमित्यतो मार्गाद् वहिरिति। अस्मद्गन्तव्यादितिभावः। केचित्तु "दण्डकावनसम्वन्धिगिरे इत्येकपदं, सान्निध्यं श्रय मार्गाद्-वहिर्वा निर्गच्छ" इत्याहुः। "विदेहा मिथिला प्रोक्ता" इति हलायुधः। तस्यां भवा वैदेही। अनेनायोनिजत्वाद्यतिशयसूचनम्। अतर्कितोपनतत्वलाभाय—सहसेति । वनगमनस्यानौचित्यान्मया सहेति ॥१०१॥

**सकलेति**। वह्वर्थकम्। शठवारणाय सहजेति। **एतदिति**। तदनाकलितचाक्षुषसूचनम्। परस्परव्यवधाननिषेधाय पुर इति। रामणीयकसाम्यलाभाय स्फुरतीति । यौवनव्यञ्जनाय पद्मदृशामिति। अनेन मदीयचाक्षुषविषयत्वतदभावोभयग्राहकत्वं व्यङ्ग्यम्। वह्वीनामपि सम्मुखस्थानां युगपदेव समूहालम्वनं चाक्षुषं स्यादत आह—सहस्रमिति। तथा च मदपेक्षया पृष्ठतः पुरतश्च विद्यमानानां युगपन्न चक्षुःसंयोगसम्भव इति भावः। नेत्रबाहुल्यवारणाय अक्षिद्वयमिति। कुत्र कस्यां वा नायिकायाम्। कथयेत्यस्य वाक्यान्त-रमध्ये प्रवेश आकुलत्वव्यञ्जनार्थः। इत्येवमाकलय्य विचार्य नयने-ऽम्बुरुहसदृशे निमील्य। शेषवैमनस्यप्रसङ्गात् एकस्या अपि चाक्षुषं मा भूदित्यभिप्रायः। अम्बुरुहपदं तद्दर्शनलालसया विकासित्व-लाभार्थम्। अनुरागाभाववारणाय रोमाञ्चितेनेति। अवयवमात्र-निषेधाय वपुषेति। अनुरागसाम्यलक्षणादच्युतेनेति। यत्तु "अनेकनायिकाविषयत्वाद्रतेराभासत्वम्" इति। तन्न। नायिकानिष्ठाया

**भूयः कृतनिःशङ्कदोषोऽपि भूयो निवारितोऽपि भूयः प्रश्रयपरायणो धृष्टः। यथा——**

---

अनेकविषयकरतेरेव तथात्वेन शास्त्रकाराभिमतत्वात्। यदपि "परनायिकाविषयकत्वात्तद्" इति। तदप्यसत्। प्रत्यवायप्रयोजकतयैव रतेराभासत्वात्। ईश्वरे च मिथ्याज्ञानात्यन्ताभावेनाधर्मानुदयात्। तदुक्तम्——

धर्मव्यतिकरो दृष्ट ईश्वराणां हि साहसम्।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा॥ इति।

इदं च वस्तुगत्योक्तम्। प्रकृते तु स्वीयामात्रविषयकत्वेनाप्युपपत्तेः शङ्कैव निरवकाशेतिदिक्॥१०२॥

**भूय इति**। तथा च दर्पणः——

कृतागा अपि निःशङ्कस्ताडितोऽपि न लज्जितः।
दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः॥

त्वं **सान्निध्यं श्रय** सामीप्यं कुरु। **हे गिरे!** पर्वत। **मार्गाद्** पथः **बहिर्निर्गच्छ** मार्गावरोधं मा कुर्विति भावः। **यतः** हि **असौ सीता** इयं जानकी मृद्वङ्गीतिभावः। **मया** रामेण **सह विपिनं** वनं **निर्गन्तुं** प्रयातुम् **उत्कण्ठते** वाञ्छति। सीतायामनन्यसाधारणप्रणयदर्शनाद्रामस्यानुकूलनायकत्वम्। समुच्चयालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥१०१॥

दक्षिणं लक्षयति——**सकलेति**। **सकलनायिकाविषयकः** एकाधिकनायिकासु सत्सु सर्वास्वेव **समः** अन्यूनाधिकः **सहजः** स्वाभाविकः न तु कृत्रिम इतिभावः। **अनुरागः** आसक्तिर्यस्य स **दक्षिण** इत्युच्यते।

तमुदाहरति——**दक्षिण इति**। **एतदिति**। **एतत्** प्रत्यक्षमेव **पुरः** अग्रतः। **पद्मदृशां** कमलेक्षणानां **सहस्रं** सङ्ख्यायां दशशतमिति यावत्, **स्फुरति** शोभते, **तत् अक्षिद्वयं** स्वकीयं नेत्रयुगलं **कुत्र** कस्यां नायिकायामित्यर्थः। **निवेशयामि** स्थिरीकरोमि इति **कथय** सखे ब्रूहीत्यर्थः। **इत्याकलय्य** एवं विचार्य **अच्युतेन** कृष्णेन **नयनाम्बुरुहे** नेत्रकमले **निमीलय** सङ्कोच्य **रोमाञ्चितेन** संजातपुलकेन **वपुषा** देहेन **स्थितम्** अस्थायि। दाक्षिण्यभङ्गभिया नेत्रे निमील्य रोमाञ्चबाहुल्यं प्रकटितमितिभावः। रूपकालङ्कारः। वसन्ततिलका छन्दः॥१०२॥

**बद्धो हारैः करकमलयोर्द्वारतो वारितोऽपि**
**स्वापं ज्ञात्वा पुनरुपगतो दूरतो दत्तदृष्टिः।**
**तल्पोपान्ते कनकवलयं मुक्तमन्वेषयन्त्या**
**दृष्टो धृष्टः पुनरपि मया पार्श्व एव प्रसुप्तः॥१०३॥**

---

तेन स्वापराधनिबन्धनतिरस्कारप्रयुक्तलज्जाविरहवत्त्वे सति तदनुरागवानिति लक्षणम्। तथा च विद्यानाथः—

व्यक्तापराधो गतभीः स धृष्ट इति कथ्यते।

दक्षिणवारणाय सत्यन्तम्। **बद्ध** इति। एतेनापराधसूचनम्। वैरस्यवारणाय हारैरिति। स्तनसम्बन्धादन्तरङ्गैरित्यर्थः। अत एवाह-करेति। स्तनसंयुक्तसंयोगस्य करे सम्पत्त्या साक्षात्संयोगस्याप्यग्रेऽभिमतत्वात्। कमलसादृश्यं हारवत्ताप्रयुक्तश्रीविशेषसम्पत्तिद्योतनार्थम्। विशिष्टनायिकानुरागविषयत्वसिद्धेः। द्वारतो द्वाराभ्यन्तरे वारितः प्रतिषिद्धोऽपि। बहिरेव निषेधे वैरस्यापत्तेः। शयनागमनाभ्यनुज्ञायाश्च कोपवशादनुपपत्तेः। निद्रां मदीयां ज्ञात्वा लिङ्गैरनुमाय पुनरुपगतः प्रतिबन्धकाभावात्समीपमुपगतः। निद्रानुमितिपूर्वकाले निवारणभयाद्। दूरत इति। दत्तदृष्टिर्निद्रालिङ्गदर्शनार्थमिति भावः। "वलयत्यागो "नालङ्कृता सुप्याद्" इत्यागमाद्विरहेण तनुत्वाद्दुःसहत्वाद्वा" इति केचित्। पुनरिति पूर्वं तत्र स्वापान्निषिद्ध इति व्यङ्ग्यम् ॥१०३॥

धृष्टं लक्षयति—भूय इति। भूयः मुहुः निःशङ्कः यथास्यात्तथा **कृतः** विहितः **दोषः** अपराधः येन सः एवं भूतोऽपि **भूयः** मुहुः **निवारितः** तिरस्कृतोऽपि **भूयः** पुनरपि **प्रश्रयपरायणः** अनुनयं कुर्वन् **धृष्टः** उच्यत इति शेषः।

तमुदाहरति—धृष्ट इति। धृष्टः प्रगल्भ इति यावत्। **बद्ध** इति। धृष्टः त्रपाभीभ्यां रहित इतियावत्। **करकमलयोः** हस्ताब्जयोः **हारैः** एकावलीभिः **बद्धः** संयतः, **द्वारतः** प्रतीहारदेशात् **वारितः** प्रतिषिद्धोऽपि **दूरतः** विप्रकृष्टप्रदेशात् **दत्तदृष्टिः** कृतेक्षणः मच्चेष्टास्विति शेषः। **स्वापं ज्ञात्वा** मां निद्रितां विज्ञायेत्यर्थः। **पुनरुपगतः** भूयोऽप्यागतः, **तल्पोपान्ते** शय्यासमीपे भ्रष्टं क्षितौ पतितं **कनकवलयं** स्वर्णकङ्कणं स्वीयमितियावत् **अन्वेषयन्त्या** गवेषमाणया **मया पार्श्वे एव** मदीय-

**कामिनीविषयककपटपटुः शठः। यथा—**

**मौलौ दाम निधाय भालफलके व्यालिख्य पत्रावलीं**
**केयूरं भुजयोर्विधाय कुचयोर्विन्यस्य मुक्तास्रजम्॥**
**विश्वासं समुपार्जयन्मृगदृशः काञ्चीनिवेशच्छलात्**
**नीवीग्रन्थिमपाकरोति मृदुना हस्तेन वामभ्रुवः॥१०४॥**

---

**कामिनीति**। शठः सर्वत्र वक्र इति विज्ञानेश्वरादिलक्षितस्यात्रालक्ष्यत्वात्। कामिनीविषयकेति। भरतः—

वाचैव मधुरो यस्तु कर्मणा नोपपादयेत्।
योषितां कंचिदप्यर्थं स शठः परिकीर्तितः॥

"शठोऽयमेकत्र बद्धभावो यः। दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति॥" इति दर्पणः। गूढविप्रियकृच्छठ इति लक्षयित्वा "नायिकामात्रविदितविप्रियकारी शठः" इति विद्यानाथः। अत्रेदं तत्त्वम्—उभयत्र तुल्यानुरागो दक्षिण एव। एकमात्रानुरक्तस्त्वनुकूलः। उभयत्रानुरागवैषम्ये तु शठः।

नन्वेवं धृष्टभेदविलोपापत्तिः, दक्षिणे शठे वान्तर्भावापत्तेरिति चेत्। सत्यम्। प्रतिनियतव्यक्तिविशेषपुरस्कारेण रागस्य न्यूनाधिकत्वे शठः। अनियमेन तथात्वे धृष्ट इत्याशयात्। एकत्र बद्धभावो य इत्यनेन तथा लाभात्।

**मौलाविति**। अपराधोत्तरं सखीवेषं कृत्वा समागतस्य नायकस्य वृत्तान्तो वर्ण्यते। स्वरूपेणागमने तु नायिकया दामविधानादावनुमत्यनुपपत्तेः। न च नायिकया तदपराधज्ञाने सख्यापि प्रसाधनविधानेऽनुमत्युपपत्तिरेवेति वाच्यम्; तदपराधस्य सख्यै कथने प्रयोजनाभावेन स्वयं सख्या समारब्धस्य प्रसाधनस्य प्रत्यादेशानुपपत्तेः। "दाम मालाम्" इति केचित्। केशकलापं गुम्फित्वेति युक्तम्। "फलकपदं विशालत्वद्योतकम्" इति केचित्। तन्न। भाले तस्या अप्रशस्तत्वात् लेखनीयत्वव्यञ्जनार्थमिति रहस्यम्। विशब्दो वैचित्र्यार्थः। आङिति पर्याप्त्यालेखनार्थम्। पत्रावलि कस्तूरिकादितिलकपङ्क्तिं। "केयूरमङ्गदं तुल्ये" इत्यमरः। जात्यभिप्रायमेकत्वम्।

**आचारहानिहेतुः पतिरुपपतिः। यथा—**

**शङ्काशृङ्खलितेन यत्र नयनप्रान्तेन न प्रेक्षते**
**केयूरध्वनिभूरिभीतिचकितं नो यत्र चाश्लिष्यते।**
**नो वा यत्र शनैरलग्नदशनं बिम्बाधरः पीयते**
**नो वा यत्र पिधीयते च मणितं तत्किं रतं कामिनोः॥१०५॥**

---

कण्ठक्षेपमात्रवारणाय विन्यस्येति। स्तनाभोगे विसदृशपातेऽपि करपरामर्शेण यथास्थानं विधानात्। विश्वासं सखीत्वप्रकारकज्ञानम्। सम्यगुपार्जयन्। तन्निवृत्तिहेतुनायकव्यापारवैमुख्यादिति भावः। मृगदृश इति विशेषदर्शनसामर्थ्यव्यञ्जनार्थम्। काञ्चीस्थापनानुकूलव्यापारपरित्यागे सहसैव प्रकाशापत्त्या मृदुनेति। तच्च काञ्चीनिवेशानुकूले नीवीविस्रंसनानुकूले च व्यापारे पर्यायेण प्रसक्तत्वरूपं ग्राह्यम्। वामभ्रुव इति कौटिल्यरूपवैदग्ध्यवत्त्वात् स्वापराधोन्नयनक्षमत्वं व्यङ्ग्यम्। तेन सखीवेषाश्रयणोपपत्तिः। अतो नान्यतरवैयर्थ्यम्॥१०४॥

**आचारेति**। स च भर्तृभिन्नपराङ्मुखत्वम्। तस्य हानिर्भर्तृभिन्ने स्वस्मिन्ननुरागः। तत्र हेतुर्गुणविशेषादिवशात्। "जारस्तूपपतिः

तल्प एवेत्यर्थः **प्रसुप्तः** शयितः **दृष्टः** अवलोकितः, स्पष्टमेतस्य निर्लज्जत्वं निर्भीकत्वं च धृष्टत्वद्योतकम्। विशेषोक्तिरलङ्कारः। मन्दाक्रान्ता वृत्तम्॥१०३॥

शठं लक्षयति—**कामिनीति**। **कामिनीविषयके** नायिकाविषये **कपटपटुः** छलनिपुणः **शठ** इत्युच्यते। तमुदाहरति—**शठ इति**। **मौलाविति**। **मृगदृशः** हरिणलोचनायाः नायिकाया इत्यर्थः। **मौलौ** शिरसि दाम मालां **निधाय** पुष्पस्रग्भिः कबरीमलङ्कृत्येति यावत्। **भालफलके** ललाटपटले **पत्रावलीं** तमालाद्याकृतिमत्तिलकं **व्यालिख्य** विरचय्य **भुजयोः** बाह्वोः **केयूरे** अङ्गदे **विधाय** कृत्वा, **कुचयोः** **मुक्तास्रजं** हारमितियावत् **विन्यस्य** संस्थाप्य एवं क्रमेण तस्याः **विश्वासं समुपार्जयन्** **काञ्च्याः** रशनायाः **निवेशच्छलात्** परिधापनमिषात् **मृदुना** कोमलेन **हस्तेन** करेण शनैरितियावत्। **वामभ्रुवः** कुटिलभ्रुवः तत्कपटावगमादिति शेषः। **नीवीग्रन्थिं** जघनवासोबन्धनम् **अपाकरोति** मोचयति रिरंसयेतिभावः। अपह्नुतिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥१०४॥

समौ" इत्यमरः। शङ्केति। तथा च भरतः—"शङ्कानाम चौर्याभिग्रहणनृपापराधपापकर्मकरणादिभिर्विभावैरुत्पद्यते" इति। तथा च स्त्रीयदुश्चरितप्रकाशसम्भावनाप्रयुक्तभयमत्र शङ्का। तया शृङ्खलितेन सान्तरायेण। अन्योन्यदर्शनस्य पार्श्वावलोकनेन व्यवधीयमानत्वात्। स्वीयासामान्यवनितयोः सम्भोगशङ्काया अनुदयादित्यर्थः। केयूरं वाहुभूषणमुपलक्षणं चैतद्वलयानाम्। परिरम्भकालीनबाहुक्रियया तेषां परस्पराभिघातेन शब्दोत्पत्त्या अन्येषामनुमितिः स्यादतस्तादृशमपि यत्र न क्रियते। "केयूरध्वनिना या भूरिभीतिस्तया चकितं निश्चलम्" इति केचित्। वस्तुतस्तु भीत्या चकितं प्रतिहतं यथा स्यात्। "चक तृप्तौ प्रतीघाते च" इति स्मरणात्। विम्वाधरपदं दन्तक्षतयोग्यत्वार्थम्। चुम्बनं चुंकारनिषेधार्थम्। शनैरिति। क्षतवारणाय अलग्नेति। तेषां रत्यनुमापकत्वात्। मणितं रतिकूजितं। न पिधीयते परज्ञानविषयत्वं माभूदितीच्छया न प्रतिवध्यते। तत्स्वीयादिरतं किम्। परकीयारतापेक्षयाऽपकृष्टमेवेति भावः। तदुक्तं रतिरहस्ये—

यः प्रत्यवायविषयो यश्च यदा दुर्लभो विषयः।
कामः स्वभावविषमः प्रसरति तत्रैव दुर्वारः॥

भरतोऽप्याह—

यद्यप्यस्ति नृपाणां तु कामतन्त्रमनेकशः।
प्रच्छन्नकामितं यत्तु तद्वै रतिकरं भवेत्॥
यद्वा नाभिनिवेशित्वं यतश्चैव निवार्यते।
दुर्लभत्वं च यन्नार्याः सा कामस्य रतिः परा॥

अत एवानुभविकैरुक्तम्—

इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते
नालापानि पतन्ति वाष्पकलुषा नोपैति कार्श्यं वपुः।
स्वाधीनामनुकूलिनीं स्वगृहिणीमालिङ्ग्य यत्सुप्यते
तत्किं प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते॥

यत्तु कैश्चित्प्रलपितम्—"एतादृशप्रतिसन्धानसत्त्वाद्विगलितवेद्यान्तरत्वाभावात्कथं रसपरिपोष" इति, तदुपेक्ष्यम्। रसाननुगुण-

**उपपतिरपि चतुर्द्धा। परन्तु शठत्वं नियतं तत्र, अनियताः परे। वहलवेश्योपभोगरसिको वैशिकः। यथा—**

---

प्रतिसन्धानस्यैव निषेधात्। परकीयायां गुप्तिप्राधान्यस्यैव सहृदयै- रुक्तत्वात्॥१०५

**चतुर्द्धेति।** अनुकूलादिभेदात्। नियतमिति शठत्वव्यतिरेकेण पराङ्गनासम्भोगानवकाशात्। वहलेति। यद् भरतः—

विशेषयेत्कलाः सर्वाः यस्मात्तस्मात्तु वैशिकः।
वेश्योपवरणाद्वापि वैशिकः समुदाहृतः॥
यस्तु सर्वगुणोपेतः सर्वशिल्पप्रयोजकः।
स्त्रीचित्तग्राहकश्चैव वैशिकः स भवेत्पुमान्॥
गुणास्तस्य तु विज्ञेयाः स्वशरीरसमुद्भवाः।
आहार्याः सहजाश्चैव त्रयस्त्रिंशत्समासतः॥

अथोपपतिं लक्षयति—**आचारेति**। **आचारः** स्वधर्मानुष्ठानम्, तस्य **हानिः** विनाशः तस्याः **हेतुः** कारणभूतः यः **पतिः** नायकः स **उपपतिः** जार इत्यर्थः। उच्यत इति शेषः। उदाहरति—**यथेति**। **शङ्केति**। यत्र यस्मिन् सुरते शङ्कया लोका- लोकनजनितेनातङ्केन **शृङ्खलितः** संयतः एवंभूतेन **नयनप्रान्तेन** कटाक्षेणेति यावत्। **न प्रेक्षते** नावलोक्यते। अन्योऽन्यमिति शेषः। **यत्र वा केयूरध्वनेः** अङ्गदरवस्य या **भूरिभीतिः** अतिभयं तया **चकितं** त्रस्तं यथास्यात्तथा **नो आश्लिष्यते** परस्परं नालिङ्ग्यते। **वा पुनः यत्र बिम्बाधरः** बिम्बोष्ठः **शनैः** मन्दं **अलग्नदशनं** अलग्नाः क्षतव्यक्तिभियाऽनारोपिताः दशनाः दन्ता यथास्यात्तथा **नो पीयते** न चूष्यते। **वा** अथवा **यत्र मणितं** रतिकूजितं **न पिधीयते** जनान्तरश्रवणभयेन न क्रियते, **कामिनोः** यूनोः **तत् किंरतम्** कुत्सितकेलिः इति निन्दार्थकम्। **किं** किमप्यनिर्वचनीयं तद्रतम्, इति च प्रशंसा। काव्यलिङ्गमलङ्कारः। शार्दूल- विक्रीडितं च वृत्तम्॥१०५॥

उपपतिं विभजितुमाह—**उपपतिरपीति**। **चतुर्द्धा** पतिरिव अनुकूल-दक्षिण- धृष्ट-शठभेदादितिभावः। विशेषं दर्शयति—**परन्त्विति**। **शठत्वं** पूर्वोक्तलक्षणं **तत्र** उपपतौ **नियतं** निश्चितं तेन विना स्वीयां विहाय पराङ्गनाप्रवृत्तेरभावात्। **परे अनुकूलत्वादयस्तु अनियताः** कादाचित्काः।

काञ्चीकलक्वणितकोमलनाभिकान्तिं
पारावतध्वनितचित्रितकण्ठपालिम् ।
उद्भ्रान्तलोचनचकोरमनङ्गरङ्ग-
माशास्महे कमपि वारविलासवत्याः ॥१०६॥

---

शास्त्रविच्छीलसम्पन्नो रूपवान् प्रियदर्शनः ।
विक्रान्तो मतिमांश्चैव वयोवेषकुलान्वितः ॥
सुरभिर्मधुरस्त्यागी सहिष्णुरविकत्थनः ।
अशङ्कितः प्रियाभाषी चतुरः सुभगः शुचिः ॥
कामोपचारकुशलस्तत्त्वज्ञो देशकालवित् ।
अदीनवाक्यः स्मितवाग्वाग्मी दक्षः प्रियम्वदः ॥
अलुब्धः संविभागी च श्रद्दधानो दृढस्मृतिः ।
गम्यासु चाप्यविश्रम्भी मानी चेति हि वैशिकः ॥
अनुरक्तः शुचिर्दक्षो दक्षिणः प्रतिपत्तिमान् ।
भवेच्छिद्रापिधायी च वयस्यस्तस्य षड्गुणः ॥

**काञ्चीति**। आङः शासु इच्छायाम् । उपसङ्ख्यानादात्मनेपदम् । अनङ्गरङ्गं सुरतोत्सवं आशास्महे इच्छामः। तत्प्रयोजकं रूपमाह कमपीति। स्वीयादि सम्भोगादुत्कृष्टमित्यर्थः, अत एवाह—वारेति।

स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥

प्रशंसादौ मतुप् । काञ्च्याः कलं क्वणितं यत्रेति बहुव्रीहिः ।

वैशिकं लक्षयति—**वहलेति**। **वहलतया** बाहुल्येन **वेश्यानामुपभोगे रसिकः** यः स वैशिक इत्युच्यत इति भावः। **तमुदाहरति—काञ्चीति**। **वयं वारविलासवत्याः** वाराङ्गनायाः **कमपि** विलक्षणम्। **काञ्च्याः** मेखलायाः **कलक्वणितेन** अव्यक्तरवेण **कोमला** मसृणा **नाभिकान्तिः** यस्मिन्; तथा **पारावतानां** कपोतानां **ध्वनितेन** कलरवेण **विचित्रिता** विविधीकृता **कण्ठपालिः** गलप्रदेशो यस्मिन्, **उद्भ्रान्ते** तरले **लोचने** एव **चकोरौ** यस्मिन् एवंभूतम् **अनङ्गरङ्गं** मदनोत्सवं **आशास्महे** कामयामहे। अस्माकं भवेदितीच्छाम इत्यर्थः॥ काव्यलिङ्गमलङ्कारः वसन्ततिलका च वृत्तम्॥१०६॥

**वैशिकस्तूत्तममध्यमाधमभेदात् त्रिविधः।**

"स चासौ कोमलोऽभिनवो यो नाभिस्तस्य कान्तिर्लावण्यं यत्र" इति केचित्, तन्न। व्यधिकरणवहुव्रीहिद्वयप्रसङ्गात्। तस्मात् काञ्च्या यत्कलं क्वणितं सिञ्जितं तेन कोमला रमणीया नाभिकान्तिर्यत्रेति व्याख्येयम्। नाभ्यवच्छेदेन काञ्चीकूजितोत्पत्त्या शब्दांशे उपनीतभानात्मकनाभिचाक्षुषोत्पत्तेः। कपोतध्वनिसदृशध्वनिभिर्विशेषेण चित्रिता कण्ठपालिः कण्ठभागो यत्र। सीत्कारोदयात्। तच्च लावककपोतकोकिलेत्यादिवचनात्। "शीतक्लेशे तु सीत्कारं, नखक्षते मृगाक्षीणां निर्दयाधरचर्वणे।" इति शार्ङ्गदेवः। उत् ऊर्ध्वं प्रियमुखचन्द्रदर्शनार्थं भ्रान्तौ लोचनचकोरौ यत्र। लज्जाविरहो व्यङ्ग्यः॥१०६॥

**वैशिकस्त्विति**। वैशिकोऽपीत्यर्थः। उत्तमादिभेदानां पत्यादावपि सत्त्वात्। यद् भरतः—

पुनरेव तु पुरुषगुणान् कामिततन्त्रे प्रवक्ष्यामि।
चतुरोत्तमौ समध्यस्तथाधमः संप्रवृत्तकश्चैव॥
स्त्रीणां प्रयोगविषये ज्ञेयाः पुरुषास्त्विमे पञ्च।
दुःखक्लेशसहिष्णुः प्रियवाग्दाता प्रसादने कुशलः॥
रत्युपचारे निपुणो दक्षश्चतुरस्त्वसौ बोध्यः।
(दक्षो नायिकानुच्छन्दानुवर्तीत्यर्थः)
यो विप्रियं न कुरुते वीरो दान्तः प्रियंवदो मानी।
अज्ञातहृदयतत्त्वः स्मृतिमान् ज्ञेयः स तु ज्येष्ठः॥
मधुरस्त्यागी रागं प्रयाति मदनस्य नापि वशमेति।
अपमानितश्च नार्या विरज्यते स तु भवेज्ज्येष्ठः॥
सर्वार्थैर्मध्यस्थो भावग्रहणं करोति नारीणाम्।
किञ्चिद्दोषं दृष्ट्वा विरज्यते मध्यमः पुरुषः॥
काले दाता ह्यपमानितोऽपि न क्रोधमतितरामेति।
दृष्ट्वा व्यलीकमात्रं विरज्यते मध्यमोऽयमपि॥
अपमानितोऽपि नार्या निर्लज्जः समुपसर्पति तथैव।
अन्यतरं सङ्क्रान्तामारूढः स्नेहभावनया॥

**दयितायाः भूयः प्रकोपेऽप्युपचारपरायण उत्तमः। यथा—**

**चक्षुःप्रान्तमुदीक्ष्य पक्ष्मलदृशः शोणारविन्दश्रियं**
**नोच्चैर्जल्पति न स्मितं वितनुते गृह्णाति वीटीं न वा।**
**तल्पोपान्तमुपेत्य किन्तु पुलकभ्राजत्कपोलद्युतिः**
**कान्तः केवलमानतेन शिरसा मुक्तास्रजं गुम्फति ॥१०७॥**

---

अभिनवकृतेऽप्यलीके प्रत्यक्षं रज्यते दृढतरं यः।
सुहृदापि वार्यमाणो विज्ञेयः सोऽधमो नाम॥
अविगणितभयामर्षो मूर्खः सततं प्रसक्तहासश्च।
एकान्तदृढग्राही निर्लज्जः कामतन्त्रेषु॥
रतिकलहसंप्रहारेषु कर्कशः क्रीडनीयकः स्त्रीणाम्।
एवंविधो विधिज्ञैः प्रवृत्तको नाम विज्ञेयः॥

अत्र किञ्चिदन्तरसद्भावेऽपि चतुरस्य ज्येष्ठे प्रवृत्तकस्य चाधम एवान्तर्भाव इत्यभिप्रायेण त्रैविध्यमेवोक्तम्। दयिताया इति। मध्यमातिव्याप्तिवारणाय भूय इति। उपचारस्तत्प्रसादनव्यापारः।

**चक्षुरिति**। अन्यविषयककोपवारणाय प्रान्तमिति, स्वविषयकतिर्यग्दर्शनेन स्वविषयककोपानुमानात्। स्वाभाविककेकरत्ववारणाय पक्ष्मलदृश इति। पक्ष्मेत्युपलक्षणम्। प्रशस्तनेत्राया इत्यर्थः। केवलकोपनिषेधाय अरविन्देति। रतिमिश्रितत्वात्। स्वरूपसतो भयानुत्पादकतया उदीक्ष्येति। उच्चैर्न जल्पति। प्रसादनवैमुख्ये तस्याः कोपाधिक्यापत्तेः। स्मितमपि न करोति। स्ववैमनस्यजिज्ञापयिषितत्वात्। ताम्बूलग्रहणाभावोऽपि तत्काले सम्भोगानवाप्त्या प्रयोजनाभावात्। तल्पोपान्तगमनमारोहणे क्रोधाधिक्यस्य परावृत्तौ चौदासीन्यस्य प्रसङ्गात्। तद्देशागमननिवारणाभावेनाग्रे कोपापाङ्गस्य विधित्सितत्वानुमानात्। पुलकेति। "कर्तृकरणे कृता बहुलम्" इति भ्राजच्छब्देन सह समासः। विनयसूचनाय आनतेनेति। उपलक्षणे तृतीया। मुक्तास्रजं हारं गुम्फति ग्रथ्नाति। सखीकार्यकरणादत्यन्तं स्वानुरागद्योतनमिति भावः॥१०७॥

प्रियायाः प्रकोपे यः प्रकोपमनुरागं वा न प्रकटयति चेष्टया मनोभावं गृह्णाति स मध्यमः। यथा--

आस्यं यद्यपि हास्यवर्जितमिदं लास्येन हीनं वचो
नेत्रं शोणसरोजकान्ति तदपि क्वापि क्षणं स्थीयताम्।
मालायाः करणोद्यमो मकरिकारम्भः कुचाभोगयो-
र्धूपः कुन्तलधोरणीषु सुदृशः सायन्तनो दृश्यते ॥१०८॥

---

आस्यमिति। "नायकः सखायं प्राह" इति केचित्, स्वयमेव परामृशतीति युक्तम्। मुखस्य परोक्षत्वे हास्याभावप्रत्यक्षमपि न स्यादत इदमिति। लास्येन भङ्गिविशेषेण, येन नृत्यदिव वाक्यं भासत इत्यर्थः। स्वानवेक्षणवारणाय नेत्रमिति। तदपि कान्तायाः कोप-

वैशिकं विभजते-त्रैशिक इति। तुकारोऽप्यर्थः पत्युपपतीव वैशिकोऽपि त्रिधा भवतीत्यर्थः। उत्तमं लक्षयति–दयिताया इति। भूयः मुहुर्मुहुः प्रकोपेऽपि क्रुद्धायां सत्यामपि उपचारपरायणः शुश्रूषानिरतः प्रसादनपरो वा उत्तम इत्यर्थः। तमुदाहरति-चक्षुरिति। पक्ष्मलदृशः पक्ष्मले दृशौ यस्याः। सुलोचनाया इत्यर्थः। चक्षुःप्रान्तं नेत्रकोणं कटाक्षमितियावत्। शोणारविन्दश्रियं रक्तकमलच्छविम् उदीक्ष्य आलोक्य कान्तः दयितः तद्भिया उच्चैः न जल्पति दीर्घस्वरेण न भाषते, स्मितं मन्दहास्यं न वितनुते वीटीं ताम्बूलं वा न गृह्णाति दातुमिति शेषः। किन्तु तल्पोपान्तं शय्यासमीपम् उपेत्य गत्वा पुलकैः रोमाञ्चैः भ्राजन्ती समुल्लसन्ती कपोलयोः गण्डयोः द्युतिः कान्तिः यस्यैवं भूतः सन् आनतेन नम्रेण शिरसा मस्तकेन उपलक्षितः सन् केवलं मुक्तास्रजं मुक्तावलीं गुम्फति ग्रन्थाति। लुप्तोपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥१०७॥

मध्यमं लक्षयति—प्रियाया इति। प्रियायाः प्रकोपे तस्यां क्रुद्धायां यः स्वं प्रकोपमनुरागं वा न प्रकटयति तस्याः चेष्टया मनोभावं गृह्णाति तद्व्यापारैस्तदाशयं वेत्ति स मध्यम इति भावः। उदाहरति—आस्यमिति। यद्यपि इदं लक्ष्यभूतं नायिकाया आस्यं वदनं हास्यवर्जितं हासरहितं क्रुद्धत्वाद् गम्भीरमिति भावः अस्तीति शेषः। वचः वाक्यं लास्येन विच्छित्तिविशेषेण "लस श्लेषणक्रीडनयोः" धातोर्ण्यत्। हीनं वर्जितमस्ति। नेत्रं शोणसरोजस्य रक्तकमलस्य कान्तिरिव कान्तिर्यस्य तत्। तदपि तथापि क्षणं किञ्चित्कालं क्वापि कुत्रचित् स्थीयताम्

भयकृपालज्जाशून्यः कामक्रीडायामकृतकृत्याकृत्यविचारोऽधमः। यथा––

उदयति हृदि यस्य नैव लज्जा
न च करुणा न च कोऽपि भीतिलेशः।
वकुलमुकुलकोशकोमलाभां
पुनरपि तस्य करे न पातयेथाः॥१०९॥

---

सत्त्वेऽपि, क्षणमल्पकालमभिव्याप्य। क्वापि सन्निहितदेशे स्थीयतां मयेति शेषः। प्राप्तकाले लोट्। स्थितिरुचितेति भावः। कोपसत्त्वेऽत्र स्थितिर्वृथेत्यत आह––मालाया इति। कर्मणि षष्ठी। अन्यार्थमपि तत्सम्भवादाह-मकरिकेति। कुचयोराभोगो विस्तारः। विस्तारविशिष्टयोः कुचयोरिति यावत्। कृदभिहितो भाव इति न्यायात्। अम्भोजयोरिति क्वचित्पाठः,। धूपः संस्कारः। कुन्तलधोरणीसु केशसङ्घातेषु, अवान्तरसङ्घानादाय बहुत्वम्। सम्भोगार्थत्वनिर्णयाय सायन्तन इति। उक्तसत्त्वेऽपि कोपं न कुर्यादतः सुदृश इति। केचित्तु "नायकः प्रियां प्राह। आस्यमिति, पूर्ववदर्थः, क्वापि मद्रूपे देशे नेत्रं स्थिरीक्रियताम्। णिजर्थान्तर्भावेन व्याख्यानात्, अन्यथा सुदृशस्तव दृश्यमानमिदं स्रगारम्भादि व्यर्थं स्याद्" इत्याहुः॥१०८॥

**उदयतीति**। परस्मैपदं व्याख्यातम्। लज्जाकार्यमात्रवारणाय हृदीति। स्वरूपेणापि न लज्जोदय इति भावः। तथापि त्वदनुरोधादेव विप्रियं न कुर्यादत आह––न च करुणेति। भूयो विप्रियावृत्तौ अस्या बहुकष्टं माभूदिति ज्ञानमपि नास्तीत्यर्थः, त्वद्भयादेव तथा न कुर्यादतो न चेति। कमपराधलवं मम पश्यसीत्यादिवद्भीतिलेशनिषेधे महाभीतिलाभः स्यात्, विशेषणाभावेनापि विशिष्टाभावनिर्वाहात्, अतः कोऽपीति। तथा च भयत्वस्यैवाभावप्रतियोगितावच्छेदकत्वलाभः, शब्दाधिक्यात्, सर्वभीतिनिषेधे भीतिसामान्यभावपर्यवसानादिति भावः। वकुलस्य मुकुलाः कोरकास्तेषां कोशोऽन्तर्भागस्तद्वत्कोमलामिति। तत्कृतानेकविप्रियकदर्थनासहिष्णुत्वं व्यङ्ग्यम्। "मुकुला एव कोशाः

**मानी चतुरश्च शठ एवान्तर्भवति।**

सौरभ्यनिधानत्वाद्" इत्यन्ये। निपातयेथा इति णिचश्चेत्यात्मनेपदम्। पूर्वं तत्स्वभावानवबोधनात्। पुनरपीति। तस्य करेत्यादि लोकोक्तिः, तदधीनां न कुर्या इति भावः॥१०९॥

स्यादेतत्। उपेक्षापि तावन्मानत्यागोपायत्वेन प्रागुक्ता। तत्प्रयोक्तुर्नायकस्य कुत्रान्तर्भावः, अनुकूलदक्षिणयोस्तावन्न तत्सम्भवः, विप्रियस्य तत्रानभिधेयत्वात्। न धृष्टे, गतभयत्वाभावात्, सामादेः प्रयुक्तत्वात्, स्वापराधाभ्युपगमाच्च। नापि शठे, उपेक्षणीयनायिकायां नायिकान्तरापेक्षया प्रेमापकर्षाभावात्।

एवं नायिकावद् वाग्वैदग्ध्यं क्रियावैदग्ध्यं च नायकेऽप्यस्ति। सोऽप्यवान्तरभेदः स्यादत आह—**मानी चतुरश्चेति। शठ एवेति।** "अत्रान्तर्भवत्येवेत्यन्वयादत्यन्तायोगव्यवच्छेद एवकारार्थः। अन्यथा,

स्थातव्यं मयेतिशेषः। प्रतीक्षा कर्तव्येति भावः। यतोऽस्याः **सुदृशः** सुलोचनायाः **सायन्तनः** सायंकालीनः **मालायाः** स्रजः **करणोद्यमः** रचनोद्योगः **कुचाभोगयोः** विशालयोः स्तनयोः **मकरिकारम्भः** पत्ररचनोपक्रमः **कुन्तलधोरणीषु** केशसमूहेषु **धूपः** सुरभिसंस्कारो **दृश्यते**। लुप्तोपमा निदर्शना चालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥१०८॥

अधमं लक्षयति—**भयेत्यादि।** नायिकातो भयं विश्रब्धाया वञ्चने कृपा, कुत्सिताचरणाल्लज्जा ताभिः **शून्यः** रहित इति यावत्। **कामक्रीडायां** रतिकेलिविषये **अकृतः** न विहितः **कृत्यस्य** कर्तुं योग्यस्य **अकृत्यस्य** अकरणीयस्य च **विचारो** येन स **अधम** इत्युच्यत इति शेषः। भयादिरहितत्वे सति सम्भोगे कर्तव्याकर्तव्यविवेकहीनत्वमधमत्वमिति भावः।

तमुदाहरति—**उदयतीति।** **यस्य** नायकस्य **हृदि** चित्ते **लज्जा** त्रपा **नैव उदयति** नोद्भवति सागः सन्नपि यो न लज्जते इति भावः। **न च करुणा** दया च नोदयतीति शेषः। विश्रब्धायामपि मयि यो न दयते इत्यर्थः। **न च कोऽपि** किंचिन्मात्रमपि **भीतिलेशः** त्रासलवः अस्ति **तस्याधमस्य करे** हस्ते **पुनरपि** भूयोऽपि **वकुलमुकुलस्य** केसरकुड्मलस्य यः **कोशः** मध्यभागः तद्वत् **कोमलां** मृद्वीं **मां न पातयेथाः** तदधीनां न कुर्या इति नायिकया सख्यनुरुध्यते। काव्यलिङ्गोपमयोः संसृष्टिरलङ्कारः। पुष्पिताग्रा वृत्तम्॥१०९॥

मानी यथा—

बाह्याकूतपरायणं तव वचो वज्रोपमेयं मनः
श्रुत्वा वाचमिमामपास्य विनयं व्याजाद्बहिःप्रस्थिते ।
प्रातर्वीतविलोकने परिहृतालापे विवृत्तानने
प्राणेशे निपतन्ति हन्त कृपणा वामभ्रुवो दृष्टयः ।।११०।।

---

दक्षिणस्यापि मानित्वचातुर्यवत्त्वादसङ्गतिप्रसङ्गाद्" इति केचिद् व्याचख्युः। न चैवं। मानिनो दक्षिणत्वानुपपत्तेः। मानिनः शठ एवान्तर्भाव इत्यन्ययोगव्यवच्छेदपरत्वम्, चतुरांशे त्वत्यन्तायोगव्यवच्छेदपरत्वमिति वैदग्ध्यापत्तिरिति वाच्यम्; अर्थानुरोधादगत्या तस्यासह्यत्वात्। न च दक्षिणस्यापि नायिकाविप्रियकारित्वेन ज्ञायमानत्वदशायां मानित्वं सम्भवत्येवेति वाच्यम्; भ्रमसम्भवेऽपि तस्याप्रयोजकत्वात्। विप्रियमन्यत्र गूढमाचरतीत्यादिना वस्तुगर्भस्यैव लक्षणत्वात्। न च विप्रियाचरणेऽपि नायिकया तदज्ञानदशायां शठत्वव्यवहारविरहात् विप्रियकारित्वेन तया ज्ञायमानत्वमेव लक्षणमिति वाच्यम्; नायिकामात्रविदितविप्रियकारीत्यादिप्राचीनलक्षणविरोधात्, स्वभावभेदेन नायके भेदो न त्ववस्थाभेदेनेति ग्रन्थकारेण वक्ष्यमाणतया तद्विरोधाच्चेति बहुज्ञैरूहनीयम् ।।

**बाह्येति**। "तव यत्प्रातःकालीनं वचनमधुनैवागमिष्यामीत्यादिरूपम्" इति केचित्। तन्न। प्रातरित्यस्यात्यन्तव्यवहितत्वात्। "प्रातः कार्यस्य व्याजाद्" इति केचित्, तदप्यसत्, पूर्वार्धे शेषैकपदस्योत्तरार्द्धगतत्वापत्तेः। एतेन "प्रातः प्रस्थिते सति" इत्यपि केषांचिद्व्याख्यानमपास्तम्।

बाह्यमारोपितं यदाकूतं प्रेम तत्र परायणं तद्बोधनपर्याप्तं वचनमात्रेण मयि प्रीतिः प्रकाश्यते परमार्थतोऽन्यत्रैव तत्सत्त्वात्, तदाह‍वज्रोपमेयमिति। मद्विषयकानुरागराहित्यरूपकाठिन्यवत्त्वात्। अत्र सामाद्यनन्तरकालत्वं स्पष्टम्। इमामुक्तरूपां नायिकाया वाचं श्रुत्वा विनयमनुनयमपास्य ततो निवृत्तिं प्राप्येति यावत्। व्याजात्किञ्चि-

**वाक्चेष्टाव्यङ्ग्यसमागमश्चतुरः । तत्र वचनव्यङ्ग्य-समागमो यथा——**

**तमोजटाले हरिदन्तराले काले निशायास्तव निर्गतायाः ।**
**तटे नदीनां निकटे वनीनां घटेत शातोदरि कः सहायः ॥ १११॥**

---

त्कार्यकपटात् बहिः केलीगृहात्प्रस्थिते गते। उपेक्षाया एव प्राप्तकालत्वात्। प्रातर्द्वितीयदिनारम्भे, वीतं त्यक्तं विलोकनं नायिकाविषयकदर्शनं येन। एतेनालापोऽपि व्याख्यातः। न केवलमौदासीन्यं किन्तूपेक्षापीत्याह——विवृतानने इति। कृपणा दीनाः। यदुक्तम्——

अधःस्रस्तोत्तरपुटा छन्नतारा जलाविला।
मन्दसञ्चारिणी दृष्टिर्दीनेति परिकीर्तिता॥

तथा च स्वकृतनायकप्रत्याख्यानानुतापात्क्रोधनिवृत्तिर्व्यङ्ग्या, ततश्च तदुपभोगसौलभ्यम्॥११०॥

**तम इति।** दिनवारणाय निशाया इति। राहोः शिर इतिवदभेदे षष्ठी, शुक्लवारणाय तम इति। घनत्वसूचनाय जटाल इति। हरितां दिशाम् अन्तराले इत्येकत्वेन दिग्विभागानवबोधसूचनम्, अवस्थाने सहायानपेक्षणात्, निर्गताया इति, मार्गस्य सुगमत्वनिषेधाय तट इति। भयहेतुमप्याह——निकट इति। स्वयमसामर्थ्यवारणाय शातोदरीति। तथा च नदीतीरनिकुञ्जेऽहं प्रथमतो गमिष्यामि तत्राहमेव सहायो भविष्यामीति भावः॥१११॥

मानिचतुरयोः पृथङ्निरूपणमयुक्तमित्याह—मानीति। मानिनमुदाहरति——**बाह्येति।** तव वचः वाक्यं **बाह्यं** बहिर्भवं **यदाकूतम्** अभिप्रायः तत्र **परायणं** निरतं कृत्रिमानुनयपरं विद्यत इति भावः। **मनः** चित्तं च तवेति शेषः **वज्रेण** कुलिशेन **उपमेयं** उपमातुमर्हम्। इमां नायिकोक्तां वाचं श्रुत्वा **विनयम्** अनुनयम् **अपास्य** विहाय **व्याजाद्** केनापि मिषाद् **बहिः प्रस्थिते** केलीगृहान्निर्गते **प्राणेशे** दयिते **प्रातः** प्रत्यूषे **वीतं** त्यक्तं **विलोकनम्** ईक्षणं येनैवंभूते **परिहृतं** विसृष्टम् **आलापं** भाषणं येन, **विवृतं** विवलितं **आननं** मुखं च येन तादृशे **वामभ्रुवः** कुटिलेक्षणाया **दृष्टयः** ईक्षणानि **कृपणाः** दीनाः सत्यो **निपतन्ति हन्त** इति खेदे। काव्यलिङ्गं परिकरश्चालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥११०॥

**चेष्टाव्यङ्ग्यसमागमो यथा—**

**कान्ते कनकजम्बीरं करे किमपि कुर्वति।**
**आगारलिखिते भानौ विन्दुमिन्दुमुखी ददौ ॥११२॥**

---

**कान्त इति।** कनकमयजम्बीराकारं फलं किमपि केनचित्प्रकारेण क्रीडादिमिषेण करे कुर्वति स्थापयति सति। स्तनस्पर्शाभिप्रायेणेति भावः। गृहलिखिते भानौ इन्दुमुखी विन्दुं प्रत्याख्यानसूचकं ददौ, सूर्यास्तमये आवयोः सङ्गमो भविष्यतीतिभावः।

"भानौ सूर्ये विन्दुं कलङ्कज्ञापकं तेन चन्द्रोदयः सङ्केतकाल" इत्यन्ये, स्यादेतत्। चेष्टाव्यङ्ग्यसमागमनायकस्य नेदमुदाहरणं युक्तं नायिकाचेष्टयैवात्र समागमकालप्रतीतेर्वैपरीत्यादिति भावः। नहि चेष्टाव्यङ्ग्यत्वं समयविशेषणम्, किन्तु समागमस्यैव, स च कनकजम्बीरकर्मककरग्रहणादेव लभ्यते। नायिकावयवकुचतादात्म्याध्यवसितस्य फलस्य स्वावयवकरसंयोगेन द्वयोः समागमस्याक्षेपात्। ततश्च नायिकाया तत्समयपरिच्छेदव्यञ्जनेऽपि न क्षतिः ॥११२॥

चतुरं लक्षयति—**वागिति। वाक्** वचनं **चेष्टा** व्यापारः ताभ्यां **व्यङ्ग्यः** व्यञ्जनीयः **समागमः** सम्भोगः यस्य स **चतुर** इत्युच्यते। वचनव्यापारान्यतरद्योत्यसमागमत्वं चतुरत्वमित्यर्थः। तत्र प्रथममुदाहरति—**तत्रेति। तम इति। हे शातोदरि! कृशमध्ये! निशायाः काले** रात्रावित्यर्थः, **हरितां** दिशाम् **अन्तराले** मध्ये तमांस्येव जटाः सन्त्यस्मिन्निति **तमोजटाले** तिमिरसमूहावृते, "प्राणिस्थाद्" इति मत्वर्थे लच् प्रत्ययः। **निर्गतायाः** गृहान्निःसृतायाः **तव** नायिकायाः **नदीनां तटे** सरितां कूले **बनानां** काननानां **निकटे** समीपे च **सहायः** सहचरो रक्षको वा **कः घटेत** को भवेत्। तत्र प्रथमतः उपस्थितोऽहमेव त्वया रंस्ये इति वचनव्यङ्ग्यसमागमः। रूपकानुप्रासावलङ्कृती। उपजातिर्वृत्तम् ॥१११॥

द्वितीयमुदाहरति—**चेष्टेति। कान्त इति। कान्ते** दयिते **किमपि** केनापि व्याजेनेति भावः **कनकजम्बीरं** स्वर्णजम्बीरफलं स्तनस्पर्शाभिप्रायसूचकमित्यर्थः। **करे कुर्वति** हस्ते धारयति सति **इन्दुमुखी** चन्द्रानना **आगारलिखिते** गृहभित्तौ चित्रिते **भानौ** सूर्यविम्वे **बिन्दुं** शून्यचिह्नं **ददौ** लिलेख। सूर्यास्तकालं समसूचयदिति भावः। सूक्ष्मालङ्कारः। पथ्यावक्त्रं च वृत्तम् ॥११२॥

**प्रोषितः पतिरुपपतिर्वैशिकश्च भवति। अत्र क्रमेणोदाहरणानि—**

**ऊरू रम्भा दृगपि कमलं शैवलं केशपाशो**
**वक्त्रं चन्द्रो लपितममृतं मध्यदेशो मृणालम्।**
**नाभिः कूपो वलिरपि सरित् पल्लवः किन्तु पाणि-**
**र्यस्याः सा चेदुरसि न कथं हन्त तापस्य शान्तिः॥११३॥**

---

**प्रोषित इति।** पत्यादयस्त्रयोऽपि प्रोषिता भवन्तीत्यर्थः। यत्तु "उषदाहे इत्यस्य प्रोषित इति रूपमुपसर्गवशादर्थान्तरम्" इति केनचिदुक्तम्, तद्भ्रान्त्या। वसतेर्निष्ठायां संप्रसारणे तद्रूपस्य स्फुटत्वात्। **ऊरू इति।** ऊरुपदमेकवचनान्तमेव व्याख्येयम्। उपमानोपमेययोर्वचनैक्यस्य सम्भवतस्त्यागायोगात्। "पाशः पक्षश्च हस्तश्च कलापाद्याः कचात्परे" इत्यमरः। केशार्थकशब्दोत्तरवर्तिनः पाशादयः शब्दाः कबरीवाचका इत्यर्थः।

वृत्तत्वदैर्घ्ये असितत्वरूपे माधुर्यसूक्ष्मत्वगभीरभावाः।
तिर्यक्प्रसारोऽरुणता क्रमेण सर्वेषु साधारणमत्र शैत्यम्॥

इति विवेकः। यस्या इत्यस्य सर्वत्रान्वयः, सा चेदुरसि हृदये नास्ति

अथ प्रोषितत्वेन पत्यादीन् पुनर्विभजते—**प्रोषित इति।** प्रोषितपतिः प्रोषितोपपतिः, प्रोषितवैशिकश्चेति त्रयः प्रकारा इति भावः। **क्रमेणेति।** प्रोषितं पतिमुदाहरणमुखेन दर्शयति—**ऊरू इति। यस्याः** प्रेयस्याः **ऊरू** जङ्घे **रम्भा** कदली, **अपि च दृक्** नेत्रं **कमलं, केशपाशः** धम्मिल्लः **शैवलं** जलनीली, **वक्त्रं** मुखं **चन्द्रः, लपितम्** उक्तिः **अमृतं** सुधा **मध्यदेशः** कटिभागः **मृणालं** बिसं सूक्ष्मत्वात् **नाभिः कूपः** उदपानं, **वलिः** मध्यरेखा **अपि च सरित्** नदी दैर्घ्यादित्यर्थः। **किञ्च पाणिः** करः **पल्लवः** किसलयम्, एतत्सर्वमेव शीतलं तापशामकं च यस्या अस्तीति शेषः। **सा चेद्** यदि **उरसि** हृदये ममेति शेषः। **हन्त!** खेदे **तापस्य** संज्वरस्य **शान्तिः** शमनं **कथं न** भवति। सन्तापेन प्रोषितत्वं तदेकनिष्ठतया स्वीयायाः पतित्वं च व्यज्यते। अतिशयोक्तिः समुच्चयश्चालङ्कारः। मन्दाक्रान्ता च वृत्तम्॥११३॥

यान्त्या सरः सलिलकेलिकुतूहलाय
व्याजादुपेत्य मयि वर्त्मनि वर्तमाने।
अन्तस्मितद्युतिचमत्कृतदृक्तरङ्गै-
रङ्गीकृतं किमपि वामदृशः स्मरामि॥११४॥

अधृतपरिपतन्निचोलबन्धं
मुषितनकारमवक्रदृष्टिपाते।
प्रकटहसितमुन्नतास्यबिम्बं
पुरसुदृशः स्मरचेष्टितं स्मरामि॥११५॥

---

तर्हि तापस्य शान्तिः कथं भवतु। कारणाभावे कार्यानुदयस्य युक्तत्वात् यद्वा सा चेदुरसि स्यात्तर्हि तापशान्तिः कुतो न स्यादित्यापत्तिपरतया योज्यम्। आपादकस्य स्वतोऽसिद्धत्वनियमात्। तस्या हृदयगतत्वाभावप्रयुक्तो मे तापशान्त्यभाव इति प्रोषितत्वं सिद्धम्। नायिकायाः स्वीयात्वं तु तात्पर्यगम्यम् ॥११३॥

**यान्त्या इति।** सलिलकेलिर्जलक्रीडा तद्रूपकूतूहलमनुभवितुमित्यर्थः। व्याजागमनेनोपपतित्वलाभः। केचित्तु "वामदृशो व्याजात् स्त्रीरूपेण" इत्याहुः, अन्तर्गूढा स्मितद्युतिर्यत्रेति क्रियाविशेषणम्। यद्वा स्मितद्युतिभिश्चमत्कृतैर्मनोहारिभिर्दृशां तरङ्गैर्विक्षेपविशेषैः किमपि पार्श्ववर्तिजनान्तरज्ञानविषयत्वं यथा न स्यात्, अङ्गीकृतं मदुपभोगानुमतिं स्मरामीति प्रोषितत्वसूचनम् ॥११४॥

**अधृतेति।** स्थितस्य धारणानर्हत्वात्पतदिति, एकदेशमात्रपातवारणाय परीति। बन्धो ग्रन्थिः। मुषितश्चोरितो नकारो यत्र, तदु-

---

प्रोषितमुपपतिं दर्शयति—**यान्त्या इति। सलिलकेलिकुतूहलाय** जलक्रीडाकौतुकाय **सरः** तडागं **यान्त्याः** गच्छन्त्याः **वामदृशः** सुनयनायाः **वर्त्मनि** पथि **व्याजात्** केनापि मिषेणेत्यर्थः। **उपेत्य** आगत्य **वर्तमाने** स्थिते इति यावत्। **मयि** मध्येमार्गं मय्युपस्थिते सतीतिभावः। **चमत्कृतदृक्तरङ्गैः** सविच्छित्तिकटाक्षनिःक्षेपैः **अन्तःस्मितद्युति** अन्तः अभ्यन्तरे स्मितस्य मन्दहासस्य द्युतिर्यत्र तद्यथा स्यात्तथा **किमपि** अनिर्वचनीयं वस्तु यत् **अङ्गीकृतं** स्वीकृतं तत् **स्मरामि** चिन्तयामि। अत्र स्मरणेन प्रोषितत्वं व्याजोपस्थित्या चोपपतित्वं व्यज्यते। काव्यलिङ्गमलङ्कराः। वसन्ततिलका च वृत्तम् ॥११४॥

**अनभिज्ञो नायको नायकाभास एव। यथा--**

**शून्ये सद्मनि योजिता बहुविधा भङ्गी वनं निर्जनं**
**पुष्पव्याजमुपेत्य निर्गतमथ स्फारीकृता दृष्टयः।**
**ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्षोरुहौ**
**एतेनापि न वेत्ति दूति कियता यत्नेन स ज्ञास्यति ॥११६॥**

---

च्चारणराहित्यात्। मुषितपदं तादृशस्थले नकारप्रयोगप्रसक्तिसूचनाय। अवक्रो नायकमुखापेक्षवैमुख्यहीनो दृष्टिपातो यत्र, तदभिमुखत्वात्। प्रकटं हसितं यत्र, किञ्चिदुद्वृत्तत्वात्। उन्नतमधोदृष्टित्वहीनमास्य-बिम्बं मुखमण्डलं यत्र। लज्जाविरहः सर्वत्र हेतुः। पुरसुदृशो वेश्यायाः स्मरचेष्टितं सुरतसमयव्यापारम्। स्मरामीति संस्काराधायकत्वादनु-पेक्षात्मकज्ञानविषयत्वं व्यज्यते ॥११५॥

**अनभिज्ञ इति।** कामिनीहृदयाभिप्रायज्ञानशून्य इत्यर्थः। नायक-वदाभासते नायकाभासः, पुरुषत्वेन तद्वत्प्रतीतेः। एवकारो नायकाभाव-सूचनार्थः, कालज्ञस्यैवात्र नायकत्वाङ्गीकारात्। अतस्तस्य नायक-भेदेष्वपरिगणनान्न न्यूनत्वमित्यर्थः। तमुदाहरति--**शून्य इति।** एतेन रत्यर्हस्थानलाभः, एकचेष्टाया व्यासङ्गादपि ज्ञानं न स्यादतो बहु-विधेति। वस्तुतः कामिनीजिज्ञासाया ज्ञानमात्रप्रतिबन्धकत्वादेकभङ्गि-ज्ञानाभावेऽप्यनभिज्ञत्वम्। उक्तरीत्या तु तदुत्कर्ष इतिभावः। गृहे जनान्तरागमनशङ्कया तेन तच्चेष्टितमज्ञातप्रायं कृतं स्यादित्यत आह--वनमिति। निर्गतमिति भावे क्त प्रत्ययः। तत्रापि स्वभिन्ननायकोद्देशेन गमनशङ्का स्यादत आह--अथेति। अनन्तरं दृष्टयः स्फारीकृताः, तद्विषयत्वं स्वानुरागस्य ज्ञापयितुमित्यर्थः। अनन्यथासिद्धां चेष्टामाह--ताम्बूलेति, कामशास्त्रे--"ताम्बूलाद्युपयुक्तवस्तु पुरतो धत्ते प्रियस्य स्वयम्" इति। व्यक्तौ चेति। दर्पणे--

काञ्चीकुण्डलसंव्यानसंयमव्यपदेशतः।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत्स्फुटम् ॥

काञ्च्यादिस्थले बाहुमूलादिप्रकाशनस्यैवानुरागव्यञ्जकत्वम्, अत्र तु ताम्बूलानयनस्यापीति विशेषः। स्फुटमन्यत् ॥११६॥

**न च नायिकाया इव नायकस्यापि ते भेदाः सन्त्विति वाच्यम्; तस्या अवस्थाभेदेन भेदस्तस्य स्वभावभेदेन इति विशेषात् । अनुकूलत्वं दक्षिणत्वं धृष्टत्वं शठत्वमिति**

---

ननूक्तादयो भेदा नायकस्यापि भवन्त्वित्याशङ्कते—**न चेति**। अवस्थाभेदेनेति। प्रागेव व्याख्यातम्। अनुकूलत्वादिभिः स्वभावनियतै-रेवोपाधिभिर्नायकस्य भेदा न त्ववस्थाभेदेनेत्यर्थः। स्वभावाद्भिन्नस्या-प्यवस्थाभेदात्पुनर्भेदोऽस्त्वित्यत आह—तुल्येति। अन्यसम्भोगचि-ह्निता नायिका यस्य समीपमायाति स खण्डित इत्यादि रीत्या तद्भेदोप-गमे नायिकाया अन्यविषयकरतिवर्णनस्यानौचित्यापत्तेः। तदुक्तं

प्रोषितं च वैशिकं दर्शयति—**अधृतेति**। **अधृतः** अनवलम्बितः अत एव **परिपतन्** अवस्रंसमानः **निचोलबन्धः** उत्तरीयग्रन्थिर्यत्र। "निचोलः प्रच्छदपटः" इत्यमरः। **मुषितः** चोरितः **नकारः** 'न' इतिशब्दो यत्र। **अवक्रः** अकुटिलः **दृष्टिपातः** ईक्षणमितियावत्, यत्र, **प्रकटं** स्फुटं **हसितं** यत्र **उन्नतं** उद्गतं **आस्यबिम्बं** मुखमण्डलं यत्र एवंभूतं **पुरसुदृशः** नगरविलासिन्याः **स्मरचेष्टितं** कामविजृम्भितं **स्मरामि** भावयामि। अत्रापि काव्यलिंगमलङ्कारः पुष्पिताग्रा च वृत्तम्॥११५॥

अथ नायकाभासं लक्षयति—**अनभिज्ञ इति**। **अनभिज्ञः** सङ्केतचेष्टां नाभि-जानातीत्येवंविधो **नायकः** **नायकाभास एव** नायकवदाभासते न तु नायको भवतीत्यर्थः। तमुदाहरति—**शून्य इति**। मया **शून्ये** रिक्ते **सद्मनि** गृहे **बहुविधा** विविधप्रकारा **भङ्गी** चेष्टाविशेषः **योजिता** विहिता। **पुष्पव्याजमुपेत्य** कुसुमावच-यमिषमभ्युपगम्य **निर्जनं** लोकरहितं **वनं** कान्तारं **निर्गतम्**। तमादायाहं जन-सञ्चाररहिते दूरकानने गतेत्यर्थः। **अथ** अनन्तरं **दृष्टयः** **स्फारीकृताः** निर्लज्जयेव सततदृष्ट्या स दृष्ट इत्यर्थः। **ताम्बूलस्य** वीटिकाया **आहरणच्छलेन** ग्रहणव्याजेन **वक्षोरुहौ** स्तनौ **व्यक्तौ** प्रकटीकृतौ, एतेनापि इयतीभिरपि चेष्टाभिः **स न वेत्ति** मदभिप्रायं नाभिजानाति। हे **दूति**! तदा **कियता यत्नेन** केनोद्यमेन **ज्ञास्यति** वेत्स्यति। विशेषोक्तिरलङ्कारः, शार्दूलविक्रीडितं वृत्तम्॥११६॥

अथ नायिकावन्नायकस्याप्यवस्थाकृतभेदानाशङ्क्य तत्खण्डनं करोति-**न चेति**। **नायिकाया इव नायकस्यापि ते** प्रोषितपत्नीकत्वादयोऽष्टौ **भेदाः** सन्तु इति न **वक्तव्यम्**। **तस्याः** नायिकाया **अवस्थाभेदेन** दशाभेदेन **तस्य** नायकस्य तु

**चत्वार एव नायकस्य भेदाः स्वभावादिति। अन्यच्च अवस्थाभेदेन यदि नायकस्य भेदः स्यात्तदोक्तविप्रलब्ध-खण्डितादयोऽपि भेदाः स्वीकर्तव्याः स्युः। तथा च सङ्केत-व्यवस्थायां स्त्रीणामनागमने चासम्प्रदायादसमागमशङ्का-धूर्तत्वं वान्यसम्भोगचिह्नितत्वं वा नायकानां न तु नायिकानां ताः प्रति तदुद्भावने रसाभासापत्तेरिति।**

---

ध्वनिकृता——

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धो हि रसस्योपनिषत्परा।। इति।।

अत्र केचित्——"अनौचित्यरसप्रसञ्जकभेदानङ्गीकारेऽपि तदन्यभेदा-नङ्गीकारे प्रमाणाभावः। अत एव प्रोषितत्वं स्वयमेवोक्तम्" इति। तदसत्, प्रोषितप्रियाकत्वस्यैव प्रोषितभर्तृकास्थानीयत्वात्, तस्य चात्रानुपयुक्तत्वात्। एतेन वासकसज्जास्थानीयभेदोऽपि प्रत्युक्तः। विरहोत्कण्ठितत्वमप्यनौचित्यादेव निरस्तम्, स्वाधीनप्रियाकत्वमपि न युक्तं प्रियायाः स्वानधीनत्वे रसाभासत्वस्यैव प्रसङ्गात्। कल-हान्तरितत्वमपि तथा। कृतापराधनायिकाप्रयुक्तानुनयापेक्षाया विना प्रियाया अन्यसङ्गमानुपपत्तेः। तथाचानौचित्यानापादकभेदस्याप्रसिद्ध-त्वात्। भरतादिभिरप्यत एव तदनुक्तेरित्यलमाकरानभिज्ञैः सह संवा-देनेति दिक्।।

**स्वभावभेदेन** नैसर्गिकधर्मभेदेनेत्यर्थः। स्वभावो न परिवर्तनशीलोऽवस्थास्तु समयानुरूपं परिवर्तन्त इति भावः। स्वाभाविकभेदत्त्वं गणयति——**अनुकूलत्वमिति**। पूर्वं स्पष्टीकृतम्। तदनभ्युपपत्तावापत्तिं दर्शयति——**अन्यच्चेति**। उत्कत्वादेर-वस्थाप्रयोज्यत्वादित्यर्थः। स्पष्टम्। स्वीक्रियन्तां तेऽपि भेदाः का तत्र हानिस्तत्राह——**तथा चेति**। **सङ्केतव्यवस्थायां** सङ्केतकालातिक्रम इत्यर्थः। **सम्प्रदायात्** गुरुपर-म्परोपदेशात् ***अन्यसमागमस्य*** अन्यसम्भोगस्य शङ्का धूर्तत्वादयश्च नायकानामे-वेत्यादि समञ्जसायां स्पष्टीकृतम्।

**तेषां नर्मसचिवः पीठमर्दविटचेटविदूषकभेदाच्चतुर्धा। कुपितस्त्रीप्रसादकः पीठमर्दः। यथा--**

**कोऽयं कोपविधिः प्रयच्छ करुणागर्भं वचो जायतां**
**पीयूषद्रवदीर्घिकापरिमलैरामोदिनी मेदिनी।**
**आस्तां वा स्पृहयालु लोचनमिदं व्यावर्तयन्ती मुहु-**
**र्यस्मै कुप्यसि तस्य सुन्दरि तपोवृन्दानि वन्दामहे ॥११७॥**

---

**नर्मेति**। क्रीडासहाय इत्यर्थः। तथा च विद्यानाथः--

"एषां नायिकानुकूलने पीठमर्दविटचेटविदूषकाः सहायाः।
किंचिदूनः पीठमर्दः एकविद्यो विटः स्मृतः।
सन्धानचतुरश्चेटो हास्यप्रायो विदूषकः॥"

दर्पणे तु--"दूरानुवर्तिनि स्यात्तस्य प्रासङ्गिके निवृत्ते तु।
किंचित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः॥

यथा रामादीनां सुग्रीवादयः।

शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः।
भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः॥

आदिना मालाकाररजकताम्बूलकगान्धिकादयः।

सम्भोगहीनसम्पद् विटस्तु धूर्तः कलैकदेशज्ञः।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥

चेटः प्रसिद्धः।

अथ शृङ्गारे नायकसहायानाह—**तेषामिति**। **तेषां** नायकानां **नर्मसचिवः** नर्मणि क्रीडायां नरणम् इति नृ नये धातोः मनिन् "क्रीडा खेला च नर्म च" इत्यमरः। **सचिवः** सहायः, पीठमर्दादिभेदाच्चतुर्विध इत्यर्थः।

पीठमर्दं लक्षयति—**कुपितेति**। **कुपिता** मानिनीत्यर्थः। या **स्त्री** नायिका तस्याः **प्रसादकः** अनुकूलयितेतिभावः। पीठमासनं मर्दयति संवाहयतीति पीठमर्दः। तमुदाहरति—**कोऽयमिति**। हे **सुन्दरि**! सुभगे! **अयम्** एष तवेतिशेषः **कोपविधिः** मानप्रकार इतियावत्। **कः** कीदृशः, नोचित इति भावः। **करुणा** दया **गर्भे** मध्ये यस्य तादृशं **वचः** वाक्यं **प्रयच्छ** देहि। **मेदिनी** पृथ्वी **पीयूषद्रवदीर्घिकायाः** त्वद्वचः-

**कामतन्त्रकलाकोविदो विटः। यथा—**

**आयातः कुमुदेश्वरो विजयते सर्वेश्वरो मारुतो**
**भृङ्गः स्फूर्जति भैरवो न निकटं प्राणेश्वरो मुञ्चति।**

---

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेपभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ।।

पीठमर्दः स्वकल्पितवाग्भिः स्त्रियं समाधत्ते विटस्तु कामशास्त्रोक्तोपायेनेति भेद इत्यन्ये ।।

**कोऽयमिति।** अयमित्यसिद्धिनिरासः, विधिरित्यावृत्तिलाभः। करुणा गर्भेऽन्तर्गता यस्य तत्। "गर्भो यस्येति" केचित्। नायकविषयकानुग्रहप्रकाशकमिति यावत्। पीयूषेति माधुर्यं द्रवेत्यनतिकष्टगम्यत्वं वाहिनीत्यविच्छेदो विलासश्चेति व्यङ्ग्यम्। परि समन्तान्मलैः सम्बन्धैः आमोदिनी सन्तोषयुक्ता, "आमोदो हर्षगन्धयोः" इति विश्वः। मेदिनीपदं जनपरम्, प्रसङ्गादस्मदादीनामपि भावगम्भीरवचनविशेषाकर्णनेन कृतार्थत्वं भवत्विति भावः। "आस्तां वेत्यत्र कोप" इति केचित्। "मदुक्तम्" इत्यन्ये। कोपत्याग इति तु रहस्यम्। वक्ष्यमाणरीत्या कोपस्यापि महार्घत्वे प्रसादस्य का वार्तेति तात्पर्यात्। स्पृहिगृह्योरित्यालुच्, अनुरागव्यञ्जकत्वात्। तेन शुद्धकोपस्य निरासः। व्यावर्तयन्ती कोपाद्विषयान्तराभिमुखीकृतमप्यनुरागवशात्पुनः प्रियाभिमुख्यं नयन्तीत्यर्थः। केचित्तु "वृथापराधगणनारज्ज्वाकृष्टमिव बलात्ततः परावर्तयन्ति" इत्याहुः। यस्मै इति नायकपरम्। "वक्तृपरम्" इति केचित्। ततो वृन्दानीत्यनेकसुकृतलभ्यत्वसूचनम् ।।११७।।

सुधास्यन्दवाप्याः **परिमलैः** सौरभैः **आमोदिनी** उत्कृष्टसौरभयुता **जायतां** भवतु। **वा** अथवा **आस्तां** तिष्ठतु कोपत्याग इति शेषः। **इदं स्पृहयालु** स्पृहायुक्तम्, अनुरागव्यञ्जकमिति यावत्। **लोचनं** नयनं **मुहुः व्यावर्तयन्ती** घूर्णयन्ती त्वं **यस्मै** जनाय नायकायेति भावः **कुप्यसि** कोपं करोषि **तस्य तपोवृन्दानि** तपःसमूहान् वयं **वन्दामहे** स्तुमः। धन्योऽयं नायकः यस्मै त्वं कुप्यसीति भावः। अतिशयोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ।।११७।।

एते सिद्धरसाः प्रसूनविशिखो वैद्योऽप्यवन्ध्योद्यमो
मानव्याधिरसौ कृशोदरि कथं त्वच्चेतसि स्थास्यति ॥११८॥

सन्धाने चतुरश्चेटकः। यथा--

सा चन्द्रसुन्दरमुखी स च नन्दसूनु-
र्दैवान्निकुञ्जभवनं समुपाजगाम।

---

**आयात इति**। कुमुदेश्वरश्चन्द्रः। आयात उदितः। सर्वेषामीश्वरः प्राणरूपत्वात्, सर्वत्रकामविकारहेतुतया प्रतिघातरहितत्वाच्च। भैरवो विरहिणां दुःसहः, तथा चोद्दीपनविभावसद्भाव उक्तः। "चन्द्र-चन्दनरोलम्बरुताद्युद्दीपनं मतम्" इत्युक्तेः। तथापि नायकस्यानु-नयपराङ्मुखत्वे कोप एव स्यादत आह--नेति। कान्तः सर्वदात्वत्प्र-सादाकाङ्क्षितया परिसर एव तिष्ठतीति भावः। सिद्ध उत्कर्षविशिष्टतया स्वरूपेण च **निष्पन्नो** रसः शृङ्गारो येभ्यस्ते। नायकस्य विषयतया रत्युत्पत्तौ चन्द्रादीनां च तदुत्कर्षहेतुत्वात्। अथच कुमुदेश्वर-सर्वेश्वर-भैरव-प्राणेश्वराख्याः सिद्धा रोगनाशकत्वनियताश्च ते रसाश्चेति कर्म-धारयः। "अनवद्यो महानुत्सवः कार्यसमारम्भो यस्य" इति केचित्। मानरूपो व्याधिः शरीरसन्तापहेतुत्वात् ॥११८॥

विटं लक्षयति--**कामस्य** मन्मथस्य **तन्त्रे** शास्त्रे **कलासु** गीतादिषु **कोविदो** निपुणः **विटः** इत्युच्यत इति शेषः। उदाहरति--**आयात इति**। हे **कृशोदरि**! **कुमुदेश्वरः** चन्द्रः तदाख्यरसश्च **आयात** उदित उपस्थितश्च, **सर्वेषां** जनानाम् **ईश्वरः** प्राणरूपेणेति भावः **मारुतः** वायुः सर्वेश्वररसो मारुतरसश्च **विजयते** सर्वोत्कर्षेण वर्तते। **भैरवः** भीषणः आनन्दभैरवाख्यो रसश्च **भृङ्गः** भ्रमरः भृङ्ग-राजाख्यो रसश्च, **स्फूर्जति** समुल्लसति **प्राणेश्वरः** दयितः तदाख्यरसश्च **निकटं** सन्निधिं **न मुञ्चति** न जहाति। **एते** कुमुदेश्वरादयः **सिद्धरसाः** सिद्धः निष्पन्नः रसः शृङ्गारादिः यैस्ते, उद्दीपका इत्यर्थः। सिद्धाः व्याधिनाशे विख्याताश्च ते रसा औष-धिविशेषाः सन्तीति शेषः, तथा **अनवद्योत्सवः** निर्दोषमहः **प्रसूनविशिखः** कामः **वैद्यः** भिषक् अस्ति तथापि **असौ मानरूपो व्याधिः** गदः **त्वच्चेतसि** त्वद्धृदये **कथं स्थास्यति**। रूपकसंसृष्टः समुच्चयालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥११८॥

अत्रान्तरे सहचरस्तरणौ कठोरे
पानीयपानकपटेन सरः प्रतस्थे ॥११९॥

अङ्गादिवैकृत्येन हास्यकारी विदूषकः। यथा—

आनीय नीरजमुखीं शयनोपकण्ठ-
मुत्कण्ठितोऽस्मि कुचकञ्चुकमोचनाय।
अत्रान्तरे मुहुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकण्ठनादः ॥१२०॥

---

सेति। तच्छब्दस्य स्वानुभूतगुणगणवैशिष्ट्यपरत्वान्न यच्छब्दापेक्षा। "सेयं ममाङ्गेषु सुधारसच्छटा" इत्यादिवत्। प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दो यच्छब्दानपेक्ष इति काव्यप्रकाशे स्पष्टम्। दैवपदं फलोपधानसूचनार्थम्। "सङ्केताभावपरम्" इति केचित्। अन्तरपदार्थेषु "अवसरमध्येऽन्तरात्मनि च" इत्यमरः। कठोरे दुःसहे एतेन ग्रीष्ममध्याह्नरूपसङ्केतकालः पिपासोपपत्तिश्च व्यञ्जिता। प्रतस्थे गतवान्, "प्रसमवविभ्यः स्थः" इत्यात्मनेपदम्। यत् कामशास्त्रम्—

ताम्बूलस्य प्रदानेन वस्तुनिःसारणेन च।
सखीर्निर्वासयेद्दासभवनाद्व्याजतो यथा ॥
ता एव भावमुन्नीयोभयोः कुर्युस्ततोऽयनम्। इति ॥ ११९॥

आनीयेति। अनेन नवोढात्वं सूचितम् तदुक्तम्—

अपि सामीप्यगां भीरुं नवोढां सन्निधिं नयेत्।
विश्वासच्छद्मना गाढालिङ्गनात्त्याजयेद्भयम् ॥

चेटं लक्षयति—सन्धानेति। सन्धानं यूनोर्मिथः सङ्गमनं तस्मिन् चतुरः निपुणः चेटो भवतीत्यर्थः। उदाहरति—सेति। सा प्रसिद्धा चन्द्रवत् सुन्दरं मुखं यस्याः। स च प्रसिद्धः नन्दसूनुः श्रीकृष्ण इत्यर्थः। दैवात् भाग्यवशात् निकुञ्जभवनं लतागृहं समुपाजगाम समाययौ। अत्रान्तरे एतन्मध्ये तरणौ भास्वति कठोरे तीव्रे सति सहचरः सखा श्रीकृष्णस्येति शेषः। पानीयपानकपटेन तृषाशमनव्याजेनेत्यर्थः। सरः तडागं प्रतस्थे प्रययौ। तयोः स्वच्छन्दकेलिः स्यादिति वाञ्छन्निति भावः। काव्यलिङ्गरूपकयोः संसृष्टिरलङ्कारः। वसन्ततिलका च वृत्तम् ॥११९॥

**स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।**
**वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः॥**

---

विश्रब्धायाः स्त्रियः कार्यमङ्गप्रत्यङ्गवीक्षणम् ।
अन्यथा क्रियमाणं तत्तदुद्वेगाय जायते ॥

अत एवाह—कुचेत्यादि। "अत्र कुचपदं व्यर्थम्" इति केचित्। "कञ्चुके नायिकासम्बन्धलाभार्थम्" इत्यन्ये। वस्तुतस्तु कुचयोर्मोक्षणेनैव समासः। तादर्थ्यं सम्बन्धः, अश्वघासादिवत्। न च कुचयोः सिद्धत्वात्फलत्वानुपपत्तिः, दर्शनस्पर्शनद्वारा तथात्वात्। "ब्राह्मण्याय तपस्तेपे विश्वामित्रः सुदारुणम्" इत्यादिवत्। तरुणेति। स्वरस्य दैर्घ्यसूचनम्।"कण्ठपदमपि अप्रयोजनम्" इति केचित्॥१२०॥

सात्त्विकान्प्राह—**स्तम्भ इति।** अत्र रसतरङ्गिण्यां, सत्त्वशब्दस्य प्राणिवाचकतयाऽत्र सत्त्वं जीवच्छरीरं तस्य धर्माः। सात्त्विकाः तथा च शारीरत्वात्स्तम्भादयः सात्त्विका भावा इत्यभिधीयन्ते। स्थायिनो व्यभिचारिणश्च भावा न शरीरधर्मा इति व्याख्यातम्। एवं च "सत्त्वोत्कटे मनसि ये प्रभवन्ति भावास्ते सात्त्विका निगदिताः कविभिः पुराणैः" इत्यत्र 'मनसि सत्त्वाख्यविकारोद्रेके सति ये प्रभवन्ति इति' सतिसप्तम्या व्याख्येयम्, नत्वधिकरणसप्तम्येति न दोषः। गतिनिरोधः स्तम्भः। न च निद्रापस्मारादावतिव्याप्तिः; शरीरधर्मत्वे सति इति वाच्यत्वात्। प्रलयभावे तु न गतेर्निरोधः, अपि तु चेष्टायाः। वपुषि सलिलोद्गमः स्वेदः। स्पष्टोऽर्थः। विकारेण रोमोत्थानं रोमाञ्चः।

विदूषकं लक्षयति—**अङ्गादीति** । **अङ्गादीनां** देहावयवक्रियावेषभाषाप्रभृतीनां **वैकृत्यैः** विरूपताभिः **हास्यकारी** हास्योत्पादकः **विदूषक** इत्युच्यते। उदाहरति—**आनीयेति** । **नीरजमुखीं** कमलवदनां **शयनोपकण्ठं** तल्पान्तिकम् **आनीय** महताऽनुनयेनागमय्य **कुचकञ्चुकमोचनाय** स्तनकूर्पासकापसारणाय **उत्कण्ठितोऽस्मि** यावदुत्सुकोऽस्मि। **अत्रान्तरे** तावदेवेत्यर्थः **मुहुः** भूयोभूयः **विदूषकेण प्रातस्तनः** प्रभाते भवः **तरुणकुक्कुटस्य** यूनश्चरणायुधस्य **कण्ठनादः** गलरवः **अकारि** विदधे। निदर्शनोपमयोः संसृष्टिरलङ्कारः । वसन्ततिलका वृत्तम् ॥१२०॥

गद्गदत्वप्रयोजकस्वरस्वभाववैजात्यं स्वरभङ्गः। भावत्वे सति शरीरस्पन्दो वेपथुः। अनिष्टसूचकस्पन्दादिवारणाय सत्यन्तम्। न च शरीरावयवकम्पेऽव्याप्तिः; शरीरपदस्य चेष्टाश्रयमात्रपरत्वात्। विकारप्रभवः प्रकृतवर्णान्यथाभावो वैवर्ण्यम्। विकारजनितमक्षिसलिलमश्रु, शारीरत्वे चेष्टानिरोधः प्रलयः। निद्रादिवारणाय सत्यन्तम्, अयं च शरीरधर्मस्तादृशस्वेदादिसाहचर्यात्। अतश्चेष्टापदं शरीरक्रियाविशेषपरम्। मनसस्तु कर्मैव भवति, नतु चेष्टा। अत एव "चेष्टाश्रयः शरीरमिति शास्त्रकाराः" इति रसतरङ्गिण्यां स्पष्टम्। अत्र भरतः—

तत्र क्रोधभयहर्षलज्जादुःखश्रमरोगतापाऽऽयासक्लमधर्मात् खेदात्सम्पादनाच्चैव हर्षभयरोगविस्मयविषादमदरोषसंभवः स्तम्भः। शीतभयहर्षरोगस्पर्शजरासम्भवः कम्पः। आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद्भयाच्छोकात् अनिमिषप्रेक्षणतः शीताद्रोगाद्भवेदस्रम्॥ शीतक्रोधभयश्रमरोगक्लमरोषजं च वैवर्ण्यम्। स्पर्शभयगीतहर्षश्रममूर्च्छामदनिद्राभिघातमोहादिभिः प्रलयः।

एवमेते वुधैर्ज्ञेया भावा ह्यष्टौ हि सात्त्विकाः।
कर्म चैषां प्रवक्ष्यामि महाभावानुभावकम्॥

व्यजनग्रहणैर्वापि स्वेदापनयनेन च।
स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषतः॥
निश्चेष्टो निष्प्रकम्पश्च स्थितः शून्यजडाकृतिः।
निःसंज्ञस्तब्धगात्रश्च स्तम्भस्त्वभिनयेद्वुधः॥
वेपनात्स्फुरणात्कम्पाद्वेपथुं सम्प्रयोजयेत्।
स्वरभेदस्तथा चैव भिन्नगद्गदविस्तरैः॥
मुहुः कण्टकितत्वेन तथाङ्गाकुञ्चनेन च।
रोमाञ्चस्त्वभिनेयोऽसौ गात्रसंस्पर्शनेन च॥
नेत्रसम्मार्जनैर्वाष्पैरश्रु चाभिनयेद् बुधः।
मुखवर्णपरावृत्त्या नाडीपीडनयोगतः॥
वैवर्ण्यमभिनेतव्यं प्रयत्नादङ्गसंश्रयम्।
निश्चेष्टो निष्प्रकम्पश्च स्थितः शून्यजडाकृतिः॥
महीनिपतनाद्वापि प्रलयाभिनयो भवेत्॥ इति॥

यथा--

**भेदो वाचि दृशोर्जलं कुचयुगे स्वेदः प्रकम्पोऽधरे**
**पाण्डुर्गण्डतटी वपुः पुलकितं लीनं मनस्तिष्ठति।**
**आलस्यं नयनश्रियश्चरणयोः स्तम्भः समुज्जृम्भते**
**तत्किं राजपथे निजामधरणीपालोऽयमालोकितः ॥१२१॥**

---

**भेद इति**। कुचस्य तटे तदग्रभागे स्वेदः। तेन श्रमादिहेतुकत्वनिरासः, तस्यावयवान्तरसाधारण्यात्। तदालिङ्गनविषयकोत्कटेच्छया स्तनतटावच्छेदेन स्वेदोत्पत्तिसम्भवात्, वर्णोच्चारणानुकूलाधरकम्पवारणाय प्रशब्दः। तच्चुम्बनेच्छयाऽधरस्पन्द इति भावः। पाण्डुत्वं तद्विरहकृतवैवर्ण्यम्, पुलकितत्वं तद्दर्शनकृतानन्दवत्त्वात्। अत एव विप्रलम्भव्यञ्जनम्, तस्य दुःखसम्भिन्नरतिरूपत्वात्। लीनं मन इति प्रलयः। वस्तुत आलस्यं नयनश्रिय इत्येव प्रलयः, तस्य शरीरधर्मताया रसतरङ्गिण्यां ग्रन्थकृतैवोक्तत्वात्, लीनं मनस्तिष्ठतीति तदुपपादकमात्रं विषयान्तरदर्शनेच्छाशून्यत्वात्। यद्वा शरीरधर्मत्वपक्षेऽपि लीनं मन इत्यनेन शारीरभावस्याक्षेप्तुं शक्यतया आलस्यं नयनश्रिय इति जृम्भासूचनम्, "उज्जृम्भाननमुल्लसत्कुचयुगम्" इति शृङ्गार-

अथ सात्त्विकान् वर्णयन् भरतकारिकामनुवदति—**स्तम्भ इति**। सत्त्वं शरीरं तस्य धर्माः सात्त्विकाः ते चाष्टौ परिगणिताः, लक्षणानि तु समञ्जसायां विवृतानि। उदाहरति—**भेद इति**। यतः तव **वाचि** वचने **भेदः** वैजात्यं स्वरभङ्ग इति यावत्। **दृशोः** नयनयोः **जलम्** वारि अश्रुरिति भावः। **कुचतटे** स्तनप्रान्ते **स्वेदः** घर्मजलम् **अधरे** ओष्ठे **प्रकम्पः** वेपथुः, **गण्डतटी** कपोलस्थली **पाण्डुः** म्लानेति भावः। **वपुः** शरीरं **पुलकितं** सरोमाञ्चं **मनः** चित्तं **लीनं** निगूढमिति यावत् **तिष्ठति**। **नयनश्रियः** नेत्रशोभाया **आलस्यं** स्तैमित्यं **चरणयोः स्तम्भः** गतिरोधः **समुज्जृम्भते** समुल्लसति। **तत् किं** त्वयेति शेषः,। **राजपथे** मुख्यमार्गे **अयं** प्रसिद्धः **निजामधरणीपालः** निजामाख्यो नृप इति यावत् **आलोकितः** दृष्टः। अन्यथा कथमिमे सात्त्विकविकाराः प्रादुर्भवेयुरिति भावः। अनुभावोऽलङ्कारः। शार्दूल विक्रीडितं वृत्तम् ॥१२१॥

**रतिस्थायिभावः शृङ्गारः, स च द्विविधः। सम्भोगो विप्रलम्भश्च।**

तिलकादिसंवादाज्जृम्भा नवमः सात्त्विकभाव इति तरङ्गिण्यामेव निरूपितत्वात्। तेन "सात्त्विकप्रस्तावे व्यभिचारिण आलस्यस्य कथमुक्तिः" इति शङ्का निरस्ता। केचित्तु "नयनश्रियः स्थगनकारीत्यर्थकं मनोविशेषणमेतद्" इत्याहुः। तन्न। अत्यन्तव्यवहितत्वाद्वैयर्थ्याच्च ॥१२०॥

एवं विभावादि निरूप्य शृङ्गारं निरूपयति—**रतीति**। रतिरूपः स्थायिभावो यत्र। यद्भरतः—"रतिस्थायिभावप्रभवः शृङ्गारः" इति। "रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्" इति दर्पणः। "स्त्रीपुंसोरन्योन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषो रतिः" इति रसगङ्गाधरः, "रतिर्नाम आत्मानात्मिकभावः" इति भरतः। अयमर्थः—आत्मानात्मनोर्भव आत्मानात्मिकः, अध्यात्मादेराकृतिगणत्वाट्ठञ्। समवायविषयत्वाभ्यामुभयनिरूप्यत्वात्। यद्वा आत्मरूपेऽनात्मनि भवः, परस्याध्यात्मवत्प्रियत्वादिति भावः। तथा च पूर्वोक्तार्थ एव पर्यवसानम्। अत एव तत्रैवोक्तम्—

इष्टार्थविषयप्राप्त्या रतिरित्युपजायते।
सौम्यत्वादभिनेया सा माधुर्याङ्गविचेष्टितैः ॥इति॥

ननु रतेश्चित्तवृत्तिरूपायाः कथं स्थायित्वम्, तस्याश्चिरावस्थानानौचित्यात्; अत्राहुः-आप्रबन्धं विरुद्धाविरुद्धभावैरतिरस्कृतश्चित्तसन्तान एव स्थायी। सूक्ष्मरूपतयावस्थानसम्भवात्। तदुक्तम्—

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः॥

अथ शृङ्गारं निरूपयति—**रतीति**। **रतिः** अङ्कुरणाद्यवस्थाचतुष्टयेन भूमिकासप्तकेन च नवं नवमभिधानं दधती यूनोरन्योन्यालम्बना चित्तवृत्तिः **स्थायीभावो** यस्य स **शृङ्गारः** शृङ्गम् मन्मथोद्भेदम् ऋच्छतीति तदाख्यं रसः उच्यते। तं विभजते—**स इति**। स शृङ्गारः **द्विविधः**, तौ च भेदौ **सम्भोगो विप्रलम्भश्च**। संयोगकालावच्छिन्नरत्यवच्छिन्नत्वं सम्भोगत्वं वियोगकालावच्छिन्नरत्यवच्छिन्नत्वं च विप्रलम्भत्वमिति भावः। विस्तरस्तु समञ्जसायां द्रष्टव्यः।

चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः।
रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते॥

चिरमिति व्यभिचारवारणम्, अनुबन्धिभिर्विभावादिभिः।

सजातीयविजातीयैरतिरस्कृतमूर्तिमान्।
यावद्रसं वर्तमानः स्थायीभाव उदाहृतः॥

अत्र भरतसूत्रम्––"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः", इति। तच्चाभिनवगुप्तपादाचार्यमतानुसारिणा काव्यप्रकाशकृता व्याख्यातम्।

कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥
विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः॥

अयमर्थः––लोके तावत्प्रमदादयः पुरुषादिरतौ विषयतया कारणानि, कटाक्षादयः कार्याणि, निर्वेदादयः सहकारिणः, रतिपरिपोषकत्वात्। तथा च तद्घटितसामग्र्या रत्यादिविषयकानुमिताभ्यासवतां सूक्ष्मतयान्तःस्थितो रत्यादिः काव्यादिभिरभिव्यज्यते। अन्यापि स्वाभाविकी वासना सा येषामस्ति तेषामेव काव्ये रसोद्बोधः। श्रोत्रियादीनां रसोद्बोधाभावात्, इदमेव सहृदयत्वमिति प्रसिद्धम्। तदुक्तम्––

सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः॥

अन्यैरप्युक्तम्––"भावना चेन्न हेतुः स्यात्स स्यान्मीमांसकादिषु।" ते च क्रमेण काव्यादौ विभावानुभावव्यभिचारिशब्दव्यपदेश्याः। न च परिभाषाभेदमात्रमप्रयोजकमिति वाच्यम्; विभावनानुभावनसञ्चरणरूपालौकिकव्यापारभेदेन विशेषात्। ते च ईषत्स्फुटस्फुटतरप्रकाशरूपाः। यथावर्णक्रमेण स्फोटस्य सामस्त्येन यथा वा संस्कारविशेषसचिवेन्द्रियेण मणितत्त्वस्य। तदुक्तम्––"सामस्त्येन तु तद्व्यक्तिः सर्वान्ते मणितत्त्ववत्" इति, एवमत्रापि। तदुक्तम्––

विभावा अनुभावाश्च तथैव व्यभिचारिणः।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम् ।।

लोके हि कटाक्षादिभिस्त इत्यनुमितौ न चमत्कारः, काव्ये तु वाक्यार्थबोधानन्तरं चमत्कारविशेष इत्यनुभवसिद्धम्। तद्धेतुतया तत्कल्पनात्। तथाहि––"लोके सम्बन्धिविशेषीयत्वेन कारणादीनां ग्रहणम्, काव्यादौ तु सम्बन्धिविशेषानालम्बनेन साधारण्येन ज्ञानमित्यलौकिकानन्दाभिव्यञ्जकत्वं विभावादित्वम्। अलौकिकत्वं चेदमेव यत्पदार्थबोधसमये सीतात्वादिविशेषरूपेण गृहीतानां वाक्यार्थबोधकाले विशेषत्यागस्ततो रसोद्बोध" इति गौडाः।

मैथिलास्तु "संसर्गबोधे सम्बन्धी न विषयः, किन्तु पदार्थस्मरण एवेत्ययुक्तम्, अनुभवविरोधात्। काव्यवाक्यार्थबोधेऽपि सम्बन्धिविषयकत्वस्यानुभवसिद्धत्वात्। येन रूपेण पदार्थस्मरणं तेनैव वाक्यार्थबोधनियमाच्च। तस्मादमुकस्यैवेत्यवधारणं विना अमुकस्येति प्रतीतिरेव साधारण्येन प्रतीतिः। तेन स्वीयत्वासंसर्गग्रहप्रयोजनसिद्धिः। अत एव काव्यप्रकाशे––"ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धिविशेषस्वीकारपरिहारनियमानवसायात्साधारण्येन प्रतीतेः" इत्युक्तम्। नियमांशमात्रानवभासस्यैव तदभिमतत्वात्, अन्यथा परिहारानवसायाद् इत्येव ब्रूयाद्" इत्याहुः। एतेन "शकुन्तलादीनां सामाजिकै रसम्बन्धात्कथं तेषां रसोद्बोध" इति शङ्कापि निरस्ता। सीतादौ तु यदा सीतात्वेन ज्ञानं तदा आराध्यत्वज्ञानस्य प्रतिबन्धकत्वान्न रसोदयः। "कान्तात्वादिप्रकारकज्ञानेऽनुभवत्येवेत्यनुभवसिद्धत्वात्त एव परिहृतविशेषा रसहेतव" इति भरतोक्तेश्च।

न च प्रागसिद्धस्य रत्यादेः कथं प्रतीतिरिति वाच्यम्; वासनारूपतया तस्य स्थिरतामापन्नत्वात्। अत एवाङ्कितां वाध्यतां वा प्राप्तस्य न रसत्वं किन्तु सञ्चारिकत्वमेवेति सिद्धान्तः।, यद्भरतः––

यथा नराणां नृपतिः शिष्याणां गुरवो यथा।
तथैव सर्वभावानां स्थायीभावो महानिह।।

स्यादेतत्। विभावादीनां साधारण्येन प्रतीतिं विना विभावत्वाद्यनुपपत्त्याऽस्तु साधारण्यम्, स्थायिनस्तु तत्तदात्मनिष्ठतया स्वसम्बन्धित्वेनैव निश्चितत्वात्। कथं तत्। न च मास्तु तस्य साधारण्यमितिवाच्यम्; परिमितत्वे रसात्मत्वानुपपत्तेः। स्वगतत्वेन रत्यादि प्रतीतौ हि सभ्यानां व्रीडातङ्कादिः स्यात्, परगतत्वे त्वरसनीयत्वं स्यात्। तदुक्तम्—

पारिमित्याल्लौकिकत्वात्साधारण्यतया तथा।
अनुकार्यस्य रत्यादेरुद्बोधो न रसीयते॥ इति॥

सत्यम्। विभावादिसाधारण्येन तदानीं प्रमातृविशेषनिष्ठत्वस्यानवगाहनात्। तद्वशेन वेद्यान्तरसहविषयतारूपसम्पर्केण रहितोऽपरिमितो भावो रत्यादिर्यस्य तादृशेन प्रमात्रा सहृदयेन प्रमातृविशेषसम्बन्धपरिहारेणैव रत्यादेरनुभवात्सकलसंवादोपपत्तेः। स्यादेतत्। रत्यादेरभिव्यक्तावपि कथमानन्दोद्बोध इति। उच्यते। विभावादिभिः स्थायिन्यभिव्यज्यमाने चैतन्यानन्दस्वरूप आत्माप्यवभासते, वेदान्तिमते ज्ञानमात्रे तद्भानस्वीकारात्। सर्वस्यैव कल्पितत्वेन इदं रजतमित्यादिवदात्मचैतन्यरूपाधिष्ठानानुवेधनियमात्। अन्यथा अज्ञातज्ञापकत्वरूपप्रामाण्यानुपपत्तेश्च। तदुक्तं वार्तिकाचार्यैः—

अतोऽनुभव एवैको विषयो ज्ञातलक्षणः।
अक्षादीनां स्वतः सिद्धो यत्र तेषां प्रमाणता॥

अनुभवः सद्रूपम्। आत्मेति यावत्। तस्यैव विषयत्वे हेतुरज्ञात इति। अज्ञातविषयत्वस्यात्मन्येव स्वीकारात्। जडस्य प्रकाशानुपपत्तेराचरणकृत्याभावेनाज्ञानविषयकत्वकल्पने प्रयोजनाभावात्। तथा च घटाद्यवच्छिन्नसद्रूपं पटादिज्ञाने भासते, इति घटादेर्विषयीभूतसद्रूपावच्छेदकत्वमात्रम्, न तु विषयत्वमितिभावः। स्वतःसिद्धो नारोपितः। अक्षादीनां चाक्षुषादिज्ञानानाम्। यत्रेति। यद्विषयकत्वेनेत्यर्थः। भ्रमेऽपि शुक्त्यवच्छिन्नचैतन्यविषयकमज्ञानमनिर्वाच्यरजतोपादान इत्यधिष्ठानभूतं यच्चैतन्यं तत्तादात्म्यापन्नरजतादिविषयकत्वेनैव बाधपूर्वं प्रमात्वव्यवहार इतिभावः॥

एवं च सति काव्यश्रवणादिमहिम्ना यथोक्ताभिव्यक्त्या चैतन्यस्यानन्दांशे आवरणभङ्गः क्रियते। तथा च रत्याद्यवच्छिन्नचैतन्यमावरणभङ्गानन्दरूपतया प्रकाशमानं रस इति सिद्धम्।

आवरणं त्वज्ञानमेव। न चैवं घटादिज्ञानेऽपि स्यादिति वाच्यम्; तत्र तदंशावरणभङ्गाभावादानन्दांशानभिव्यक्तेः। तदुक्तं चर्व्यमाणतैकप्राण इति, चर्वणा चानन्दांशाभिव्यक्तिः। तदभावश्च विभावादिज्ञानाभावात्, तदुक्तं विभावादि जीवितावधिरिति। अस्यां चाभिव्यक्तौ लिङ्गोपहितलैङ्गिकभाववद्विभावादिविषयकत्वमप्यावश्यकम्। "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्यभियुक्तोक्तेः। तदेतदुक्तम्—पानकरसन्यायेन चर्व्यमाण इति।

न चान्तःकरणावच्छिन्नं चैतन्यं प्रमातृरत्याद्यवच्छिन्नं तु रस इति चैतन्यांशमादायाभिन्नत्वात् कथं ग्राह्यग्राहकभाव इति वाच्यम्। साकारवादिमते ज्ञानाकारस्यापि विषयस्य ज्ञेयत्ववदुपपत्तेः। तदुक्तम्—स्वाकार इवाभिन्नोऽपि गोचरीकृत इति। स्वस्य ज्ञानस्याकारो विषयो ज्ञानस्वरूपादभिन्नोऽपीत्यर्थः। स चायं न कार्यः। विभावादिज्ञानानां नाशेऽपि रसानुभवप्रसङ्गात्। न च तन्नाशे रसनाशादेव न तथेति वाच्यम्; तेषां हि तत्समवाय्यसमवायित्वयोरनुपपत्त्या निमित्तकारणत्वमेव वाच्यम्। तन्नाशेन च कार्यनाशादर्शनात्। न च चन्दनस्पर्शादिजन्यसुखन्यायेन निर्वाहः, तत्र तत्स्पर्शननाशेन सुखनाशानभ्युपगमात्। कारणाभावादेव सुखान्तरानुत्पत्तेः। उत्पन्नसुखस्य च स्वानन्तरज्ञानादिभिरेव नाशात्। न चात्रापि तथा स्यादिति वाच्यम्; रसस्य वेद्यान्तरसम्पर्कशून्यतया तत्काले ज्ञानान्तराद्यभावात्। अभिव्यक्तेश्च लोकोत्तरतया विकल्पानवकाशात्। न च इन्धननाशाद्वह्निनाशो दृष्ट इति वाच्यम्; तत्राप्यवयवविभावादिक्रमेण पूर्ववह्निनाशो हेत्वभावाद्वह्न्यन्तरानुत्पत्तिरिति सिद्धान्तात्। न चापेक्षाबुद्धिनाशे न द्वित्वनाशवद्भविष्यतीति वाच्यम्; द्वित्वादीनां जातित्वस्य भट्टमतेऽभिव्यक्तेर्वा स्वीकारात्। किंच विभावादिज्ञातृध्वंसक्षणे रससाक्षात्कारः स्यात्, ज्ञाननिष्ठकार्यत्वनिरूपितज्ञाननिष्ठकारणतायां पूर्ववर्तित्वस्यैवापेक्षितत्वात्। कार्यकालेऽपि भावादिज्ञानाभावेऽपि क्षतिविरहात्। . . . . . . . . .

किंच रत्याद्यवच्छिन्नचैतन्यस्य रसत्वात् कार्यत्वशङ्कैव न सम्भवतीति। विशेषणांशस्याभिव्यक्तेरुत्पत्तिविनाशाभ्यामेव रसे तद्व्यवहारात्। भाट्टमते व्यञ्जकध्वनिनिष्ठोत्पत्त्यादिना ककार उत्पन्न इत्यादि व्यवहारवत्। नापि ज्ञाप्यः। विभावादिजनिताभिव्यक्तिविशिष्टस्यैव रत्यादेरसत्त्वात्। पूर्वं तदभावात्, पूर्वसिद्धस्यैव घटादेरालोकादिनाऽभिव्यक्तेः।

केचित्तु "न ज्ञाप्य इत्यस्य न फलव्याप्य इत्यर्थः। भग्नावरणचित्सम्बन्धित्वरूपस्य तस्य घटादौ सम्भवेऽपि चैतन्यरूपे रसेऽनुपपत्तेः। सम्बन्धस्य भेदनियतत्वाद्" इत्याहुः। किं च ज्ञाप्यत्वं निर्विकल्पकेन सविकल्पकेन वा ग्राह्यम्। रसग्राहकं च न निर्विकल्पकम्, विभावादिपरामर्शस्य तदजनकत्वात्। नापि सविकल्पकम्। धर्मिग्राहकमानेन रसस्य विभावादिसमूहालम्बनरूपतयासिद्धेः, तेषां च परस्परं सम्बन्धानवभासात्सविकल्पकत्वानुपपत्तेः।

यद्वा स्वभिन्नसविकल्पकग्राह्यत्वाभावात्। चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनासिद्धत्वात्। स्वाभिन्नसविकल्पकग्राह्यत्वेन नायकत्वव्यवहारात्। न च सविकल्पकनिर्विकल्पकोभयविषयत्वाभावो बाधित इति वाच्यम्; लोकोत्तरतया तदापत्तेरदोषत्वात्। इदं च युञ्जानयोगिज्ञानाद्विलक्षणम्, तस्य भेदावगाहित्वात्, रसज्ञानेऽवस्थादिविभावादीनां भेदानुल्लेखात्। युक्तयोगिज्ञानादपि तथा, तस्यात्ममात्रविषयकत्वादस्य च विभावादिमेलकविषयकत्वात्। लौकिकरसज्ञानादपि तथा। गुणालङ्काराद्यधिकविषयकत्वादिति तिष्ठतु विस्तरः।

विभजते—**स चेति**। सम्भोग इति। तदुक्तम्—

अनुरक्तौ निषेवेते यत्रान्योन्यं विलासिनौ।
दर्शनस्पर्शनादीनि स सम्भोग उदाहृतः॥

विप्रलम्भश्चेति। तदुक्तम्—"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ" इति। एवं च "सम्भोगविप्रलम्भौ न सामानाधिकरण्यवैयधिकरण्यात्मकौ, एकशयनेऽपि विप्रलम्भव्यवहारात्। किन्तु संयुक्तो विप्रयुक्तश्चास्मीति चित्तवृत्तिविशेषस्वरूपौ" इति नव्याः।

**सम्भोगो यथा——**

**वियति विलोलति जलदः स्खलति विधुश्चलति कूजति कपोतः।**
**निपतति च तारकाततिरान्दोलति वीचिरमरवाहिन्याः।१२२।**

---

तत्र वियोगे जीवितत्वज्ञानदशायां वैक्लव्यपोषिताया रतेरेव प्राधान्याद्विप्रलम्भः। वैक्लव्यं तु संचारिमात्रम्। मृतत्वज्ञाने तु रतिपोषितस्य वैक्लव्यस्यैव प्राधान्यात्करुण एव रसः। तत्रापि देवताप्रसादादिना पुनरुज्जीवनज्ञाने सङ्गमाशानुवृत्या विप्रलम्भ एव। आलम्बनस्यात्यन्तिकनिरासाभावात्, यथा कादम्बर्यां पुण्डरीकस्य पुनर्जीवनाशायां महाश्वेतायाः। तत्राप्याकाशसरस्वतीभाषानन्तरमेव तथा, पूर्वं तु करुण एवेत्यभियुक्ताः। तदुक्तं दर्पणे——

यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये।
विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भाख्यः॥

। तत्र सम्भोगस्तावदेकविध एव गण्यते। अवान्तरभेदानां बहुत्वेन परिसङ्ख्यातुमशक्यत्वात्। यद्भरतः——"यत्किञ्चिच्छुचि मेध्यमुज्ज्वलं दर्शनीयं वा तच्छृङ्गारेणोपमीयते।" इति। उपयुज्यत इत्यर्थः।
दर्पणे——

सङ्ख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात्।
अयमेक एव धीरैः कथितः सम्भोगश्शृङ्गारः॥
तत्र स्यादृतुषट्कं चन्द्रादित्योदयास्तमयः।
जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृति।
अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च॥ इति॥

तत्र विपरीतरतिरूपं सम्भोगमुदाहरति——वियतीति। जलदादिशब्दाः साध्यवसानलक्षणया केशपाशादिपराः। वियतीति रतेर्वैपरीत्यं व्यङ्ग्यम्। अन्यथा केशपाशस्य भूमिसंस्पृष्टतया आकाशे विलोलत्वानुपपत्तेः। विधुश्चन्द्रश्चलति, मुखे क्रियोत्पत्तेरिति भावः। चुम्बनौत्सुक्यादित्यन्ये। स्खलतीत्यत्रापि विधुरित्यस्यान्वयः। सङ्कुचति लज्जाप्रदर्शनव्याजादानन्दाद्वेतिभावः। कपोतः कूजतीति सीत्कार उक्तः। तारकाततिः स्वेदविन्दुपङ्क्तिः केशकलापकुसुमराजिर्वा।

विप्रलम्भो यथा—

प्रादुर्भूते नवजलधरे त्वत्पथं द्रष्टुकामाः
प्राणाः पङ्केरुहदलदृशः कण्ठदेशं प्रयान्ति।
अन्यत् किंवा तवमुखविधुं द्रष्टुमुड्डीय गन्तुं
वक्षः पक्षं सृजति बिसिनीपल्लवस्य च्छलेन ॥१२३॥

---

गङ्गावीचिर्हारः। केचित्तु तारकापदेनैव मुक्ताफलानि व्याख्याय "वीचिपदं त्रिवलिपरम्" इत्याहुः। अप्रकृतेन निगीर्णे साध्यवसानाश्रयात् प्रकृतेः इत्येवमलङ्कारकौस्तुभोक्तरूपोऽतिशयोक्तिभेदः ॥१२२॥

विप्रलम्भमाह—**प्रादुर्भूत इति**। नवेति प्रागदर्शनाद्भूयातिशयहेतुत्वम्, जलधरेत्युद्दीपकत्वम्। स्वरूपसतस्तदजनकत्वात्प्रादुरितिप्रत्यक्षीकृताभिप्रायम्। त्वत्पथं त्वदागमनमार्गं द्रष्टुं कामो येषां ते द्रष्टुकामाः 'तुं काममनसोरपि इति प्रत्ययसम्बन्धिमकारलोपः। दलपदं पूर्व-

सम्भोगशृङ्गारमुदाहरति—**वियतीति**। **वियति** आकाशे **जलदः** मेघः लक्षणया केशपाशः **विलोलति** तरलीभवति **स्खलति** स्रंसति च, **विधुः** चन्द्रः लक्षणया मुखं **चलति** चेष्टते चुम्बनादिक्रियासु प्रवर्तत इति यावत्। **कपोतः** पारावतः लक्षणया कण्ठः **कूजति** रौति सीत्कारादि मणितं करोतीत्यर्थः। **तारकाणां** नक्षत्राणां लक्षणया स्वेदबिन्दूनां **ततिः** पङ्क्तिः **निपतति अमरवाहिन्याः** स्वर्णद्याः **वीचिः** ऊर्मिः लक्षणया हारस्त्रिवलिर्वा **आन्दोलति** दोलायमाना भवति। साध्यवसानया लक्षणया प्रस्तुतं विपरीतरतेर्वर्णनमेतत्। अतिशयोक्तिरलङ्कारः। गीतिश्छन्दः ॥१२२॥

विप्रलम्भमुदाहरति— **प्रादुर्भूत इति**। **नवजलधरे** नूतनाम्बुदे **प्रादुर्भूते** प्रकटिते सति **त्वत्पथं** त्वन्मार्गं **द्रष्टुकामाः** दिदृक्षव इतियावत्। **पङ्केरुहदलं** कमलच्छदमिव **दृशौ** यस्यास्तस्याः नायिकायाः **प्राणाः** असवः **कण्ठदेशं प्रयान्ति** गलावलम्बिनो भवन्तीत्यर्थः। **अन्यत्** इतो भिन्नं **वा किं** ब्रवीमीतिशेषः। यत् **तव** नायकस्य **मुखविधुं द्रष्टुम्** ईक्षितुम् **उड्डीय गन्तुम्** उत्पत्य यातुं तस्याः **वक्षः** उरः हृदयमिति यावत्। **बिसिनीपल्लवस्य** नलिनीकिसलयस्य **च्छलेन** व्याजेन **पक्षं** पक्षतिं **सृजति** निर्मातीति यावत्। प्रतीयमानोत्प्रेक्षातिशयोक्त्योः संसृष्टिरलङ्कारः। मन्दाक्रान्ता च वृत्तम् ॥१२३॥

**विप्रलम्भे चाभिलाषचिन्तास्मृतिगुणकीर्तनोद्वेगप्रलापोन्मादव्याधिजडतानिधनानि दशावस्था भवन्ति।**

---

मेव मार्गदर्शनेन दृष्टेः श्रान्तत्वसूचनार्थम्, ततश्च यथा परिजनेन कार्यानुपपादने स्वामिनः स्वयं प्रवृत्तिस्तथा नेत्रव्यापारानन्तरं प्राणानाम्, तत्प्राधान्यं च "ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुः" इत्यादि श्रुतौ स्पष्टम्। दर्शनेच्छायां पूर्वस्थानादुत्तरस्थानगमनस्य अनुभवसिद्धत्वात् हृदयमपहाय कण्ठमूलमायान्ति। चरमदशाया जातप्रायत्वं व्यङ्ग्यम्। मुखं विधुमिवेत्युपमितसमासः, मुखस्यैवेच्छाविषयदर्शनविषयत्वात्। रूपकसमासे तत्प्राधान्यापत्तेः। दर्शनीयत्वलाभार्थं तु सादृश्योपादानम्। अन्यादृशगमने पक्षानुपयोगात्। उड्डीयते एतेनोत्कण्ठातिशयो व्यङ्ग्यः। उड्डयनस्य गतिविशेषत्वाद् गन्तुमित्यत्र धातुः प्रत्ययसाधुत्वमात्रार्थः। नलिनीति सन्तापोत्कर्षसूचनम्। "पल्लवस्येति षष्ठीसमास" इत्येके। "समाहारद्वन्द्व" इत्यन्ये॥१२३॥

तस्यावस्थाभेदानाह—**विप्रलम्भे चेति**। यद्रूरतः—

प्रथमे त्वभिलाषः स्याद् द्वितीये चिन्तनं भवेत्।
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनम्॥
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते।
उन्मादः सप्तमे ज्ञेयो भवेद्व्याधिस्तथाष्टमे॥
नवमे जडता चैव मरणं दशमे भवेत्॥

रतिरहस्ये तु—

नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः॥
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः

अत एव "पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता" इति मालतीमाधवम्।

**तत्र समागमेच्छाभिलाषः। यथा—**

**तस्यां सुतनुसरस्यां चेतो नयनं च निष्पतिते।**
**गुरु चेतो विनिमग्नं लघु नयनं सर्वतो भ्रमति।।१२४।।**

---

अभिलाषं लक्षयति-तत्रेति। दशावस्थानां मध्ये इत्यर्थः। यद्भरतः—

व्यवसायसमारब्धः सङ्कल्पेच्छासमुद्भवः।
समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः।।
निर्याति विशति च मुहुः करोति चाकारमिव दैन्यस्य।
तिष्ठति तु दर्शनपथे प्रथमस्थानस्थिते कामे।

इच्छायाः समुद्भव इति समासः। विषयसमवायिनोर्युवरूपयोरर्थाल्लाभः। समुद्भवन्ती इच्छेति यावत्। इच्छायाश्च जन्यत्वविशेषणस्य वैयर्थ्याद् धारावाहिकत्वपर्यवसानम्। तत्र तात्पर्यग्राहकं सङ्कल्पपदम्। इदं च विप्रलम्भत्वानुपपादकेच्छायां व्यभिचारीत्याह—समागमेति। सङ्गमोपायः कृतो येन। तदुपायप्रवृत्तिप्रयोजक इति यावत्। इदं च शापादिहेतुकविप्रलम्भकालीनेच्छायां गतम्। फलेच्छयैवोपाये प्रवृत्तेरत आह—व्यवसायेति। व्यवसीयते विषयीक्रियते इति व्यवसायः। कर्मणि घञ्। समागम इति यावत्। स समारब्धो येन। स्वनिरूपिततद्व्यक्तिसमागमध्वंसासमानकालीन इति यावत्। तत्र तु पूर्वं सङ्गमस्यापि जातत्वान्न व्यभिचारः। तथा च स्वनिरूपिततद्व्यक्तिसमागमध्वंसासमानकालीना तदुपायप्रवृत्तिप्रयोजिका धारावाहिकेच्छाऽप्रकृताभिलाष इति पर्यवसन्नम्। **तस्यामिति।** स्वानुभूतार्थकस्तच्छब्दः। सुतनुरूपायां सरस्यां सरसत्वात्। स्वेदवत्त्वादिति तूपेक्ष्यम्, "सरसी तु महासरः" इति शब्दार्णवः। "दक्षिणापथे हि महान्ति सरांसि सरस्य उच्यन्ते" इति भाष्यम्। निःपतितमिति। चक्षुषः प्राप्यकारितया साक्षात्संयोगान्मनसस्तु तत्संयुक्तचक्षुःसंयुक्तत्वेन परम्परया तत्संयोगात्। गुरुत्वमुत्कटरागवत्त्वम्। मज्जनप्रयोजको गुणविशेषश्च। यत्तु "सर्वेन्द्रियश्रेष्ठत्वम्" इति, तन्न, प्रकृतानुपयोगात्। निमज्जनं विषयान्तरव्यावृत्तिः।

**दर्शनसन्तोषयोः प्रकारजिज्ञासा चिन्तनम्। यथा—**

**मया विधेयो मुहुरद्य तस्मिन्कुञ्जोपकण्ठे कलकण्ठनादः।**
**राधामधोर्विभ्रममावहन्ती कुर्वीत नेत्रोत्पलतोरणानि ॥१२५॥**

---

पक्षे स्पष्टम्। लघुत्वं शीघ्रगामित्वम्, विशिष्टगुरुत्वाभावश्च। एतेन सारहीनत्वमित्यपास्तम्। सर्वतः सर्वाङ्गे तद्दर्शन एव चक्षुष उपयोगात्। अथ च गुरोर्मज्जनं लघोः प्लवनं च युक्तमेवेति भावः। अथ च यस्य द्रव्यस्य मज्जनं न भवति तत्र स्थितस्य द्रव्यान्तरस्यापीति लोके दृष्टम्, यथा नावा रूढस्य पुरुषादेः। प्रकृते तु साक्षात्संयुक्तं नेत्रं न निमग्नं तत्संयुक्तं तु मनो निमग्नमित्याश्चर्यमिति रहस्यार्थः ॥१२४॥

चिन्तां लक्षयति—**दर्शनेति**।

केनोपायेन संप्राप्तः कथं वा स भवेन्मम।
दूतीनिवेदितैर्भावैरिति चिन्तां विनिर्दिशेत् ॥
आकेकरार्द्धविप्रेक्षितानि रसनावलयपरामर्षः।
नीवीनाभ्योः संदर्शनं च कार्यं द्वितीये तु ॥

इदं पुरुषव्यापारस्याप्युपलक्षणम्। उदाहरति—**मयेति**।

श्रीकृष्णस्य सखायं प्रत्युक्तिः। सकृत्कृतस्यानाकर्णनशङ्कया- मुहुरिति। कुञ्जाभ्यन्तरावस्थाने तद्दृष्टिविषयत्वमात्मनो न स्यादत उपकण्ठ इति। "कलकण्ठः कोकिलः पिकः प्रोक्तः" इति हलायुधः। "कलहंसेति पाठ" इति केचित्। "कादम्बः कलहंसः स्यात्" इत्यमरः। मधोरिति, कोकिलकूजितस्य वसन्तनियतत्वात्। हंस- शब्दस्य तु न तथात्वमिति विशेषः। न च—

वियदलिमलिनाम्बुगर्भमेघं
मधुकरकोकिलकूजितैर्दिशां श्रीः।
धरणिरभिनवाङ्कुराङ्कटङ्क-
प्रणतिपरे दयिते प्रसीद मुग्धे ॥

इत्यादि दर्शनात् कोकिलरुतस्यापि न तथात्वमिति वाच्यम्; तेषां विजातीयत्वात्। "केषांचित्कोकिलानां वर्षास्वपि मद" इति प्रकाश- व्याख्यातृभिरुक्तत्वात्। आ इति चिन्तायां निपातः। कुर्वीतेत्या-

**प्रियाश्रितचेष्टाद्युद्बोधितसंस्कारजन्यं ज्ञानं स्मृतिः।**

---

शंसायां लिङ्। केचित्तु "आवहन्ती" इति योजयन्ति, तच्चिन्त्यम्। धारणार्थत्वानुपपत्तेः।

"ते दुःखमुच्चावचमावहन्ति ये प्रस्मरन्ति प्रियसङ्गतानाम्" इत्यादावाङ्पूर्वस्य वहतेः करोतीत्यर्थकत्वाद्वहन्तीत्येतदर्थकत्वं नास्तीति वामनादिभिरुक्तत्वात्॥१२५॥

**प्रियेति**। यद्भरतः—

मुहुर्मुहुर्निश्वसितैर्मनोरथविवर्तनैः
प्रद्वेषाच्चान्यकार्याणामनुस्मृतिरुदाहृता॥
नैवासने न शयने धृतिमुपलभते स्वकर्मणि विहस्ता।
तच्चिन्तोपगतत्वात्तृतीयमेवं प्रयुञ्जीत॥

विप्रलम्भजन्याः स्मरदशा गणयति—**विप्रलम्भ** इति। स्पष्टम्। अभिलाषं लक्षयति **तत्रेति**। **तत्र** दशस्ववस्थासु **समागमस्य** रहसि मिलनस्य **यूनोरिच्छा** कामना अभिलाष इत्युच्यते। उदाहरति—**तस्यामिति**। **तस्यां** पूर्वमवलोकितायां **सुतनुसरस्यां** सुतनुः सुन्दरी सैव सरसी पुष्करिणी तस्यां ममेति शेषः। **चेतो** मनः **नयनं** नेत्रं च द्वेऽपि सममेव **निष्पतिते** ब्रुडित इति यावत्। **चेतः** मनस्तु गुरु सारवदिति भावः अतो **निमग्नं** ब्रुडितं। **नयनं** तु लघु सारहीनमत एव **सर्वतः भ्रमति** प्लवते। चेतोदृशोस्तन्मग्नत्वात्तत्समागमेच्छासूचनम्। रूपककाव्यलिङ्गयोः संसृष्टिरलङ्कारः। उपगीतिश्च छन्दः॥१२४॥

चिन्तां लक्षयति—**सन्दर्शनेति**। **सन्दर्शनं** सम्यगालोकनम्, **सन्तोषः** सम्यगानन्दः तयोः **प्रकारस्य** रीतिविशेषस्य **जिज्ञासा** ज्ञातुमिच्छा अनुसन्धानमिति यावत् **चिन्तेत्युच्यते**। उदाहरति—**मयेति**। **अद्य मया** कृष्णेनेति भावः **तस्मिन्** परिचिते **कुञ्जोपकण्ठे** लतागृहान्तिके **मुहुः पुनः** पुनः **कलकण्ठस्य** पिकस्य **नादः** ध्वनिः **विधेयः** कर्त्तव्यः येन **मधोः** वसन्तस्य **विभ्रमं** भ्रान्तिम् **आवहन्ती** धारयन्ती **राधा नेत्रोत्पलानां** नयनकमलानां **तोरणानि** वन्दनमालेति यावत् **कुर्वीत** विदधीत। निदर्शनालङ्कारः उपजातिश्च छन्दः॥१२५॥

स्मृतिं लक्षयति—**प्रियेति**। **प्रियम्** अभीष्टम्, नायकाय नायिकां नायिकायै च नायकमित्यर्थः। **आश्रितैः** आधृत्य स्थितैः **चेष्टादिभिः** व्यापारैः **अनुभूतपूर्व**-

यथा—

रामो लक्ष्मणदीर्घदुःखचकितो नाविष्करोति व्यथां
श्वासं नोष्णतरं जहाति सलिलं धत्ते न वा चक्षुषि।
वातावर्तविवर्तमानदहनक्रूरैरनङ्गज्वरैः
क्षामः किन्तु विदेहराजतनयां भूयः स्मरन् वर्तते॥१२६॥

विरहकालीनकान्ताविषयकप्रशंसाप्रतिपादनं गुणकीर्तनम्।

---

**राम इति**। मदीयदुःखज्ञाने लक्ष्मणस्यापि दुःखं स्यादिति शङ्का-चकितां तस्यार्थः। व्यथां वैदेहीविप्रलम्भजन्याम्। व्यथाया अनाविः-करणं च तदनुमापकनिःश्वासादिनिरोधः। तदेवाह—श्वासमिति। न जहाति निर्गमयतीत्यर्थः। एवं चान्तरेव स्तम्भितस्य दुःखावेगस्य दुःसहतरत्वमाह—वातेति। विवर्तमानान्तेन यथादेशान्तरावच्छेदेन नाग्निसंयोगः किन्तु तद्देशावच्छेदेनैव तथेति व्यङ्ग्यम्। वाताभावे दीप्त्युत्कर्षाभावाद्वातेति। देशान्तरसंयोगवारणाय। आवर्तेति। तद्व-त्क्रूरैः दुःसहैरित्युपमानानि सामान्यवचनैरिति समासः। विदेहा-स्तत्त्वज्ञानोत्पत्त्या देहात्मबुद्धिहीनाः। विदेहराजो मैथिलः। स्मर-न्निति लक्षणे शतृप्रत्ययः, स्मरण एवासक्त इत्यर्थः॥१२६॥

**विरहेति**। सम्भोगकालीनगुणकीर्तनवारणाय-विरहकालीनेति। न च "कालाट्ठञ्" इति ठञ् प्रत्यये कालिकेत्येव युक्तं कालिकसम्बन्धः

रितियावत्। **उद्बोधितः** जागरितो यः **संस्कारः** भावनाविशेषः तस्मात् **जन्य-मुत्पन्नं ज्ञानं स्मृतिः** उच्यते। उदाहरति—**राम इति**। **रामः** दाशरथिः **लक्ष्मणस्य** सौमित्रेः **दीर्घदुःखेन** स्वापेक्षयाऽधिकसन्तापेन **चकितः** आश्चर्ययुक्तः सन् **व्यथां** स्वचित्तस्थामाधिं **नाविष्करोति** न प्रकटयति। **उष्णतरं** सन्तापातिशययुतं **श्वासं न जहाति** मुञ्चति। **चक्षुषि** जलं अश्रुरूपं **वा न धत्ते** न धारयति। **किन्तु वातावर्तेन** चक्रवातेन **विवर्तमानो** वर्धमानः **दहनः** वह्निः इव **क्रूरैः** दारुणैः **अनङ्गज्वरैः** कामतापैः **क्षामः** क्षीणः सन् **भूयः** पुनः पुनरित्यर्थः **विदेहराजतनयां** जानकीं **स्मरन्** भावयन् **वर्तते**। काव्यलिङ्गोपमयोः संसृष्टिरलङ्कारः शार्दूल-विक्रीडितं च वृत्तम्॥१२६॥

यथा—

स्पर्शः स्तनतटस्पर्शो वीक्षणं वक्त्रवीक्षणम्।
तस्याः केलिकथालापसमयः समयः सखे ॥१२७॥

कामक्लेशजनितसकलविषयहेयताज्ञानमुद्वेगः। यथा—

गरलद्रुमकन्दमिन्दुबिम्बं करुणावारिजवारणो वसन्तः।
रजनी स्मरभूपतेः कृपाणी करणीयं किमतः परं विधातः ॥१२८॥

---

कालिकी व्याप्तिरित्यादिवदिति वाच्यम्; समानकालीनेत्याद्यभियुक्त-प्रयोगबाहुल्यात्। कालादिति योगं विभज्य ख प्रत्ययं चानुवर्त्य व्याख्येयत्वात्। ठञित्यत्र कालादित्यनुवृत्त्या कालिकेत्यादीनामपि सिद्धेः। एतेन "आत्मनः समकालीनं मामवेहि सुरेश्वर" इति विष्णुधर्म-प्रयोगेऽपि व्याख्यातः। यदुक्तं भरतः—

अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षणैः।
नास्त्यन्यः सदृशस्तेनेत्येतत्स्याद्गुणकीर्तनम् ॥

एतच्च गुणप्रशंसाप्रकारमात्रोपलक्षणम्। **स्पर्श इति**। अत्र स्पर्शान्तरोद्देशेन कुचतटस्पर्शस्तावन्न विधेयः प्रकृतानुपयोगात्। येन दण्डवान् रक्तवान् इतिवद्विधेयतावच्छेदकांशेऽधिकधर्मावगाहिनः शाब्द-स्योत्पत्तिः स्यात्, किन्तु कुचतटस्पर्शोद्देशेन स्पर्श एव। स चानुपपन्नः, उद्देश्यविधेययोरैक्यात्। अतः स्पर्शपदं सुखविशेषजनकत्वं लक्षयति। स्पर्शान्तरवैलक्षण्यं च व्यङ्ग्यम्। एवमुत्तरत्रापीति बोध्यम् ॥१२७॥

गुणकीर्तनं लक्षयति—**विरहेति**। **विरहकालीना** वियोगकालिकी या **कान्ताविषयकप्रशंसा** प्रियाविषयिणी स्तुतिः तस्याः **प्रतिपादनमेव गुणकीर्तनम्** उच्यते। कान्ताविषयकेत्यत्र प्रियविषयकेत्युचितं द्वयोरपि तत्सम्भवात्। उदाहरति—**स्पर्श इति**। सखे! तस्याः प्रियायाः **स्तनतटस्पर्शः** कुचाग्रामर्शनम् **स्पर्शः** न तदितर इति भावः। तस्या **वक्त्रवीक्षणं** मुखावलोकनमेव **वीक्षणं** तस्याः **केलि-कलालापस्य** क्रीडायां मधुरभाषणस्य **समयः** काल एव **समयः** नेतरदिति भावः। अत्र द्वितीयस्पर्शवीक्षणसमयशब्दानामितरनिवृत्तिपूर्वकसुखोत्कर्षे तात्पर्यम्। परिसङ्ख्यालङ्कारः अनुष्टुब् वृत्तम् ॥१२७॥

**प्रियाश्रितकाल्पनिकव्यवहारः प्रलापः। कल्पनायाः कारणमन्तःकरणविक्षेपः। तस्य निदानमुत्कण्ठा। यथा--**

**अद्विसंदर्शनं चक्षुरद्विसंमीलनं मनः।**
**अद्विसंस्पर्शनः पाणिरद्य मे किं करिष्यति॥१२९॥**

---

**कामक्लेशेति।** नित्यानित्यवस्तुविवेकजन्यहेयताज्ञानवारणाय जनितान्तम्। यदुक्तं भरतः--

आसने शयने वापि न तिष्ठति न हृष्यति।
नित्यमेवोत्सुका च स्यादुद्वेगस्थानमेव तत्॥
चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन च।
तदेव कुर्यादत्यन्तमुद्वेगाभिनयेन च॥

**गरलेति।** "क्ष्वेडस्तु गरलं विषम्" इत्यमरः। कन्दस्य यथा द्रुमारम्भकत्वं तथा चन्द्रस्य दुःखारम्भकत्वमितिसूचनाय द्रुमेत्युक्तम्। पत्राद्यपेक्षया क्लेशाधिक्यहेतुत्वलाभाय कन्दमिति। करुणायां वारिजतादात्म्यारोपाद्वसन्ते तदुन्मूलकतया वारणतादात्म्यारोप इति परम्परितरूपकमेतत्। तथा च वसन्तस्यातिनिर्दयत्वं लभ्यते। अप्रतिहतसामर्थ्यसूचनाय भूपतेरिति। परिमाणतोऽल्पत्वलाभाय कृपाणीति स्त्रीत्वम्॥१२८॥

**प्रियेति।** रतिविषयविषयकत्वमर्थः। अन्तर्विक्षेपश्चित्तानवस्थानम्। "अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद् भृशम्" इति दर्पणः। उत्कण्ठालक्षणं कुवलयानन्दादावुपन्यस्तम्--

"सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते।
तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः॥

अत्र भरतः--

इहास्थित इहासीन इह चोपगतो मया।
इति तैस्तैर्विलपितैर्विलापं संप्रयोजयेत्॥
उद्विग्नात्यर्थमौत्सुक्यादरत्या च विलापिनी।
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता॥

अद्वीति। न विद्यते द्वयोः संवीक्षणं यस्य, "नञोऽस्त्यर्थानां वाच्यो वाचोत्तरपदलोपश्च" इति बहुव्रीहिः। द्विदर्शनाभावश्च नोभयदर्शनाभावप्रयुक्तः किन्तु तन्निदर्शनाभावप्रयुक्तः, तस्यैव प्रकृतोपयोगित्वात्। तथा च तदन्यदर्शनाभावमात्रे तात्पर्यम्। एवमुत्तरत्र व्याख्येयम्। तथा च तादृशप्रियविरहे कथं निर्वाहो भावीति भावः। इदं च सङ्गमपूर्वकविप्रलम्भाभिप्रायम्। भरतवाक्यस्य तत्साधारण्यात्। अत एव नीवीं हरेदित्यादि चित्रदर्शनमपि सङ्गमोत्तरविप्रलम्भकालीनमेव दर्शयिष्यते। क्वचित्तु "अर्धसम्मीलितं चक्षुः" इत्यादिः अर्धपदघटितः पाठः। तत्र तद्दर्शनकालेऽर्द्धमुकुलितत्वं बोध्यम्। मनसोऽपि सम्यक् तदालोकनस्पर्शनादावप्रवर्तकत्वादर्धसम्मीलितत्वोपचारः। पाणेरपि किञ्चिद्व्याजेन स्पशार्थं तदीयदिगभिमुखरूपमर्धसंस्पर्शनत्वं व्याख्येयम्। अत्र तु समागमानुत्तरविप्रलम्भावस्थापरत्वमप्युपपन्नम्॥१२९॥

उद्वेगं लक्षयति—कामेति। कामक्लेशेन मन्मथपीडया जनितम् उत्पादितं सकलविषयाणां रूपरसादीनां हेयतायाः अनुपादेयतायाः ज्ञानम् उद्वेगः। उदाहरति—गरलेति। हे विधातः! इन्दुबिम्बं चन्द्रमण्डलं गरलद्रुमस्य विषवृक्षस्य कन्दं मूलमिति यावत्। वसन्तः कुसुमाकरः करुणा कृपैव वारिजं कमलं तस्य वारणः गजः विनाशक इति भावः। रजनो निशा उद्दीपकत्वात् स्मरभूपतेः कामनृपस्य कृपाणो क्षुरिका विदारिकेत्यर्थः। अतः परं किं करणीयं मया किं कर्तव्यमिति भावः। अत्र किंशब्दादुद्वेगः प्रतीयते। विरोधाभासानुप्रासयोः संसृष्टिरलङ्कारः। मालभारणी च वृत्तम्॥१२८॥

प्रलापं लक्षयति—प्रियेति। प्रियाश्रितः प्रियमुद्दिश्य विहितः काल्पनिकः कल्पनासिद्धः व्याहारः उक्तिः "व्याहार उक्तिर्लपितम्" इत्यमरः। प्रलाप इत्युच्यते। तत्कारणं निर्दिशति—कल्पनायाः कारणं हेतुः अन्तःकरणस्य मनोबुद्धिचित्ताहङ्काराणां विक्षेपः विपर्यासः, तस्य विक्षेपस्य च निदानम् आदिकारणम् उत्कण्ठा प्राप्तोच्छेति यावत्। तामेवोदाहरति—अद्वीति। नास्ति द्वयोः परस्परं संवीक्षणं, यत्र तत् अद्विसंवीक्षणं अद्वितीयावलोकि मे चक्षुः न द्वयोः सम्मीलनं यत्र अद्विसम्मीलनं प्रियेतरभावनाहीनमितिभावः मे मनः नास्ति द्वयोः संस्पर्शनं यत्र अद्विसंस्पर्शनः प्रियेतरस्पर्शशून्यः मे पाणिः करः किं करिष्यति न जाने। काव्यलिङ्गालङ्कारः। अनुष्टुब् छन्दः॥१२९॥

**औत्सुक्यसन्तापादिकारितमनोविपर्याससमुत्थप्रियाश्रितवृथाव्यापार उन्मादः। स व्यापारः कायिको वाचिकश्चेति द्विविधः। कायिको यथा--**

**प्रतिफलममृतांशोः प्रेक्ष्य कान्तो मृगाक्ष्या**
**मुखमिति परिहासं कर्तुमभ्युद्यतोऽभूत्।**
**अथ शिथिलतवाचो मानमाशङ्क्य तस्याः**
**स्पृशति पुलकभाजा पाणिपङ्केरुहेण ॥१३०॥**

---

**औत्सुक्येति।** कारितान्तं विपर्यासे समुत्थान्तं च व्यापारे विशेषणम्। विपर्यासो व्याकुलत्वम्। "उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि" इति दर्पणः। यद्भरतः--

तत्सम्बन्धिकथां युङ्क्ते सर्वावस्था गतापि हि।
प्रद्वेष्टि वा परान् पुंसो यत्रोन्मादः स उच्यते॥
तिष्ठत्यनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम्।
रोदिति विहारकाले मान्द्यमिदं स्यात्तथोन्मादे॥

**प्रतिफलमिति।** साक्षादिन्दौ भ्रान्तिसम्भवेऽपि करस्पर्शाद्यसम्भवात्प्रतिफलमिति। रत्नमित्यादि गतमित्यर्थः। अमृतांशुपदं चाक्षुषात्मकमुखभ्रमयोग्यत्वार्थम्। मुखमितिज्ञानादित्यर्थः। यद्यप्यभ्युद्यतोऽभूदित्येवोक्तं तथापि परिहासवाक्यप्रयोगोऽप्यत्र विवक्षितः। अन्यथोत्तरार्धासङ्गतेः। परिहासे कृतेऽपि न वदतीति ज्ञानादेव मानशङ्कासम्भवात्। स्पृशतीति। वदनस्पर्शस्याप्यनुनयहेतुत्वात्। भ्रान्तिमदलङ्कारः। मुग्धत्ववारणाय शिथिलितवाच इति। पूर्वं परिहासकरणस्यानुभूतत्वात्॥१३०॥

उन्मादं लक्षयति--**औत्सुक्येति।** औत्सुक्यं कालातिपातासहिष्णुत्वं तेन **सन्तापादिना च कारितः** यो **मनोविपर्यासः** चित्तस्य व्याकुलत्वव्यापारः तस्मात् **समुत्थः** उत्पन्नः **प्रियाश्रितः** प्रियोद्देश्यकः **वृथा** निरर्थको **व्यापार उन्मादः।** तं द्विधा विभजते--**स चेति।** **स च व्यापारः** विक्षेपात्मक इत्यर्थः **कायिकः** देहचेष्टात्मकः **वाचिकः** वचनरूपः। आद्यमुदाहरति--**कायिक इति। प्रतिफलमिति।**

**वाचिको यथा—**

**किं रे विधो मृगदृशो मुखमद्वितीयं**
**कन्दर्प दृप्यसि दृगम्बुजमन्यदेव।**
**झाङ्कारमावहसि भृङ्ग तनुर्न तादृक्**
**कर्माणि धिक् क्व पुनरीदृशमीक्षणीयम् ।।१३१।।**

**किं रे इति।** "हीनसम्बोधने तु रे" इतिकोषाच्चन्द्रस्य नीचत्वं व्यङ्ग्यम्। रे चन्द्र किमस्तीति चन्द्रस्याक्षेपः, एतेनामर्षलाभः। अद्वितीयं स्वभिन्ननिरूप्यसादृश्यप्रतियोगित्वाश्रयत्वोभयाभाववदित्यर्थाद्गर्वलाभः। कन्दर्प दृप्यसि वारं वारं वेदनाजननादित्यसूया। दृगम्बुजं तस्या अन्यद्विलक्षणमेवेति हर्षः। अतिशयोक्तिभेदः। "प्रस्तुतस्य यदन्यत्वम्" इति प्रकाशोक्तेः। हे भृङ्ग! झङ्कारमव्यक्तध्वनिविशेषमावहसि करोषि इति विषादः, अन्यसम्बन्धिनी तनुस्तादृक् तदीयतनुतुल्या नेति तदलाभाद्दैन्यम्। कर्माणि तद्विरहजनकानि धिक् निन्द्यानि इति निर्वेदः। ईदृशं दर्शनीयं क्वेत्यौत्सुक्यम्। इति भावशबलत्वमलङ्कारः। अवान्तरवाक्यानां परस्परमनाकाङ्क्षत्वादुन्मादः। केचित्तु "चन्द्रस्य तन्मुखवृत्तिसादृश्यप्रतियोगित्वज्ञानजन्यदर्पखण्डनार्थं मृगदृश इति। किं दृप्यसीति तत्राप्यनुषङ्गात्।

**कान्तः** प्रियः **अमृतांशोश्चन्द्रमसः प्रतिफलं** प्रतिविम्बं **वीक्ष्य** अवलोक्य **मृगाक्ष्याः** कुरङ्गलोचनायाः **मुखमिति** मत्वेति शेषः। **परिहासं** केलिं हसे धातोः परिपूर्वकाद् घञ्, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति वाहुलकाद्दीर्घोऽपि। "द्रवकेलिपरीहासाः" इत्यमरः। **कर्तुम् अभ्युद्यतः** उद्युक्तः **अभूत्।** **अथ** अनन्तरं **शिथिलितवाचः** मौनमाश्रितायाः **तस्या मानमाशङ्क्य** प्रणयकोपं वितर्क्य **पुलकभाजा** रोमाञ्चितेन **पाणिपङ्केरुहेण** करकमलेन **स्पृशति** आमृशति। भ्रान्तिमानलङ्कारः। मालिनी छन्दश्च ।।१३०।।

द्वितीयं वाचिकविपर्यासमुदाहरति—**किं रे इति। रे विधो!** चन्द्र! **मृगदृशः** हरिणाक्ष्याः **मुखं** वदनम् **अद्वितीयम्** उपमानोपमेयरहितं। मत्सदृशं तन्मुखमिति मा गर्वं कृथा इत्यर्थः। **रे कन्दर्प!** मन्मथ! किमर्थं **दृप्यसि** दृप्तो भवसि तस्याः **दृगम्बुजं** नेत्रकमलम् **अन्यदेव** न तु त्वदायुधभूतमुत्पलमितिभावः। **रे भृङ्ग!**

**मदनवेदनासमुत्थकार्श्यसन्तापादिदोषो व्याधिः। यथा--**

**कोदण्डं विशिखा मनो निवसतिः कामस्य तस्या अपि**
**भ्रूवल्ली नयनाञ्चलं मनसि ते वासः समुन्मीलति।**
**इत्थं साम्यविधौ तयोः प्रभवति स्वामिस्तथा स्निह्यताम्**
**तन्वाना तनुतां क्रमादतनुतां नैषा यथा गच्छति ॥१३२॥**

---

कामस्याप्यहमुन्मादक इति ज्ञानादरविन्दरूपबाणवत्ताज्ञानाद्वा जातदर्पभङ्गार्थं दृगम्बुज इत्यादि। तदेवोन्मादकमरविन्दादधिकं चेत्यर्थः। भृङ्गस्यापि विशिष्टशरीराभावादाक्षेपः। त्वदीया तनुस्तादृग्विशिष्टा नेत्यर्थात्। तत्सम्पादं निन्दति-कर्माणि धिगिति। कामिनीदर्शनान्तरायहेतुत्वाद्" इत्याहुः ॥१३१॥

**मदनेति**। हेत्वन्तरजन्यतद्वारणाय समुत्थान्तम्। अभिलाषादिवारणाय विशेष्यम्। "व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः" इतिदर्पणः। भरतोऽप्याह--

सामदानादिसंयोगैः काम्यैः सम्प्रेषणैरपि।
सर्वैर्निराशीकरणाद् व्याधिः समुपजायते॥
मुह्यति हृदयं क्वापि प्रयाति शिरसि स्ववेदना तीव्रा।
न धृतिं चाप्युलभते हृष्टमेवं त्वभिनयेत्॥

**कोदण्डमिति**। कामस्य तावत्कार्मुकं बाणो मनोरूपनिवासस्थानं चेति त्रयं प्रसिद्धम्। तस्या अपि तत्स्थानीयं भ्रूरपाङ्गभङ्गे भवन्मनोरूपं वासस्थानं चेति त्रयं सम्पन्नम्। केचित्तु "भ्रूवल्लीनयनाञ्चलमिति समाहारद्वन्द्व" इत्याहुः। तन्न। प्रयोजनविरहात्। इतिप्रकारेण तयोः कामनायिकयोः साम्यविधौ सादृश्यविधाने प्रभवति। सिद्धे सति स्वामिन्निति तस्यास्तन्मात्राधीनत्वं व्यङ्ग्यम्। तथा स्नेहः क्रियताम् यथा तनुतां कार्श्यं क्रमात्तन्वाना विस्तारयन्ती, एतेन तनुत्वातिशयसूचनम्। अतनुतां शरीरविरहं गच्छति। उत्तरोत्तरमवयवविभागपरम्पराया अविच्छेदे शरीरविनयस्यैव सम्भावितत्वात्। अथ च सादृश्यस्य जातत्वादतनु तादात्म्यमपि सम्भावित-

मित्यर्थः। केचित्तु "स्वसाम्यक्रोधात्कामस्तस्याः प्राणापहरणोद्यम-मातनोति इति तत्प्रतिवन्धः क्रियताम्" इत्याहुः। यत्तु "एतस्या अप्यनङ्गत्वे तत्सहायः प्रसिद्धोऽनङ्गः कियतीं विरहबाधां न जन-यिष्यतीति" आहुः। तच्चिन्त्यम्। अतनुतामित्येतदस्वारस्यात्। साम्यस्याप्यसहने तादात्म्यसम्पादनार्थं प्रवृत्त्यनुपपत्तेः। तव प्रभवतीति पाठान्तरम्। तत्र तदीयभ्रूनेत्रभङ्ग्योः नायकसम्बन्धित्वं उत्काकाम-साम्यम्, तस्या मनसि ते वासश्चेति योज्यम्। वस्तुतस्तवाधिक्येऽपि, उक्तधर्माश्रयप्रयुक्तसाम्यविवक्षायामित्यर्थकतया विधिपदसार्थ-क्यम्। एवं च युवयोः साम्ये तस्या अतनुताद्रूप्यं त्वदपकर्षपर्यवसायीति तत्प्रतिबन्धो विधेय इति भावः। यत्तु "तस्या भ्रूवल्ली नयनाञ्चल-मनांसि क्रमेण कामस्य धनुर्बाणवासस्थलानि। तव तस्या मनसि वासोऽपि। अपिरेवकारार्थः। तयोर्वसत्योरित्यर्थः। तथा च भ्रूनेत्र-भङ्ग्योः काममात्रसम्बन्धादुपेक्ष्यत्वेऽपि मनसस्तवापि वासस्थान-तयोपेक्षानर्हत्वात्समागमसङ्केतदानेन तदाह्लादनीयम्" इति। तद-युक्तम् व्यवहितान्वयात् ॥१३२॥

भ्रमर! झङ्कारं गुञ्जनं किमर्थमावहसि धारयसे यतः तादृक् नायिकाया इव तनुः देहं न अन्या कापि नास्तीत्यर्थः। कर्माणि तत्सादृश्यान्वेषणपराणि तद्विरहजनकानि वा धिक् निन्दयानि, पुनः भूयः ईदृशं नायिकोपममित्यर्थः।। ईक्षणीयं दर्शनीयं रमणीयमिति यावत्। न किमपि नास्ति। भावशबलत्वमलङ्कारः (समञ्जसा द्रष्टव्या) वसन्ततिलका वृत्तम् ॥१३१॥

व्याधिं लक्षयति—मदनेति। मदनवदेना कामपीडा तत्समुत्थः तज्जन्यः यः सन्तापः देहकार्श्यादिरूपो दोषः स व्याधिरित्युच्यते। उदाहरति—कोदण्ड-मिति। यथा कामस्य कोदण्डं धनुः तथा तस्या नायिकाया अपि भ्रूवल्ली भृकुटि-लता यथा कामस्य विशिखः शरः तथा तस्या नयनाञ्चलं कटाक्षः। यथा कामस्य मनोनिवसतिः कामिनां मनसि वासः तथा तस्यास्ते नायकस्य मनसि वासः समुन्मीलति प्रकाशते। इत्थं तयोः कामनायिकयोः साम्यविधौ तुलनायां प्रभवति सति स्वामिन् हे नायक! तथा स्निह्यतां त्वया तथानुरज्यतां यथा क्रमात् शनैः तनुत्वं कृशत्वं तन्वाना वर्धयन्ती एषा नायिका अतनुतां न तनुः अतनुः तस्य भावो-ऽतनुता ताम् शरीराभावं कामरूपतां वा न गच्छति नैव प्राप्नोति। रूपकमलङ्कारः, शार्दूलविक्रीडितं वृत्तम् ॥१३२॥

विरहव्यथाविकारमात्रवेद्यजीवनावस्थानं जडता। यथा--

पाणिर्नीरवकङ्कणः स्तनतटी निष्कम्पमानांशुका
दृष्टिर्निश्चलतारका समभवन्निस्ताण्डवं कुण्डलम्।
कश्चित्रार्पितया समं कृशतनोर्भेदो भवेन्नो यदि
त्वन्नामस्मरणेन कोऽपि पुलकारम्भः समुज्जृम्भते ॥१३३॥

---

**विरहेति**। स्पष्टम्। "जडता हीनचेष्टत्वमङ्गानां मनसस्तथा" इति दर्पणः। भरत:--

पृष्टा न किञ्चिद्ब्रूते च न शृणोति न पश्यति।
हा कष्टवाक्यतूष्णीका जडतायां गतस्मृतिः॥
अकाण्ड (चेष्टिता ?) कारा तथा प्रशिथिलाङ्गका।
श्वासग्रस्तानना चैव जडताभिभवे भवेत्॥

**पाणिरिति**। वलयानां नीरवत्वं हस्तचेष्टाविरहेण परस्पराभिघातानुदयात्। स्तनांशुकस्य कम्पाभावः श्वासानां कण्ठमात्रवृत्तित्वात्। एतेन दशमी दशापि जातप्रायैवेति उक्तम्। साक्षात्करणस्य रसानुगुण्यविरहेण रसदशात्वाभावात्। तदुक्तं दर्पणे--

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते।
जातप्रायं तु तद्वाच्यं चेतसा काङ्क्षितं तथा॥

भरतोऽप्याह--

सर्वैः कृतैः प्रतीकारैर्यदि नास्ति समागमः।
कामाग्निना प्रदीप्ताया जायते मरणं ततः॥
एवं स्थानानि कार्याणि कामतन्त्रपरीक्षया।
अप्राप्तौ यानि काम्यस्य वर्जयित्वा तु नैधनम्॥

काम्यस्य रतिविषयस्य, नायकस्य नायिकाया वेत्यर्थः। तारकाया निश्चलत्वं विषयाभिमुख्याभावात्। निस्ताण्डवपदप्रतियोगिनः स्वसत्तादशायां मनोहरत्वसूचनार्थो भवन्नामश्रवणजन्यरोमाञ्चदर्शनादेव जीवनानुमित्या अनुकार्यनायिकायाश्चित्रार्पिततत्प्रकृत्यपेक्षया भेदः प्रतीयत इत्युत्तरार्द्धार्थः। चित्रार्पितया समं भेद इत्यत्र प्रतियोगित्वस्यैव सहपदेनोक्तत्वात्। दर्पणे--

**निधनस्यामङ्गलत्वान्नोदाहृतिरुदाहृता।**

**स्वप्नचित्रसाक्षाद्भेदेन दर्शनं त्रिधा। स्वप्नदर्शनं यथा--**

**मुक्ताहारं न च कुचगिरेः कङ्कणं नैव हस्तात्**
**कर्णात्स्वर्णाभरणमपि तथा नीतवान्नैव तावत्।**
**अद्य स्वप्ने वकुलमुकुलं भूषणं सन्दधानः**
**कोऽयं चौरो हृदयमपहरत्तन्वि तत्र प्रतीमः ॥१३४**

---

श्रवणाद्दर्शनाद्वापि मिथ्यासंरूढरागयोः।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते॥
श्रवणं तु भवेत्तत्र दूतवन्दिसखीमुखात्।
इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम्॥१३३॥

तत्र स्वप्नदर्शनमाह--**मुक्तेति**। एतेन शुद्धत्वं व्यङ्ग्यम्। हारेति महार्घ्यत्वम्। स्वसन्निकृष्टत्वलाभाय कुचेति। चोरसञ्चारयोग्यत्वार्थं गिरेरिति। अनभिज्ञेन तत्स्वरूपानवबोधादनुपादानमित्यत आह- कङ्कणमिति। दुर्बलेन पुनः स्थितस्य दुःखमोचनीयस्य च कङ्कणस्य

जडतां लक्षयति--**विरहेति**। **विरहव्यथाया** वियोगजन्यपीडाया **विकारमात्रेण वेद्यं** ज्ञातव्यं **जीवनावस्थानं** जीवनधारणं यस्यामवस्थायां **सा जडता**। उदाहरति--**पाणिरिति**। **पाणिः** करः **नीरवकङ्कणः** वलयध्वनिरहितः **स्तनतटी** कुचाग्रं **निष्कम्पमानं** श्वासयोगेनोद्भूतकम्पनरहितं **अंशुकं** वसनं यस्यास्तादृशी, **दृष्टिः** वीक्षणं **निश्चले तारके** यस्यां सा निस्पन्दकनीनिका, **कुण्डलं च निस्ताण्डवं** नर्तनरहितं देहलौल्याभावात् इति भावः। **चित्रार्पितया** चित्रलिखितया **समं** साकं **कृशतनोः** कृशाङ्ग्याः नायिकायाः **को भेदः भवेत् यदि त्वन्नामश्रवणेन** तवाभिधानाकर्णनेन **कोऽपि** विलक्षणः **पुलकारम्भः** रोमाञ्चोद्गमः **न समुज्जृम्भते** नोल्लसति। समुच्चयोऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥१३३॥

दशमदशोदाहरणानिरूपणं प्रतिपादयति--**निधनेति**। स्पष्टम्।

अभिलाषकारणत्वाद्दर्शनं विभजते--**स्वप्नेति**। **दर्शनं** कामिनोः स्वप्रियस्यावलोकनं **स्वप्ने चित्रे** आलेख्ये **साक्षात्** प्रत्यक्षमेवेति **भेदेन त्रिधा** भवतीत्यर्थः। स्वप्नदर्शनमुदाहरति--**मुक्ताहारमिति**। **तन्वि**। **अद्य स्वप्ने** निद्रायां **वकुलमुकुलं** केसरकलिका **भूषणं** आभरणं **सन्दधानः** धारयन् कश्चित् **मुक्ताहारं** मौक्तिकस्रजं

चित्रदर्शनं यथा—

नीवीं हरेदुरसि संविलिखेन्नखेन
दन्तच्छदं च दशनेन दशेदकस्मात्।
इत्थं पटे विलिखितं दयितं विलोक्य
बाला पुरेव न जहार विहारशङ्काम् ॥१३५॥

---

गृहीतुमशक्यत्वादाह—कर्णादिति। स्वर्णस्य सर्वैरुपादेयत्वज्ञानात्। पृष्ठतोऽपि स्थित्वा तदपहारसम्भवादित्यर्थः। "स्वप्नो निद्रामुपेतस्य विषयानुभवश्च यः" इति दर्पणः। सुवर्णाद्यभाववत्त्वलाभाय वकुलेति। मनोहरत्वं कुञ्जनिवासप्रियत्वं च व्यङ्ग्यम्। सन्दधानो धारयन्नित्याहुः। वस्तुतो मत्कर्णे योजयन्नित्यर्थः, संशब्दस्वरसात्। तथा च तद्दशायां कर्णाभरणापहारस्य सम्भावितस्य सङ्गतिः। हृदयस्यान्तर्गतस्य, सन्निकृष्टस्यामूर्तस्य चापहारे आश्चर्यम्। पक्षे स्वमात्रविषयकज्ञानवत्त्वसम्पादनमेवापहारः। तन्वीति सखीसम्बुद्धिः। तं चोरं न प्रतीमः संज्ञानादिकं न जानीमः। समागमोपायप्रवृत्तौ तत्प्रकारकधिय एवापेक्षितत्वादिति भावः। इन्द्रजालदर्शनमप्यत्रैवान्तर्भूतमिति विवक्षितम्। तद्वृत्तिचक्षुःसंयोगानपेक्षत्वस्य साधारण्यात्। चित्रस्य च लेखाविशेषरूपत्वात्पृथग्भावेनोपपत्तेः ॥१३४॥

**नीवीमिति**। हरेदित्यादावाशङ्कायां लिङ्। हरणमुन्मोचनम्, विलिखेत्सक्षतं कुर्यात्। तेन काठिन्यसूचनम्। "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः। दशेद् व्रणयेत्। अकस्मादिति मदनुमतिव्यतिरेकेणापीत्यर्थः। इत्थमेवंरूपां विहारशङ्कां केलीभयं पुरेव साक्षाद्दर्शनसमय इव। केचित्तु "पुरेवेत्यस्य नीवीं हरेदित्यादावन्वय"

कुचगिरेः स्तनाद्रेः उन्नतादित्यर्थः। न च हस्तात् कङ्कणं वलयं नैव, अपि वा अथवा कर्णात् श्रोत्राद् स्वर्णाभरणं कनककुण्डलादि तावत् नैव नीतवान् किन्तु हृदयं चित्तं ममेति शेषः। अहरत् हृतवान् अयं चौरः पाटच्चरः कः तन्न प्रतीमः नैव जानीमः। भूषणादि विहाय हृदयमात्रहारकत्वं वैलक्षण्यमस्येति भावः। अतिशयोक्तिरलङ्कारः मन्दाक्रान्ता वृत्तम् ॥१३४॥

**साक्षाद्दर्शनं यथा—**

**चेतश्चञ्चलतां त्यज प्रियसखि व्रीडे न मां पीडय**
**भ्रातर्मुञ्च दृशौ निमेष भगवन् काम क्षणं स्थीयताम्।**
**बर्हं मूर्धनि कर्णयोः कुवलयं वंशं दधानः करे**
**सोऽयं लोचनगोचरो भवति मे दामोदरः सुन्दरः।।१३६।।**

---

इत्याहुः। तन्न। इत्थमिति चिन्तास्वरूपपरामर्षकेण व्यवहितस्य चिन्तास्वरूपघटकैः सममन्वयानुपपत्तेः। बालेति शङ्कार्हत्वसूचनम्। साक्षात्प्रियचित्रयोरत्यन्तसारूप्येण भेदानवगाहेन तात्पर्यम्।।१३५।।

**साक्षादिति**। यद्विषयकोऽनुरागस्तद्विषयकमित्यर्थः। **चेत इति**। ज्ञानमात्रहेतुतया प्रथमं निर्देशः। चञ्चलतामिति। तस्यान्येन्द्रियसंयोगे चक्षुःसंयोगाभावे चाक्षुषमनुपपन्नमेवेत्यत आह—व्रीडे इति। न-पीडय तत्संयोगानुकूलचक्षुर्व्यापारविमुखीं मा कार्षीरित्यर्थः। प्रिय-सखीति। सदासाहचर्यात्। तथा च प्रियसम्भोगसमये सख्या इव इदानीं तवाप्यपसरणमेव युक्तमिति भावः। तथापि प्रतिबन्धकसत्त्वे कार्यानुत्पत्तिरेवातो भ्रातरित्यादि। तेन सुखाधानेच्छा व्यङ्ग्या।

चित्रदर्शनमुदाहरति—**नीवीमिति**। अयं पुरा इव पूर्वं विहारकाले यथाऽकरोत् तथैव **नीवीं** वसनग्रन्थिं **हरेत्** **नखेन** करणेन **उरसिजं** स्तनं **विलिखेत्** तथा **अकस्मात्** सहसा **दशनेन** दन्तेन **दन्तच्छदं** अवरोष्ठं न **दशेत्**। **इत्थम्** एवं **पटे विलिखितं** चित्रार्पितं **दयितं** प्रियतमं **विलोक्य बाला** मुग्धा **विहारशङ्कां** सम्भोगातङ्कं पूर्वमनुभूतमिति यावत्। न **जहार** नात्यजत्। भ्रान्तिमदलङ्कारः वसन्ततिलका च वृत्तम्।।१३५।।

साक्षाद्दर्शनमुदाहरति—**चेत इति**। हे **चेतः**! मदीयमानस ! **चञ्चलतां** चपलत्वं **त्यज** जहीहि **प्रियसखि व्रीडे** त्रपे **मां न पीडय भ्रातः** वन्धो **निमेष** ! पक्ष्मपात ! **मे दृशौ** नयने **मुञ्च** त्यज **भगवन्** समर्थ **काम** ! मदन **क्षणं** कियत्कालं **क्षम्यताम्** मृष्यतामितियावत्। यतः **मूर्धनि** मस्तके **बर्हं** मयूरपिच्छं **कर्णयोः कुवलयं** नीलोत्पलं **करे** हस्ते **वंशं** वेणुं **दधानः** धारयन् **सुन्दरः** रमणीयः **अयं दामोदर** एष श्रीकृष्णः **मे** मम **लोचनगोचरः** नयनविषयः **भवति** जायते। काव्यलिङ्गमलङ्कारः शार्दूलविक्रीडितं वृत्तम्।।१३६।।

माध्वीकस्यन्दसन्दोहसुन्दरीं रसमञ्जरीम्।
कुर्वन्तु कवयः कर्णभूषणं कृपया मम ॥१३७॥
तातो यस्य गणेश्वरः कविकुलालङ्कारचूडामणिः
देशो यस्य विदेहभूः सुरसरित्कल्लोलकिर्मीरिता।
पद्येन स्वकृतेन तेन कविना श्रीभानुना योजिता
वाग्देवीश्रुतिपारिजातकुसुमस्पर्द्धाकरी मञ्जरी ॥१३८॥

इति श्रीभानुदत्तकविविरचिता
रसमञ्जरी समाप्ता।

—०—

---

"अक्षिपक्ष्मणोः संयोगहेतुः कर्मविशेषो निमेष" इत्युदयनाचार्याः। ननु कामस्य दर्शनेच्छाजनकरत्याधायकतया प्रकृतानुकूल्यमेवेति चेत्। सत्यम्। 'मूर्च्छादिरूपदशां मा कृथाः' इत्येतदर्थं प्रार्थनौचित्यात्। लोचनगोचरत्वं नेत्रजन्यज्ञानविषयत्वात्। दर्शनीयत्वप्रयोजकमाह-सुन्दर इति। तेन न समाप्तपुनरात्तत्वशङ्का, तदनेन शृङ्गाराधिदैवतभवत्सङ्कीर्तनेन ग्रन्थान्ते मङ्गलमप्याचरितम्। तदुक्तं महाभाष्ये—"मङ्गलादीनि मलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते आयुष्मत्पुरुषाणि भवन्त्यध्येतारश्च सिद्धार्था यथा स्युः" इति ॥१३६॥

**माध्वीकेति**। माधुर्यपरमेतत्। स्यन्दपदं प्रसादसूचकम्। सर्वावच्छेदेन तल्लाभाय सन्दोहेति। पक्षे माध्वीकं मकरन्दः तस्य स्यन्दः प्रसवः प्रस्यन्दमानं माध्वीकमितियावत्। तेन सुन्दरी रमणीया। सुन्दरशब्दस्य गौरादित्वान्ङीष्। केचित्तु "माध्वीकस्यन्दस्य सन्दोहो यस्या इति बहुव्रीहिः। सा चासौ सुन्दरी चेति कर्मधारय" इत्याहुः। कवयः सहृदयाः। ममेति विषयत्वं षष्ठ्यर्थः, मद्विषयकयेत्यर्थः। विनयप्रदर्शनार्थं चैतत्। उपादेयत्वप्रयोजकरूपस्य पूर्वार्द्धेऽभिहितत्वात्। मुख्यापि मञ्जरी गुणाभिज्ञैः कर्णावतंसीक्रियत इतिभावः।

**तात इति**। पितृसद्भावमात्रस्य सर्वसाधारण्येन प्रतिष्ठानावहत्वादाह। कवीति। काव्यकर्तृपण्डितोभयपरम्। यत्किञ्चित्तदपेक्षोत्कर्षमात्रवारणाय कुलेति। वस्तुत उत्कर्षेऽपि तद्वत्त्वेन प्रसिद्धत्वं न स्यादितिशङ्कावारणाय अलङ्कारेति। चूडामणिपदेन स्वरूपयोग्यतामात्रलाभात्, धारणाभावदशायामपि तद्व्यवहारसत्त्वात्। देशोत्कर्षार्थमाह—विदेहेति। "जनकी ह वैदेहो बहुदक्षिणेन यज्ञेनेजे" इत्यादि श्रुतिप्रसिद्ध इत्यर्थः। सुरसरिद् गङ्गा तस्याः कल्लोलैर्महातरङ्गैः किर्मीरिता विचित्रिता, स्वकीयरूपेण परम्परया तत्र रूपान्तरवत्तासम्पादनात्। देशान्तरापेक्षयोत्कर्षाज्ञानाच्च। तथा च महाभारते—

ते देशास्ते जनपदा आश्रमास्ते च पर्वताः।
येषां भागीरथी गङ्गा मध्ये याति सरिद्वरा॥

पद्येनेत्येकत्वं जात्यभिप्रायम्। उदाहरणानां ग्रन्थान्तरीयत्ववारणाय—स्वकृतेनेति। पित्रुत्कर्षमात्रं न ग्रन्थगौरवहेतुरतः कविनेति। श्रीपदं विद्याजन्यप्रकर्षविशेषपरम्। तद्वतेत्यर्थः। उक्तं च भट्टपादैः "सौन्दर्यलावण्यमिति स्त्रीविषयमेतत् विदुषां तु पदवाक्यप्रमाणोदगारि मुखं शोभते" इति। ग्रन्थान्तराद्विशेषमाह—वाग्देवीति। शब्दस्येन्द्रियान्तरानवगम्यत्वात् श्रुतीति। सर्वफलप्रदत्व-

ग्रन्थमुपसंहरन् कवीनभ्यर्थयते—**माध्वीकेति**। **माध्वीकस्य** मधुनः यः **स्यन्दसन्दोहः** प्रस्रवसमूहः तेन **सुन्दरीं** मनोहरां **मम** मत्कृतामित्यर्थः। **रसमञ्जरी** रसपूर्णां कुसुमवल्लरीमिव माधुर्यरसपूर्णां रसमञ्जर्याख्यां रचनां **कवयः** सहृदयाः **कृपया कर्णभूषणं** श्रोत्रालङ्कारं श्रुतिविषयं च **कुर्वन्तु**। उपमाध्वनिः, काव्यलिङ्गमलङ्कारः अनुष्टुब् वृत्तम्॥१३७॥

स्वपरिचयेन ग्रन्थमवसाययति—**तात इति**। **कवीनां कुलानि** तेषामलङ्कारास्तेषां **चूडामणिः** कविसमाजालङ्करणे शिरोरत्नमिव मुख्यतमः **गणेश्वरः** तदाख्यः **यस्य तातः** पिता, **सुरसरितः** गङ्गायाः **कल्लोलैः** वीचीभिः **किर्मीरिता** चित्रिता "चित्रं किर्मीरकल्माष" इत्यमरः। **विदेहभूः** मिथिलामही "विदेहमिथिले समे" इति हैमः। **यस्य देशोऽ**भिजनस्थानम् अस्तीति शेषः। **तेन श्रीभानुना**

व्यञ्जनाय पारिजातेति। मृदुत्वसूचनाय कुसुमेति। स्पर्द्धाचैक-कार्यकरित्वात्। "कृञो हेतुताच्छील्यानुलोम्येष्विति" ट प्रत्ययः। मञ्जरीत्येकदेशोपादानमिति शिवम्॥१३७॥

श्रीमन्महीमहितवत्तदसीमधीमन-
मूर्द्धन्यताकलनसङ्गतधन्यताकः।
**लक्ष्मीधरो** यमुदसूत मुदं प्रसूतं
**विश्वेश्वरस्य** कृतिरस्य चिरस्य लोके॥

॥ समाप्ता चेयं रसमञ्जरीव्याख्या॥



**कविना** भानुदत्ताभिधेन विपश्चिता **स्वकृतेन** स्वनिर्मितेन **पद्येन** पद्यजातेनेत्यर्थः। **वाग्देवीश्रुतौ** शारदाकर्णे यः **पारिजातकुसुमः** कल्पतरुप्रसूनः तेन **स्पर्द्धाकरी** तत्सदृशीतियावत्। **मञ्जरी** रसमञ्जरी **योजिता** विरचिता **चिरं जयत्विति** भावः। निदर्शनालङ्कारः, शार्दूलविक्रीडितं वृत्तम्॥१३८॥

साहित्याचार्य-पाण्डेय-श्रीजनार्दनशास्त्रिणा।
कृता सुखावबोधेयं विद्वन्मोदावहा भवेत्॥१॥

विश्वेश्वरादिविबुधैर्विवृतेऽपि ग्रन्थे
नोपेक्षणीय इह चैष मम प्रयासः।
मज्जत्करीन्द्रविपुलेऽम्बुनिधावगाधे
किं नैव चापलपराः शफराः स्फुरन्ति॥२॥



# परिशिष्टम्

## 'क.'—रसमञ्जरीस्थपद्यानां वर्णानुक्रमणी

## 'ख'—रसमञ्जरीपद्येषु प्रयुक्तानां छन्दसां लक्षणानि

शार्दूलविक्रीडितम्—सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।

ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

उदा०—१, ४, ५, १०, १३, १५, १७-२०; २२, २६, ३१, ३२, ३९, ४२, ४६, ५२-५४, ५६, ५७, ५९, ६०, ६२, ६४, ६५, ६८-७०, ७२-७५, ८१-८३, ८६, ८७, ९०, ९१, ९७, ९९-१०१, १०४, १०५, १०७, १०८, ११०, ११६-११८, १२१, १२६, १३२, १३३, १३६, १३८।

वक्रम्— पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
गुरु षष्ठं तु पादानां शेषेष्वनियमो मतः॥
प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्रलक्षणम्॥

उदा०—२, ६।

पृथ्वी— ज सौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः।

। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

उदा०—३, ११, ४८, ६६, ८९।

वसन्ततिलका— उक्ता वसन्ततिलका तभजा जगौ गः।

ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ

उदा०—७, ९, १४, २८, ३०, ३६, ४०, ४५, ४७, ५५, ६१, ७६; ८४, ८५, ८८, ९४-९६, १०२, १०३, १०६, ११४, ११९, १२०, १३१, १३५।

पुष्पिताग्रा— अयुजि नयुग रेफतो यकारो युजितु नजौ

। । । । । । ऽ । ऽ । ऽ ऽ । । । । ऽ

जरगाश्च पुष्पिताग्रा।

। । ऽ । ऽ । ऽ ऽ

उदा०—८, २३, ३४, ३५, ४९, ५०, ७१, ७७, ९२, १०९, ११५।

इन्द्रवज्रा— स्यादिन्द्रवजा यदि तौ जगौगः।

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

उदा०—१२।

मालिनी— न न म य य युतेयं मालिनी भोगिलोकैः।

। । । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

उदा०—१६, ४३, ५८, १३०।

शिखरिणी— रसै रुद्रैश्छिन्ना यमनसमला गः शिखरिणी।
।ऽ ऽऽऽऽ ।।।।।ऽ ऽ ।।।ऽ

उदा०—२१।

उपगीतिः— आर्याद्वितीयकेऽर्द्धे यद् गदितं लक्षणं तत्स्यात्।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते॥

उदा०—२४, २५, ४४, ९८, १२४।

गीतिः— आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः॥

उदा०—२७, १२२।

रथोद्धता— रात्परै रनलगै रथोद्धता।
ऽ।ऽ ।।।ऽ ।ऽ।ऽ

उदा०—२९।

पथ्यावक्त्रम्—

उदा०—३३, ३७, ६७, ११२, १२७।

मालभारिणी— विषमे ससजा यदा चेत्समरा येन तु मालभारिणीयम्
।।ऽ ।।ऽ।ऽ ।ऽऽ।ऽ ऽ। । ऽ।ऽऽऽ

उदा०—३८, ५१, ७८, १२८।

मन्दाक्रान्ता— मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्।
ऽऽऽऽ।।।।।ऽ ऽ। ऽ ऽ।ऽऽ

उदा०—४१, ९३, ११३, १२३, १३४।

उपजातिः— अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।

उदा०—६३, ७९, १११, ११५।

स्वागताः— स्वागतारनभगैर्गुरुणा च
ऽ।ऽ।।।ऽ।।ऽऽ

उदा०—८०

